शोभागचन्द्र ग्रन्थमाला नं. २

॥ श्री जिनाय नमः ॥



उपाध्यायजी श्रीमद्विनयविजयजित्प्रणीता

# ॥ श्रीकल्पसूत्रसुबोधिकाटीका ॥

एष ग्रंथः श्रीजामनगरनिवासिश्रेष्ठिवर्यसोभाग्यचन्द्रस्य धर्मपत्न्या गंगास्वरूपिण्या केसराख्यया स्वभर्तु पुण्यार्थं मुद्रापयित्वा प्रसिद्धिं कारापितमस्ति ॥

विक्रम संवत् १९८० वीर संवत् २४५० सने १९२३

मूल्यम् रु ६-०-०

स्थिताः साधव श्रेयोनिमित्तं आनंदपुरे सभासमक्ष वाचनादनु संघसमक्षं पञ्चभिर्दिवसैर्नवभिः क्षणैः श्रीकल्पसूत्र वाचयति । तत्र कल्पशब्देन साधूनां आचारः कथ्यते, तस्य च कल्पस्य दशभेदास्तद्यथा– 'आचेलक्कु १ देसिअ २ सिज्जायर ३ रायपिंड ४ किइकम्मे ५ । वय ६ जिट्ठ ७ पडिक्कमणे ८ मासं ९ पज्जोसवणकप्पे १० ॥ १ ॥ व्याख्या–आचेलक्यमिति न विद्यते चेलं वस्त्रं यस्य स अचेलकस्तस्य भाव आचेलक्यं विगतवस्त्रत्वं इत्यर्थः. तच्च तीर्थेश्वरानाश्रित्य प्रथमांतिमजिनयोः शक्रोपनीतदेवदूष्यापगमे सर्वदा अचेलकत्वं, अन्येषां तु सर्वदा सचेलकत्वं "यच्च किरणावलीकारेण चतुर्विंशतेरपि जिनानां शक्रोपनीतदेवदूष्यापगमे अचेलकत्वमुक्तं तच्चिंत्यं । उसभेण अरहा कोसलिए संवच्छरं साहिअं चीवरधारी होत्थ त्ति जंबूद्वीपप्रज्ञप्तिवचनात्" सक्को अ लक्खमुल्लं, सुरदूसं ठवइ सव्वजिणखंधे । वीरस्स वरिसमहिअं, सयावि सेसाण तस्स ठिइत्ति" सप्ततिशतस्थानकवचनाच्चेति ज्ञेयम् । साधून् आश्रित्य च अजितादिद्वाविंशतिजिनतीर्थसाधूनां ऋजुप्राज्ञानां बहुमूल्यविविधवर्णवस्त्रपरिभोगानुज्ञासद्भावेन सचेलत्वमेव केषांचिच्च श्वेतमानोपेतवस्त्रधा-

॥ श्री जिनाय नमः ॥

—श्रीमद्विनयविजयोपाध्यायविरचिता—

# ॥ श्रीकल्पसूत्रसुबोधिकावृत्तिः ॥

प्रणम्य परमश्रेय-स्करं श्रीजगदीश्वरम् ॥ कल्पे सुबोधिकां कुर्वे । वृत्तिं बालोपकारिणीम् ॥१॥
यद्यपि बह्व्यष्टीकाः । कल्पे संत्येव निपुणगणगम्याः ॥ तदपि ममायं यत्नः । फलेग्रहिः स्वल्पमति-
बोधात् ॥ २ यद्यपि भानुद्युतयः । सर्वेषां वस्तुबोधिका बह्व्यः ॥ तदपि महीगृहगानां । प्रदीपिके-
वोपकुरुते द्राग् ॥३॥ नास्यामर्थविशेषा । न युक्तयो नापि पद्यपांडित्यम् ॥ केवलमर्थव्याख्या । वित-
न्यते बालबोधाय ॥ ४ ॥ हास्यो न स्यां सद्भिः । कुर्वन्नेतामतीक्ष्णबुद्धिरपि ॥ यदुपदिशंति त एव
हि । शुभे यथाशक्ति यतनीयम् ॥ ५ ॥

अत्र हि पूर्वं नवकल्पविहारक्रमेणोपागते योग्यक्षेत्रे सांप्रतं च परंपराय गुर्वादिष्टे क्षेत्रे चतुर्मासी-

रित्वेन अचेलकत्वमपि इति अनियतस्तेषा अयं कल्पः। श्रीऋषभवीरतीर्थयतीनां च सर्वेषां अपि श्वेतमानोपेतजीर्णप्रायवस्त्रधारित्वेन अचेलकत्वमेव।

ननु! वस्त्रपरिभोगे सत्यपि कथ अचेलकत्वं इति चेदुच्यते, जीर्णप्रायतुच्छवस्त्रे सत्यपि अवस्त्रत्वं सर्वजनप्रसिद्धमेव। तथाहि—कृतपोतिका नदीमुत्तरंतो वदंति अस्माभिर्नग्नीभूय नदी उत्तीर्णा इति। तथा सत्यपि वस्त्रे तंतुवायरजकादींश्च वदन्ति शीघ्रमस्माक वस्त्रं देहि वय नग्ना' स्म इति। एवं साधूनां वस्त्रसद्भावेऽपि अचेलकत्वं इति प्रथमः ॥ १ ॥

तथा' उद्देसिअत्ति' उद्देशिक आधाकर्मिक इत्यर्थ., साधुनिमित्तं कृतं अशनपानखादिमस्वादिमवस्त्र पात्रवसतिप्रमुखं तच्च प्रथमचरमजिनतीर्थे एकं साधुं, एकं साधुसमुदाय, एकं उपाश्रयं वा आश्रित्य कृतं तत्सर्वेषां साध्वादीनां न कल्पते। द्वाविंशतिजिनतीर्थे तु य साध्वादिकमाश्रित्य कृतं तत् तस्यैव अकल्प्यं अन्येषां तु कल्पते इति द्वितीय. ॥ २ ॥

तथा' सिज्जायरत्ति' शय्यातरो वसतिस्वामी तस्य पिंडः अशन १ पान २ खादिम ३ स्वादिम ४ वस्त्र

५ पात्र ६ कंबल ७ रजोहरण ८ सूची ९ पिप्पलक १० नखरदन ११ कर्णशोधनक १२ लक्षणो द्वादशप्रकारः सर्वेषां जिनानां तीर्थेषु सर्वसाधूनां न कल्पते अनेषणीयप्रसंगवसतिदौर्लभ्यादिबहुदोषसंभवात् । अथ यदि साधवः समग्रां रात्रिं जाग्रति प्रातः प्रतिक्रमणं च अन्यत्र कुर्वन्ति तदा मूलोपाश्रयस्वामी शय्यातरो न भवति यदि च तत्र निद्रायंति प्रतिक्रमणं च अन्यत्र कुर्वन्ति तदा द्वौ अपि शय्यातरौ भवतः । तथा तृणडगलभस्ममल्लकपीठफलकशय्यासंस्तारकलेपादिवस्तूनि चारित्रेच्छुः सोपधिकः शिष्यश्च शय्यातरस्यापि ग्रहीतुं कल्पते इति तृतीयः ॥ ३ ॥

'रायपिंडत्ति' सेनापति १ पुरोहित २ श्रेष्ठि ३ अमात्य ४ सार्थवाहलक्षणैः पंचभिः सह राज्यं पालयन् मूर्धाभिषिक्तो यो राजा तस्य अशनादि चतुष्कं ४ वस्त्रं ५ पात्रं ६ कंबलं ७ रजोहरणं ८ चेति अष्टविधः पिंडः प्रथमचरमजिनसाधूनां निर्गच्छदागच्छत्सामन्तादिभिः स्वाध्यायव्याघातस्यापशकुनबुध्ध्या शरीरव्याघातस्य च संभवात् खाद्यलोभलघुत्वनिंदादिदोषसंभवाच्च निषिद्धः, द्वाविंशतिजिनसाधूनां तु ऋजुप्राज्ञत्वेन पूर्वोक्तदोषाभावेन राजपिंडः कल्पते इति चतुर्थः ॥ ४ ॥

'किइकम्मत्ति' कृतिकर्म वंदनक तत् द्विधा अभ्युत्थानं द्वादशावर्त्तं च, तत्सर्वेषां अपि तीर्थेषु साधुभिः परस्परं यथादीक्षापर्यायेण विधेय । साध्वीभिश्च चिरदीक्षिताभिरपि नवदीक्षितोऽपि साधुरेव वंद्य पुरुषप्रधानत्वात् धर्मस्य इति पंचमः ॥ ५ ॥

'वयत्ति' व्रतानि महाव्रतानि तानि च द्वाविंशतिजिनसाधूनां चत्वारि, यतस्ते एवं जानन्ति यत् अपरिगृहीताया. स्त्रिया भोगासंभवात् । स्त्री अपि परिग्रह एवेति परिग्रहे प्रत्याख्याते स्त्री प्रत्याख्यातेव प्रथमचरमजिनसाधूना तु तथाज्ञानाभावात् पंच व्रतानि इति षष्ठ. ॥ ६ ॥

'जिट्ठत्ति' ज्येष्ठो रत्नाधिकः स एव कल्पो वृद्धलघुरव्यवहार इत्यर्थः, तत्र आद्यांतिमजिनयतीनां उपस्थापनात प्रारभ्य दीक्षापर्यायगणना, मध्यमजिनयतीनां च निरतिचारचारित्रत्वाद् दीक्षादिनादेव । अथ पितापुत्रमाताढुहितृराजामात्यश्रेष्ठिवणिक्पुत्रादीनां सार्द्धं गृहीतदीक्षाणां उपस्थापने को विधि. ? उच्यते-यदि पित्रादय. पुत्रादयश्च समकमेव षड्जीवनिकायाध्ययनयोगोद्वहनादिभिर्योग्यतां प्राप्तास्तदा अनुक्रमेणैवोपस्थापना । अथ स्तोक अंतरं तदा कियद्विलम्बेनापि

पित्रादीनामेव प्रथममुपस्थापना, अन्यथा पुत्रादीनां वृद्धत्वेन पित्रादीनां अप्रीतिः स्यात्। तथा पुत्रादीनां सप्रज्ञत्वेन अन्येषां निष्प्रज्ञत्वेन महदंतरं तदा स पित्रादिरेवं प्रतिबोध्यः, भो महाभाग! स प्रज्ञोऽपि तव पुत्रः अन्येभ्यो बहुभ्यो लघुर्भविष्यति, तव पुत्रे ज्येष्ठे तवैव गौरवं, एवं प्रज्ञापितः स यदि अनुमन्यते तदा पुत्रादिः प्रथमं उपस्थापनीयः, नान्यथा इति सप्तमः ॥ ७ ॥

'पडिक्कमणेत्ति' अतिचारो भवतु मा वा परं श्रीऋषभवीरसाधूनां उभयं कालं अवश्यं प्रतिक्रमणं कर्तव्यमेव, शेषजिनमुनीनां च दोषे सति प्रतिक्रमणं, नान्यथा। तत्रापि मध्यमजिनयतीनां कारणसद्भावेऽपि दैवसिकरात्रिके एव प्रायः प्रतिक्रमणे न तु पाक्षिकचातुर्मासिकसांवत्सरिकाणि। तथा चोक्तं सप्ततिशतस्थानकग्रंथे—देसिअ १ राइय २ पक्खिय ३ चउमासिय ४ संवच्छरीय ५ नामाउ। दुण्हं पण पडिक्कमणा, मज्झिमगाणं तु दो पढमा ॥ १ ॥ तं दुण्हं सया दुकालं इयराणं कारणे इअ मुणिणो इति अष्टमः ॥ ८ ॥

'मासत्ति' आद्यान्त्यजिनयतीनां मासकल्पमर्यादा नियता। दुर्भिक्षाशक्तिरोगादिकारणसद्भा-

वेऽपि शाखापुरपाटककोणकपरावर्तेनापि सत्यापनीयेव परं शेषकाले मासादधिक न स्थेय प्रतिबंधल-घुत्वप्रमुखबहुदोषसंभवात् । मध्यमजिनयतीना तु ऋजुप्राज्ञानां पूर्वोक्तदोषाभावेन अनियतो मास-कल्पः, ते हि देशोना पूर्वकोटिं यावदपि एकत्र तिष्ठन्ति कारणे मासमध्येऽपि विहरंति इति नवमः ॥ ९ ॥

' पज्जोसवणकप्पोत्ति ' परि सामस्त्येन उषणा वसनं पर्युषणा, तत्र पर्युषणाशब्देन सामस्त्येन वसनं वार्षिकं पर्व च द्वय अपि कथ्यते, तत्र वार्षिक पर्व भाद्रपदसितपंचम्या कालकसूरेरनंतरं च-तुर्थ्यामेवेति । सामस्त्येन वसनलक्षणश्च पर्युषणाकल्पो द्विविध· सालंबनो निरालंबनश्च तत्र नि-रालंबन· कारणाभाववान् इत्यर्थः, स द्विविधो जघन्य उत्कृष्टश्च. तत्र जघन्यस्तावत्सांवत्सरिकप्रतिक्र-मणादारभ्य कार्तिकचतुर्मासप्रतिक्रमणं यावत्सप्तति ७० दिनमान उत्कृष्टस्तु चातुर्मासिक·, अय द्विविधो निरालंबनः स्थविरकल्पिकाना । जिनकल्पिकाना तु एको निरालंबनश्चातुर्मासिक एव । सालंबनस्तु कारणिक इत्यर्थः. यत्र क्षेत्रे मासकल्पः कृतस्तत्रैव चतुर्मासककरणे चतुर्मासकानंतरं च मासकल्पकरणे षाण्मासिकः, अयमपि स्थविरकल्पिकानां एव। तथा पचकपचकवृद्ध्या गृहिज्ञा-

ताऽज्ञातादिविस्तरस्तु नात्र लिखितः, सांप्रतं संघाज्ञया तस्य विधेर्व्युच्छिन्नत्वात् विस्तरभयाच्च. विशेषार्थिना च कल्पकिरणावल्यादयो विलोक्या एवं सर्वत्रापि ज्ञेयम्। अथैवं वर्णितस्वरूपपर्युषणाकल्पः प्रथमांतिमजिनयोस्तीर्थे नियतः शेषाणां तु अनियतः, यतस्ते दोषाभावे एकस्मिन् क्षेत्रे देशोनां पूर्वकोटिं यावत्तिष्ठन्ति दोषसद्भावे तु न मासं अपि। एवं महाविदेहेऽपि द्वाविंशतिजिनवत्सर्वेषां जिनानां कल्पव्यवस्था ज्ञेया इति दशमः ॥ १० ॥

एते दशापि कल्पा ऋषभवर्धमानतीर्थे नियता एव, द्वाविंशतिजिनतीर्थे तु आचेलक्यौ १ द्देशिक २ प्रतिक्रमण ३ राजपिण्ड ४ मास ५ पर्युषणा ६ लक्षणाः षट् कल्पा अनियताः. शेषास्तु शय्यातर १ चतुर्व्रत २ पुरुषज्येष्ठ ३ कृतिकर्म ४ लक्षणाश्चत्वारो नियता एवेति दशानां कल्पानां नियतानियतविभागः ॥

ननु एकस्मिन् मोक्षमार्गे साध्ये प्रथमचरमजिनसाधूनां द्वाविंशतिजिनसाधूनां च कथं आचारभेदः? उच्यते–जीवविशेषा एव तत्र कारणं, तथाहि–श्रीऋषभतीर्थजीवा ऋजुजडास्तेषां धर्मस्या-

नबोधो दुर्लभो जडत्वात्, वीरतीर्थसाधूनां च धर्मस्य पालनं दुःकरं वक्रजडत्वात् । अजितादिजिनतीर्थसाधूनां तु धर्मस्यावबोध पालन च द्वयमपि सुकरं ऋजुप्राज्ञत्वात्तेन आचारो द्विधा कृतः । अत्र च दृष्टांता· प्रदर्श्यंते, यथा—केचित् प्रथमजिनयतयो बहिर्भूमेर्गुरुसमीपमागताः, पृष्टाश्च गुरुभिर्भो मुनयो भवतां इयती वेला क जाता, तैरुक्त स्वामिन् वय नट नृत्यतं विलोकयितु स्थितास्ततो गुरुभि· कथितं इदं नटविलोकनं साधूना न कल्पते, तैरपि तथेति अंगीकृतं. अथ अन्यदा ते एव सावधश्चिरेण उपाश्रय आगतास्तथैव गुरुभिः पृष्टा प्रोचुः, प्रभो वयं नटीं नृत्यतीं निरीक्षितु स्थितास्तदा गुरुभिरुचे, भो महाभागाः । तदानीं भवता नटो निषिद्धो, नटे निषिद्धे च नटी सुतरां निषिद्धेव, ततस्तैर्विज्ञप्तं स्वामिन् ! इदं अस्माभिर्न ज्ञातं, अथेवं न करिष्यामः, अत्र च जडत्वान्नटे निषिद्धे नटी निषिद्धेवेति तैर्न ज्ञातं, ऋजुत्वाच्च सरल उत्तर दत्तं, इति प्रथमः, अत्र द्वितीयोऽपि दृष्टांत·—

यथा कोऽपि कुंकणदेशीयो वणिग् वृद्धत्वे प्रव्रजितः, स चैकदा ऐर्यापथिकीकायोत्सर्गे चिरं

स्थितो गुरुभिः पृष्टः, एतावद्दीर्घे कायोत्सर्गे किं चिंतितं, स प्रत्युवाच, स्वामिन् जीवदया चिंतिता, कथमिति पुनर्गुरुभिः पृष्ट आह, पूर्वं गृहस्थावस्थायां क्षेत्रेषु वृक्षनिषूदनपूर्वकं उप्तानि धान्यानि बहून्यभूवन्, इदानीं मम पुत्रस्तु निश्चिंता यदि वृक्षनिषूदनं न करिष्यंति तदा धान्याऽभवनेन वराकाः कथं भविष्यंति, इति ऋजुत्वात् स्वाभिप्राये यथास्थिते निवेदिते गुरुभिः कथितं, महाभाग ! दुर्ध्यातं भवता, अहो ! अयुक्तमेतद्यतीनां इत्युक्ते च मिथ्यादुःकृतं ददौ ॥

तथा वीरजिनयतीनां वक्रजडत्वेऽपि दृष्टांतद्वयं, तथा—केचिद्वीरतीर्थसाधवो नटं नृत्यन्तं विलोक्य गुरुसमीपमागता गुरुभिः पृष्टा निषिद्धाश्च नटावलोकनं प्रति, पुनरन्यदा नटीं नृत्यन्तीं विलोक्य आगता गुरुभिस्तथैव पृष्टा वक्रतया अन्यानि उत्तराणि ददुर्बाढं पृष्टाश्च सत्यं प्रोचुः, गुरुभिरुपालंभे च दत्ते सन्मुखं गुरूनेव उपालब्धवंतः, यदस्माकं तदा नटनिषेधसमये नटीनिषेधोऽपि कुतो न कृतः? भवतां एव अयं दोषः, अस्माभिः किं ज्ञायते, इति प्रथमो दृष्टांतः—

तथा—कश्चिद्व्यवहारिसुतः पित्रा बहुशः शिक्ष्यमाणो जनकादीनां सन्मुखं जल्पनं न कर्त्तव्यं,

इति पितृवचनं वक्रतया मनसि दधार, अथैकदा सर्वेषु पुनः पुनः शिक्षयतं पितरं अथ शिक्षयामीति विचिंत्य कपाटं दत्वा स्थितः, आगतेषु च पित्रादिषु द्वारोद्घाटनार्थं बहुशब्दकरणेऽपि न वक्ति न चोद्घाटयति, भित्त्युल्लंघनेन मध्ये प्रविष्टेन च पित्रा हसन् दृष्ट उपालब्धश्च कथयामास, भवद्भिरेवोक्त वृद्धानां उत्तरं न देय, इति द्वितीयः ॥

अथाजितादियतीनां ऋजुप्राज्ञत्वे दृष्टांतः—यथा केचिदजितजिनयतयो नट निरीक्ष्य चिरेणागता गुरुभिः पृष्टा यथास्थितं अकथयन्, गुरुभिश्च निषिद्धाः, अथ अन्यदा ते बहिर्गताः नटीं नृत्यंतीं विलोक्य प्राज्ञत्वात् विचारयामासुः, यदस्माक रागहेतुत्वाद् गुरुभिर्नटनिरीक्षणं निषिद्धं, तर्हि नटी तु अत्यंतरागकारणत्वात् सर्वथा निषिद्धैवेति विचार्य नटीं नालोकितवंतः ॥ ननु तर्हि द्वाविंशतिजिनयतीना ऋजुप्राज्ञानां भवतु धर्मः, परं प्रथमजिनयतीना ऋजुजडानां कुतो धर्मोऽनवबोधात्, तथा च वक्रजडानां वीरयतीना तु सर्वथा धर्मस्य अभाव एव, मैवं, ऋजुजडानां प्रथमजिनयतीनां जडत्वेन स्खलनासद्भावेऽपि भावस्य विशुद्धत्वाद् भवति धर्मस्तथा वक्रजडानां अपि वीर-

जिनयतीनां ऋजुप्राज्ञापेक्षया अविशुद्धो भवति, परं सर्वथा धर्मो न भवतीति न वक्तव्यं, तथा वचने हि महान् दोषः, तदुक्तं–' जो भणइ नत्थि धम्मो। नय सामाइयं न चेव य वयाइं ॥ सो समणसंघबज्झो। कायव्वो समणसंघेण ' ॥ १ ॥

तथा यो नियतमवस्थानलक्षणः सप्ततिदिनमानः पर्युषणाकल्प उक्तः, सोऽपि कारणाऽभावे एव, कारणे तु तन्मध्येऽपि विहर्तुं कल्पते, तद्यथा–अशिवे १ भोजनाप्राप्तौ २। राज ३ रोग ४ पराभवे ॥ चतुर्मासकमध्येऽपि। विहर्तुं कल्पतेऽन्यतः ॥ १ ॥ असति स्थंडिले ५ जीवा–कुले ६ च वसतौ ७ तथा ॥ कुंथु ८ भग्नौ ९ तथा सर्पे १०। विहर्तुं कल्पतेऽन्यतः ॥ २ ॥ तथा एभिः कारणै-श्चतुर्मासकात्परतोऽपि स्थातुं कल्पते, वर्षादविरते मेघे। मार्गे कर्दमदुर्गमे ॥ अतिक्रमेऽपि कार्तिक्या-स्तिष्ठंति मुनिसत्तमाः ॥ १ ॥ एवं अशिवादिदोषाऽभावेऽपि संयमनिर्वाहार्थं क्षेत्रगुणा अन्वेषणीयास्तच्च क्षेत्रं त्रिविधं, जघन्यं १ मध्यमं २ उत्कृष्टं च, तत्र चतुर्गुणयुक्तं जघन्यं, ते चामी–यत्र विहारभूमिः सुलभा आसन्नो जिनप्रासाद इत्यर्थः १, यत्र स्थंडिलं शुद्धं निर्जीवं अनालोकं च २, यत्र

स्वाध्यायभूमि. सुलभा अस्वाध्यायादिरहिता ३, यत्र भिक्षा च सुलभा ४ त्रयोदशगुणं च उत्कृष्ट ते चामी–यत्र भूयान् कर्दमो न भवति १ यत्र बहवः संमूर्छिमा प्राणिनो न भवंति २ यत्र स्थण्डिलं निर्दोषं भवति ३ यत्र वसतिः स्त्रीसंसर्गादिरहिता ४ यत्र गोरस प्रचुरं ५ यत्र जनसमवायो महान् भद्रकश्च ६ यत्र वैद्याश्च भद्रकाः ७ यत्र औषधानि सुलभानि ८ यत्र गृहस्थगृहाः सकुटुंबा धनधान्यादिपूर्णाश्च ९ यत्र राजा भद्रक. १० यत्र ब्राह्मणादिभ्यो मुनीनामपमान न स्यात् ११ यत्र भिक्षा सुलभा १२ यत्र स्वाध्यायः शुध्यति १३ ॥ पूर्वोक्तचतुर्गुणादधिकं पञ्चादिगुण त्रयोदशगुणाच्च न्यूनं द्वादशगुणपर्यंतं मध्यमं क्षेत्र, एवं च उत्कृष्टे क्षेत्रे, तदप्राप्तौ मध्यमे, तस्यापि अप्राप्तौ जघन्ये क्षेत्रे साम्प्रतं च गुर्वादिष्टे क्षेत्रे साधुभि पर्युषणाकल्प. कर्तव्यः, अयं च दशप्रकारोऽपि कल्पो दोषाभावेऽपि क्रियमाणस्तृतीयौषधवत् हितकारको भवति, तथाहि–

केनचिद् भूपतिना स्वपुत्रस्य अनागतचिकित्सार्थं त्रयो वैद्या आकारितास्तत्र प्रथमो वैद्य आह –मदीय औषधं रोगसद्भावे रोगं हन्ति, रोगाभावे च दोष प्रकटयति, राज्ञोक्त सुप्तसर्पोत्थापनतुल्ये-

नानेन औषधेन किं? द्वितीयः प्राह–मदीयमौषधं विद्यमानं व्याधिं हन्ति, रोगाऽभावे च न गुणं न दोषं च करोति, राजा प्राह–भस्मनि हुततुल्येन अनेनापि पर्याप्तं । तृतीयः प्राह–मदीयं औषधं रोगसद्भावे रोगं हंति, तदभावे च शरीरे सौंदर्यवीर्यतुष्टिपुष्टिं करोति, राज्ञोक्तं इदं औषधं समीचीनं तद्वद्यमपि कल्पो दोषसद्भावे दोषं निराकरोति, दोषाऽभावे च धर्मं पुष्णाति.

तदेवं समुपस्थिते पर्युषणापर्वणि मंगलनिमित्तं पंचभिरेव दिनैः कल्पसूत्रं वाचनीयं, तच्च यथा–देवेषु इंद्रः, तारासु चंद्रः. न्यायप्रवीणेषु रामः, सुरूपेषु कामः ' रूपवतीषु रंभा, वादित्रेषु भंभा, गजेषु ऐरावणः, साहसिकेषु रावणः, बुद्धिमत्सु अभयः; तीर्थेषु शत्रुंजयः, गुणेषु विनयः, धानुष्केषु धनंजयः, मंत्रेषु नमस्कारः, तरुषु सहकारस्तथा सर्वशास्त्रेषु शिरोमणिभावं ( कल्पसूत्रं ) बिभर्ति, यतः–नार्हतः परमो देवो । न मुक्तेः परमं पदं ॥ न श्रीशत्रुंजयात्तीर्थं । श्रीकल्पान्न परं श्रुतं ॥ ॥ १ ॥ तथायं कल्पः साक्षात्कल्पद्रुम एव, तस्य च पश्चानुपूर्व्या उक्तत्वात्, श्रीवीरचरित्रं बीजं, श्री पार्श्वचरित्रं अंकुरः, श्रीनेमिचरित्रं स्कंधः, श्रीऋषभचरित्रं शाखासमूहः, स्थविरावली पुष्पाणि, सा-

माचारीज्ञान सौख्य, फलं मोक्षप्राप्ति. ॥ किंच—

वाचनात्साहाय्यदानात् । सर्वाक्षरश्रुतेरपि ॥ विधिनाराधित. कल्प. । शिवदोन्तर्भवाष्टकम् ॥ १ ॥ एगग्गचित्ता जिणसासणम्मि । पभावणापूअपरायणा जे ॥ तिसत्तवारं निसुणंति कप्प । भवा- ण्णवं गोयम ते तरन्ति ॥ २ ॥ मंत्राणा परमेष्ठिमन्त्रमहिमा तीर्थेषु शत्रुंजयो । दाने प्राणिदया गुणेषु विनयो ब्रह्मव्रतेषु व्रतम् ॥ सतोपो नियमे तपस्सु च शमस्तत्त्वेषु सद्दर्शनं । सर्वज्ञोदितसर्वप- र्वसु तथा श्रीवार्षिकं पर्व च ॥ ३ ॥

एवं च कल्पमहिमानं आकर्ण्य तप.पूजाप्रभावनादिधर्मकार्येषु कष्टधनव्ययसाध्येषु आलस्य न विधेयं, सकलसामग्रीसहितस्यैव तस्य कल्पसूत्रश्रवणस्य वांछितफलप्रापकत्वात्, यथा बीज अपि पृथ्वीवायुप्रभृतिसामग्रीसद्भावे एव फलनिष्पत्तौ समर्थं, नान्यथा. एवं अय कल्पोऽपि देवगुरुपूजाप्र- भावनासाधर्मिकभक्तिप्रमुखसामग्रीसद्भावे एव यथोक्तफलहेतु , अन्यथा—' इक्कोवि नमुक्कारो । जि- णवरवसहस्स वद्धमाणस्स ॥ संसारसागराओ । तारेइ नरं व नारीं वा ॥ १ ॥ इति श्रुत्वा किंचित्प-

याससान्ये कल्पश्रवणेऽपि आलस्यं भवेत् ॥

अथ पुरुषविश्वासे वचनविश्वास इति कल्पसूत्रस्य प्रणेता वक्तव्यः, स च चतुर्दशपूर्वविद्युगप्रधानश्रीभद्रबाहुस्वामी दशाश्रुतस्कंधस्य अष्टमाध्ययनतया प्रत्याख्यानप्रवादाभिधाननवमपूर्वात् उध्धृत्य कल्पसूत्रं रचितवान्, तत्र पूर्वाणि च, प्रथमं एकेन ( १ ) हस्तिप्रमाणमषीपुंजेन लेख्यं, द्वितीयं द्वाभ्यां ( २ ) तृतीयं चतुर्भिः ( ४ ) चतुर्थं अष्टाभिः ( ८ ) पंचमं षोडशभिः ( १६ ) षष्ठं द्वात्रिंशता ( ३२ ) सप्तमं चतुःषष्ट्या (६४) अष्टमं अष्टाविंशत्यधिकशतेन ( १२८ ) नवम षट्पंचाशदधिकशतद्वयेन ( २५६ ) दशमं द्वादशाधिकैः पंचभिः शतैः ( ५१२ ) एकादशमं चतुर्विंशत्यधिकेन सहस्रेण ( १०२४ ) द्वादशं अष्टचत्वारिंशदधिकया द्विसहस्र्या ( २०४८ ) त्रयोदशमं षण्णवत्यधिकया चतुःसहस्र्या ( ४०९६ ) चतुर्दशं च अष्टसहस्र्या द्विनवत्युत्तरशताधिकया ( ८१९२ ) सर्वाणि पूर्वाणि षोडशभिः सहस्रैस्त्र्यशीत्यधिकैस्त्रिभिः शतैश्च ( १६३८३ ) हस्तिप्रमाणमषीपुंजैर्लेख्यानि.

तस्मान्महापुरुषप्रणीतत्वेन मान्यं गंभीरार्थं च, यतः—' सव्वनईणं जा हुज्ज । वालुआ

सव्वोदहीण जं उदयं ॥ तत्तो अणंतगुणिअं । अत्थो इक्कस्स सुत्तस्स ' ॥ १ ॥ मुखे जिह्वासहस्रं स्यात् । हृदये केवलं यदि ॥ तथापि कल्पमाहात्म्यं । वक्तुं शक्यं न मानवैः ॥ २ ॥

अथ तस्य श्रीकल्पस्य वाचने श्रवणे च अधिकारिणो मुख्यवृत्त्या साधुसाध्व्यस्तत्रापि कालतो रात्रौ विहितकालग्रहणादिविधीनां साधूनां वाचनं श्रवण च, साध्वीनां च निशीथचूर्ण्युक्तविधिना दिवापि श्रवणम् । तथा श्रीवीरनिर्वाणादशीत्यधिकनवशत ( ९८० ) वर्षातिक्रमणे मतांतरेण च त्रिनवत्यधिकनवशतवर्षा ( ९९३ ) तिक्रमे ध्रुवसेननृपस्य पुत्रमरणार्त्तस्य समाधिमाधातुमानंदपुरे सभासमक्षं समहोत्सवं श्रीकल्पसूत्रं वाचयितुमारब्ध । ततःप्रभृति चतुर्विधोऽपि संघः श्रवणेऽधिकारी, वाचने तु विहितयोगानुष्ठानसाधुरेव ॥

अथ अस्मिन् वार्षिकपर्वणि कल्पश्रवणवत् इमान्यपि पंच कार्याणि अवश्य कार्याणि तद्यथा– चैत्यपरिपाटी ( १ ) समस्तसाधुवंदनं ( २ ) सांवत्सरिकप्रतिक्रमणं ( ३ ) मिथः साधर्मिकक्षामण ( ४ ) अष्टमं तपश्च ( ५ ) । एषां अपि कल्पश्रवणवद् वांछितदायकत्वं अवश्यं कर्तव्यत्वं जिनानु-

ज्ञातव्यं च ज्ञेयं, तत्र अष्टमं तप उपवासत्रयात्मकं महाफलकारणं, रत्नत्रयवदान्यं, शल्यत्रयोन्मूलनं, जन्मत्रयपावनं, कायवाङ्मानसदोषशोषकं, विश्वत्रयाग्र्यपदप्रापकं, निःश्रेयसपदाभिलाषुकैरवश्यं कर्त्तव्यं, नागकेतुवत्, तथाहि—

चंद्रकांता नगरी, तत्र विजयसेनो नाम राजा, श्रीकांताख्यश्च व्यवहारी, तस्य श्रीसखी भार्या, तया च बहुप्रार्थित एकः सुतः प्रसूतः, स च बालक आसन्ने पर्युषणापर्वणि कुटुंबकृतां अष्टमवार्त्तां आकर्ण्य जातजातिस्मृतिः स्तन्यपोऽपि अष्टमं कृतवान्, ततस्तं स्तन्यपानमकुर्वाणं पर्युषितमालतीकुसुममिव म्लानं आलोक्य मातापितरौ अनेकान् उपायांश्चक्रतुः, क्रमाच्च मूर्छां प्राप्तं तं बालं मृतं ज्ञात्वा स्वजना भूमौ निक्षिपंति च, ततश्च विजयसेनो राजा तं पुत्रं तद्दुःखेन तत्पितरं च मृतं विज्ञाय तद्धनग्रहणाय सुभटान् प्रेषयामास. इतश्च अष्टमप्रभावात् प्रकंपितासनो धरणेंद्रः सकलं तत्स्वरूपं विज्ञाय भूमिस्थं तं बालकं अमृतच्छटया आश्वास्य द्विजरूपं कृत्वा धनं गृह्णतस्तान् निवारयामास, तत् श्रुत्वा राजापि त्वरितं तत्रागत्योवाच, भो भूदेव परंपरागतं इदं

अस्माकं अपुत्रधनग्रहणं कथं निवारयसि, धरणोऽवादीत्, राजन् जीवत्यस्य पुत्रः, कथं कुत्रास्तीति राजादिभिरुक्तं, भूमेस्तं जीवंतं बालकं साक्षात्कृत्य निधानमिव दर्शयामास, ततः सर्वैरपि सविस्मयैः स्वामिन् कस्त्वं कोऽयमिति पृष्टे सोऽवदत्, अहं धरणेंद्रो नागराजः, कृताष्टमतपसोऽस्य महात्मनः साहाय्यार्थं आगतोऽस्मि. राजादिभिरुक्त स्वामिन् जातमात्रेण अनेन अष्टमतपः कथं कृतं? धरणेंद्र उवाच, राजन् अयं हि पुर्वभवे कश्चिद्वणिक्पुत्रो बाल्येऽपि मृतमातृक आसीत्, स च अपरमात्रा-स्यतं पीड्यमानो मित्राय स्वं दुःखं कथयामास, सोऽपि त्वया पूर्वजन्मनि तपः न कृतं, तेनैव परा भवं लभसे, इत्युपदिष्टवान्, ततोऽसौ यथाशक्ति तपोनिरत आगामिन्यां पर्युषणायां अवश्य अष्टमं करिष्यामीति मनसि निश्चित्य तृणकुटीरे सुष्वाप. तदा च लब्धावसरया विमात्रा आसन्नप्र-दीपनकादग्निकणस्तत्र निक्षिप्तस्तेन च कुटीरके ज्वलिते सोऽपि मृतः, अष्टमध्यानाच्च अयं श्रीकां-तमहेभ्यनंदनो जातः, ततोऽनेन पूर्वभवचिंतितं अष्टमतपः सांप्रतं कृतं. तदसौ महापुरुषो लघुक-र्मोऽस्मिन् भवे मुक्तिगामी, यत्नात् पालनीयो भवतां अपि महते उपकाराय भविष्यतीति उक्त्वा

नागराजः स्वहारं तत्कंठे निक्षिप्य स्वस्थानं जगाम ॥

ततः स्वजनैः श्रीकांतस्य मृतकार्यं विधाय तस्य नागकेतुरिति नाम कृतं, क्रमाच्च स बाल्यादपि जितेंद्रियः परमश्रावको बभूव. एकदा च विजयसेनराजेन कश्चिद् अचौरोऽपि चौरकलंकेन हतो व्यंतरो जातः, समग्रनगरविघाताय शिलां रचितवान्, राजानं च पादप्रहारेण रुधिरं वमंतं सिंहासनाद् भूमौ पातयामास. तदा स नागकेतुः कथं इमं संघप्रासादविध्वंसं जीवन् पश्यामीति बुध्ध्या प्रासादशिखरमारुह्य शिलां पाणिना दध्रे. ततः स व्यंतरोऽपि तत्तपःशक्तिं असहमानः शिलां संहृत्य नागकेतुं नतवान्. तद्वचनेन नृपालमपि निरुपद्रवं कृतवान्. अन्यदा च स नागकेतुर्जिनेंद्रपूजां कुर्वन् पुष्पमध्यस्थितसर्पेण दष्टोऽपि तथैवाऽव्यग्रो भावनारूढः केवलज्ञानं आसादितवान्, ततः शासनदेवतार्पितमुनिवेषश्चिरं विहरतिस्म, एवं नागकेतुकथां श्रुत्वा अन्यैरपि अष्टमतपसि यतनीयं, इति नागकेतुकथा ॥

अथात्र श्रीकल्पसूत्रे त्रीणि वाच्यानि यथा–' पुरिमचरिमाणकप्पो। मंगलं वद्धमाणतित्थंमि ॥

इह परिकहिया जिणगण–हराइ थेरावलीचरित्तं ॥ १ ॥ 'पुरिमचरिमाणत्ति' ऋषभवीरजिनयोः, 'कप्पत्ति' अय कल्प आचारः, यत् वृष्टिर्भवतु मा वा, परं अवश्य पर्युषणा कर्तव्या, उपलक्षणत्वात् कल्पसूत्र वाचनीय च, 'मंगलमिति' एकं अय आचारः, अपरं च मंगलं मंगलकारणं भवति, वर्धमानतीर्थे कस्मादेवं इत्याह–यस्मादिह परिकथितानि 'जिणत्ति' जिनानां चरितानि (१) 'गणहराइथेरावलीत्ति' गणधरादिस्थविरावली (२) 'चरित्तत्ति' सामाचारी (३) तत्र प्रथमाधिकारे जिनचरितेषु आसन्नोपकारितया प्रथमं श्रीवीरचरित्र वर्णयंत. श्रीभद्रबाहुस्वामिनो जघन्यमध्यमवाचनात्मक प्रथमं सूत्रं रचयंति—

तस्मिन् काले अवसर्पिणीचतुर्थारकपर्यंतलक्षणे, णंकारः सर्वत्र वाक्यालंकारार्थः, विशिष्टः कालविभाग समयस्तस्मिन् समये, श्रमणस्तपोनिरतः, भगवंति भगवान्, अर्कयोनिवर्जितद्वादशभगशब्दार्थवान् यदाहुः—भगोऽर्क १ ज्ञान २ माहात्म्य ३ । यशो ४ वैराग्य ५ मुक्तिषु ६ ॥ रूप ७ वीर्य ८ प्रयत्ने ९ च्छा १० । श्री ११ धर्मै १२ श्वर्य १३ योनिषु १४ ॥ १ ॥ अत आद्यांत्यौ अर्थौ वर्जनी-

यौ । ननु अंत्योऽर्थस्तु वर्ज्य एव, परं अर्कः कथं वर्ज्यः? सत्यं, उपमानतया अर्को भवति, परं वत्प्रत्ययांतत्वेन अर्कवान् इत्यर्थो न लगतीति वर्जितः, महावीरत्ति कर्मवैरिपराभवसमर्थः श्रीवर्धमानस्वामीत्यर्थः, हस्तोत्तरा उत्तराफाल्गुन्यः, गणनया ताभ्यो हस्तस्य उत्तरत्वात् ताः पंचसु स्थानेषु यस्य स पंचहस्तोत्तरो भगवान् ' होत्थत्ति ' अभवत् ॥ अथ षट्कल्याणकवादी आह—

ननु ' पंचहत्थुत्तरे, साइणा परिनिव्वुडे ' इति वचनेन महावीरस्य षट्कल्याणकत्वं संपन्नमेव, मैवं, एवं उच्यमाने उसभेणं अरहा कोसलिए पंच उत्तरासाढे, अभीइछट्ठे होत्थत्ति जंबूद्वीपप्रज्ञप्तिवचनात् श्रीऋषभस्यापि षट् कल्याणकानि वक्तव्यानि स्युः, न च तानि त्वयापि तथोच्यंते, तस्माद्यथा पंच उत्तराषाढे इत्यत्र नक्षत्रसाम्यात् राज्याभिषेको मध्ये गणितः, परं कल्याणकानि तु 'अभीइ छट्ठे' इत्यनेन सह पंचैव, तथात्रापि ' पंच हत्थुत्तरे ' इत्यत्र नक्षत्रसाम्यात् गर्भापहारो मध्ये गणितः, परं कल्याणकानि तु ' साइणा परिणिव्वुडे' इत्यनेन सह पंचैव, तथा श्रीआचारांगटीकाप्रभृतिषु ' पंच हत्थुत्तरे ' इत्यत्र पंच वस्तून्येव व्याख्यातानि, न तु कल्याणकानि, किंच श्रीहरि-

नद्रसूरिकृतयात्रापंचाशकस्य अभयदेवसूरिकृतायां टीकायां अपि–आषाढशुद्धषष्ठ्यां गर्भसंक्रमः ( १ ) चैत्रशुद्धत्रयोदश्यां जन्म ( २ ) मार्गासितदशम्यां व्रतं ( ३ ) वैशाकशुद्धदशम्यां केवलं ( ४ ) कार्तिकामावास्यायां मोक्ष ( ५ ) एवं श्रीवीरस्य पंच कल्याणकानि उक्तानि. अथ यदि षष्ठ स्यात्तदा तस्यापि दिनं उक्त स्यात्, अन्यच्च नीचैर्गोत्रविपाकरूपस्य अतिनिंद्यस्य आश्चर्यरूपस्य गर्भापहारस्यापि कल्याणकत्वकथनं अनुचितं । अथ ' पचहत्थुत्तरे ' इत्यत्र गर्भापहरणं कथ उक्त इति चेत् सत्यं, अत्र हि भगवान् देवानंदाकुक्षौ अवतीर्ण., प्रसूतवती च त्रिशलेति असंगति. स्यात्, तन्निवारणाय ' पंचहत्थुत्तरेत्ति ' वचनं, इत्यल प्रसगेन.

कल्याणकानि पचैव । तद्यथा–पचहस्तोत्तरत्वं भगवतो भध्यमयाचनया दर्शयति, उत्तराफाल्गुनीषु च्युत. प्राणताभिधानदशमदेवलोकात् च्युत्वा गर्भे उत्पन्न., उत्तराफाल्गुनीषु गर्भात् गर्भे संहृत., देवानंदागर्भात्त्रिशलागर्भे मुक्त इत्यर्थ., उत्तराफाल्गुनीषु जातः, उत्तराफाल्गुनीषु मुण्डो भूत्वा, तत्र द्रव्यतो मुण्डः केशलुचनेन, भावतो मुण्डो रागद्वेषाऽभावेन, अगारात् गृहात् निष्क्रम्येति

शेषः, अनगारितां साधुतां 'पव्वइए त्ति' प्रतिपन्नः, तथा उत्तराफाल्गुनीषु अनंतं अनंतवस्तुविषयं अनुपमं निर्व्याघातं भित्तिकटादिभिरस्खलितं, समस्तावरणरहितं कृत्स्नं सर्वपर्यायोपेतसर्ववस्तुज्ञापकं परिपूर्णं सर्वावयवसंपन्नं, एवंविधं यत् वरं प्रधानं केवलज्ञानं केवलदर्शनं च तत् उत्तराफाल्गुनीषु प्राप्तः, स्वातिनक्षत्रे मोक्षं गतो भगवान्।

अथ विस्तरवाचनया श्रीवीरचरित्रं–तेणमित्यादि प्राग्वत्. यः स ग्रीष्मकालस्य चतुर्थो मासः, अष्टमः पक्षः, कोऽर्थः–आषाढशुक्लपक्षः, तस्य आषाढशुक्लपक्षस्य षष्ठीरात्रौ महान् विजयो यत्र तन्महाविजयं पुष्पोत्तरनामकं, प्रवरेषु प्रधानेषु अन्यश्रेष्ठविमानेषु पुंडरीकमिव श्वेतकमलमिव अतिश्रेष्ठं इत्यर्थः, तस्मात् महाविमानात्, किं विशिष्टात्? विंशतिसागरोपमस्थितिकात्, तत्र हि देवानां विंशतिसागराणि उत्कृष्टा स्थितिर्भवति, भगवतोऽपि एतावत्येव स्थितिरासीत्.

अथ तस्माद्विमानात् देवायुःक्षयेण देवगतिनामकर्मक्षयेण स्थितिर्वैक्रियशरीरेऽवस्थानं तस्याः क्षयेण पूर्णीकरणेन अंतररहितं च्ययं च्यवनं कृत्वा अस्मिन्नेव जंबूद्वीपनाम्नि द्वीपे भरतक्षेत्रे दक्षि-

गर्भजरते यत्र समये समये रूपरसादीनां हानिः स्यात् सावसर्पिणी, ततोऽस्यां अवसर्पिण्यां सुषमसुषमानाम्नि चतुःकोटाकोटिसागरप्रमाणे प्रथमारके अतिक्रांते सुखमानाम्नि त्रिकोटाकोटिसागरप्रमाणे द्वितीयारके अतिक्रांते, सुखमदुःषमानाम्नि द्विकोटाकोटिसागरप्रमाणे तृतीयारके व्यतिक्रांते अतीते दुःषमसुखमानाम्नि चतुर्थारके बहु व्यतिक्रांते किंचिदूने, तदेवाह–द्विचत्वारिंशद्वर्षसहस्रोना (४२०००) एका सागरकोटाकोटिश्चतुर्थारक प्रमाणं, तत्रापि चतुर्थारकस्य पंचसप्तति (७५) वर्षेषु सार्द्धाष्टमासाधिकेषु शेषेषु श्रीवीरावतारः, द्वासप्ततिवर्षाणि च श्रीवीरस्यायुः, श्रीवीरनिर्वाणाच्च त्रिभिर्वर्षैः सार्द्धाष्टमासैश्चतुर्थारकसमाप्तिः, ततः पूर्वोक्ता या द्विचत्वारिंशद्वर्षसहस्री सा एकविंशतिएकविंशतिवर्षसहस्रप्रमाणयोः पंचमारकषष्ठारकयोः संबधिनी ज्ञेया, एकविंशतितीर्थंकरेषु इक्ष्वाकुकुलसमुत्पन्नेषु काश्यपगोत्रेषु द्वयोः मुनिसुव्रतनेम्योः हरिवंशकुलसमुत्पन्नयोः गौतमगोत्रयोः, एवं च त्रयोविंशतौ तीर्थंकरेषु अतीतेषु श्रमणो भगवान् महावीरः, किं विशिष्टः? चरमतीर्थंकरः, पुनः किं विशिष्टः? पूर्वतीर्थंकरनिर्दिष्टः श्रीवीरो भविष्यतीत्येवं पूर्वजिनैः कथितः, ब्राह्मणकुंडग्रामनामके नगरे ऋषभ-

दत्तस्य ब्राह्मणस्य, किं विशिष्टस्य ? कोडालैः समानं गोत्रं यस्य स तथा तस्य, कोडालगोत्रस्येत्यर्थः; तस्य भार्याया देवानंदाया ब्राह्मण्याः जालंधरस्य गोत्रायाः, कदा ? पूर्वरात्रापररात्रकालसमये मध्यरात्रे इत्यर्थः. उत्तराफाल्गुनीनक्षत्रे चंद्रयोगं प्राप्ते सति, कया, आहारापक्रांत्या, दिव्याहारत्यागेन दिव्यभवत्यागेन दिव्यशरीरत्यागेन कुक्षौ गर्भतया व्युत्क्रांत इति संबंधः ॥ अथ यदा श्रमणो भगवान् महावीरो गर्भे उत्पन्नस्तदा ज्ञानत्रयोपगत आसीत्, ततः च्योष्ये इति जानाति, च्यवनभविष्यत्कालं जानातीत्यर्थः, च्यवमानो नो जानाति, एकसामयिकत्वात् च्युतोऽस्मीति च जानाति. तथा यस्यां रजन्यां श्रमणो भगवान् महावीरो देवानंदाया ब्राह्मण्या जालंधरस्य गोत्रायाः कुक्षौ गर्भतया उत्पन्नः, तस्यां रजन्यां सा देवानंदा ब्राह्मणी शयनीये शय्यायां पल्यंके नातिनिद्रायंती नातिजाग्रती, अत एव अल्पां निद्रां कुर्वती इमान् एतद्रूपान् वक्ष्यमाणस्वरूपान् उदारान् प्रशस्तान् कल्याणहेतून् शिवान् उपद्रवहरान् धन्यान् धन्यहेतून् मंगलकारकान् सश्रीकान् ईदृशान् चतुर्दशमहास्वप्नान् दृष्ट्वा जागरिता, तद्यथा—गय वसह सीह अभिसेअ । दाम ससि दिणयरं ज्झयं कुंभं ॥

पउमसर सागर विमाण–भवण रयणुच्चय सिहिं च ॥ १ ॥ गाथा सुबोधा, न वरं अभिषेकः श्रियाः संबधी, पद्मोपलक्षितं सरः, विमान देवसंबंधि भवन गृहं, तत्र यः स्वर्गादवतरति, तन्माता विमानं पश्यति, यस्तु नरकादायाति तन्माता भवनमिति द्वयोरेकतरदर्शनाच्चतुर्दशैव स्वप्नाः. शिखी निर्धूमोऽग्निः ॥ ततः सा देवानंदा ब्राह्मणी इमान् एतद्रूपान् उदारान् प्रशस्तान् यावत्शब्देन पूर्वपाठोऽनुसरणीयः, यथोक्तान् चतुर्दशमहास्वप्नान् दृष्ट्वा जागरिता सती हृष्टा विस्मय प्राप्ता, संतोषं प्राप्ता, चित्तेन आनंदिता प्रीतियुक्तचित्ता, परमं सौमनस्य संतुष्टचित्तत्वं जातं यस्याः सा तथा, हर्षवशेन विस्तारवत् हृदय यस्या सा तथा, पुनः किं भूता? धारया मेघजलधारया सिक्त एवंविध यत्कदंबतरुकुसुमं तद्वि मेघधारया फुल्लति, ततस्तद्वत् समुच्छ्वसितानि उल्लसितानि रोमाणि कूपेषु यस्याः सा तथा, एवंविधा सती स्वप्नानामवग्रहं स्मरणं करोति, तत्कृत्वा च शय्याया अभ्युत्तिष्ठति, अभ्युत्थाय अत्वरितया मानसौत्सुक्यरहितया अचपलया कायचापल्यवर्जितया, असंभ्रांतया अस्खलंत्या विलंबरहितया राजहंससदृशया गत्या यत्रैव ऋषभदत्तो ब्राह्मणस्तत्रैवोपागच्छति

उपागत्य ऋषभदत्तं ब्राह्मणं जयेन विजयेन वर्धापयति आशिषं ददाति, तत्र जयः स्वदेशे, विजयः परदेशे, वर्धापयित्वा च भद्रासनवरगता, ततश्च आश्वस्ता श्रमापनयनेन, विश्वस्ता क्षोभाऽभावेन, अत एव सुखेन आसनवरं प्राप्ता, करतलाभ्यां परिगृहीतं कृतं दशनखाः समुदिता यत्र तं शिरसि आवर्त्तः प्रदक्षिणभ्रमणं यस्य तं एवंविधं अंजलिं मस्तके कृत्वा देवानंदा एवं अवादीत्, किं तदित्याह—॥ ५ ॥

एवं निश्चयेन अहं हे देवानुप्रिय हे स्वामिन्! अद्य शय्यायां सुप्तजागरा अल्पनिद्रां कुर्वती इमान् एतद्रूपान् उदारान् यावत् सश्रीकान् चतुर्दश महास्वप्नान् दृष्ट्वा जागरिता, तद्यथा—गय इत्यादितः सिहिं चेति यावत् पूर्वोक्ताः स्वप्ना ज्ञेयाः. एतेषां देवानुप्रिय प्रशस्तानां यावत् चतुर्दशानां महास्वप्नानां मन्ये विचारयामि कः कल्याणकारी फलवृत्तिविशेषो भविष्यति, तत्र फलं पुत्रादि, वृत्तिर्जीवनोपायादि. ततः स ऋषभदत्तो ब्राह्मणो देवानंदाया ब्राह्मण्या अंतिके पार्श्वे एतं अर्थं श्रुत्वा कर्णाभ्यां निशम्य, चेतसा अवधार्य हृष्टतुष्ट यावत् हर्षवशेन विसर्पितहृदयः, मेघधारया

सिक्तकदंबवृक्षपुष्पवत् समुच्छ्वसितानि रोमाणि कूपेषु यस्य स·, एवंविध· सन् स्वप्नधारणं करोति, तत् कृत्वा च ईहां अर्थविचारणां प्रविशति, तां कृत्वा च आत्मन· स्वात्मनः स्वाभाविकेन मतिपूर्वकेण बुद्धिविज्ञानेन, तत्र अनागतकालविषया मति·, वर्तमानकालविषया बुद्धि·, विज्ञानं चातीतानागतवस्तुविषयं, ततस्तेषां स्वप्नानां अर्थनिश्चयं करोति, तं कृत्वा देवानंदा ब्राह्मणी एवं अवादीत्, किं तदित्याह—उदारास्त्वया देवानुप्रिये स्वप्ना दृष्टाः कल्याणकारका यावत् सश्रीका·, आरोग्यं निरोगत्वं, तुष्टिं संतोषः, दीर्घायुश्चिर जीवित्व, कल्याण उपद्रवाऽभाव , मंगलं वांछितावाप्तिः, एतेषां वस्तूनां कारकास्त्वया हे देवानुप्रिये स्वप्ना दृष्टाः, तद्यथा–अर्थलाभो भविष्यति हे देवानुप्रिये भोगानां लाभः, हे देवानुप्रिये पुत्रस्य लाभः, हे देवानुप्रिये सौख्यलाभ हे देवानुप्रिये भविष्यतीति सर्वत्र योज्य· एवं खलु त्वं देवानुप्रिये नवसु मासेषु बहुप्रतिपूर्णेषु सार्धसप्ताहोरात्राधिकेषु अतीतेषु एतादृशं दारकं पुत्रं प्रजनिष्यसीति संबंधः, किं विशिष्टं दारकं? सुकुमालं पाणिपादं यस्यैवंविध, पुन· किं वि० अहीनानि लक्षणोपेतानि, स्वरूपेण प्रतिपूर्णानि पंचेंद्रियाणि यस्य तादृशं श-

रीरं यस्य स तथा तं, तथा तत्र लक्षणानि चक्रितीर्थंकृतां अष्टोत्तरसहस्रं, बलदेववासुदेवानां अष्टोत्तरशतं, अन्येषां तु भाग्यवतां द्वात्रिंशत्तानि चेमानि–छत्रं १ तामरसं २ धनू ३ रथवरो ४ दंभोलि ५ कूर्मो ६ कुशा ७ । वापी ८ स्वस्तिक ९ तोरणानि १० च सरः ११ पंचाननः १२ पादपः १३ ॥ चक्रं १४ शंख १५ गजौ १६ समुद्र १७ कलशौ १८ प्रासाद १९ मत्स्या २० यवा २१ । यूप २२ स्तूप २३ कमंडलू २४ न्यवनिभृत २५ सच्चामरो २६ दर्पणं २७ ॥ १ ॥ उक्षा २८ पताका २९ कमलाभिषेकं ३० । सुदाम ३१ केकी ३२ घनपुण्यभाजां ॥ तथा–इह भवति सप्तरक्तः । षडुन्नतः पंचसूक्ष्मदीर्घश्च ॥ त्रिविपुललघुगंभीरो । द्वात्रिंशल्लक्षणः स पुमान् ॥ १ ॥ तद्यथा—

तत्र सप्त रक्तानि, नख १ चरण २ हस्त ३ जिह्वा ४ ओष्ठ ५ तालु ६ नेत्रांताः ७ ॥ षडुन्नतानि, कक्षा १ हृदयं २ ग्रीवा ३ नासा ४ नखा ५ मुखं च ६ ॥ पंच सूक्ष्माणि, दंताः १ त्वक् २ केशा ३ अंगुलिपर्वाणि ४ नखाश्च ५ ॥ तथा पंच दीर्घाणि, नयने १ हृदयं २ नासिका ३ हनुः ४ भुजौ च ५ ॥ त्रीणि विस्तीर्णानि, भालं १ उरः २ वदनं च ३ ॥ त्रीणि लघूनि, ग्रीवा १ जंघा २ मेहनं च

३ ॥ त्रीणि गंभीराणि, सत्त्वं १ स्वर २ नाभिश्च ३ ॥ मुखमर्धं शरीरस्य । सर्वं वा मुखमुच्यते ॥
ततोऽपि नासिका श्रेष्ठा । नासिकायाश्च लोचने ॥ १ ॥ यथा नेत्रे तथा शीलं । यथा नासा तथार्जवं ॥
यथा रूपं तथा वित्तं । यथा शीलं तथा गुणाः ॥ २ ॥ अतिह्रस्वेऽतिदीर्घेऽति–स्थूले चातिकृशे तथा
॥ अतिकृष्णेऽतिगौरे च । षट्सु सत्त्वं निगद्यते ॥ ३ ॥ सद्धर्म· सुभगो नीरुक् । सुस्वप्नः सुनयः कवि
॥ सूचयत्यात्मनः श्रीमान् । नरः स्वर्गगमागमौ ॥ ४ ॥ निर्दंभ· सदयो दानी । दांतो दक्षः सदा
ऋजुः ॥ मर्त्ययोनेः समुद्भूतो । भविता च पुनस्तथा ॥ ५ ॥ मायालोभक्षुधालस्य । बह्वाहारादि
चेष्टितैः ॥ तिर्यग्योनिसमुत्पत्तिं । ख्यापयत्यात्मनः पुमान् ॥ ६ ॥ सराग स्वजनद्वेषी । दुर्भगो मू·
र्खसंगकृत् ॥ शास्ति स्वस्य गतायातं । नरो नरकवर्त्मनि ॥ ७ ॥ आवर्त्तो दक्षिणे भागे । दक्षिण·
शुभकृन्नृणां ॥ वामो वामेऽतिनिंद्यः स्या–दिगन्यत्वे तु मध्यमः ॥ ८ ॥ अरेख बहुरेख वा । येषां
पाणितलं नृणां ॥ ते स्युरल्पायुषो निःस्वा । दुःखिता नात्र संशय· ॥ ९ ॥ अनामिकांत्यरेखायाः ।
कनिष्ठा स्याद्यदाधिका ॥ धनवृद्धिस्तदा पुंसां । मातृपक्षो बहुस्तथा ॥ १० ॥ मणिबंधात् पितुर्लेखा

। करन्नाद्भिन्नवायुषोः ॥ लेखे द्वे यांति तिस्त्रोऽपि । तर्जन्यंगुष्टकांतरं ॥ ११ ॥ येषां रेखा इमास्तिस्त्रः । संपूर्णा दोषवर्जिताः ॥ तेषां गोत्रधनायूंषि । संपूर्णान्यन्यथा न तु ॥ १२ ॥ उल्लंघ्यंते च यावत्यों —गुल्यो जीवितरेखया ॥ पंचविंशतयो ज्ञेया—स्तावंत्यः शरदा बुधैः ॥ १३ ॥ यवैरंगुष्टमध्यस्थै—र्विद्या-ख्यातिविभूतयः ॥ शुक्लपक्षे तथा जन्म । दक्षिणांगुष्टगैश्च तैः ॥ १४ ॥ न स्त्रीस्त्यजति रक्ताक्षं । नार्थः कनकपिंगलं ॥ दीर्घवाहुं न चैश्वर्यं ! न मांसोपचितं सुखं ॥ १५ ॥ चक्षुःस्नेहेन सौभाग्यं । दंतस्नेहेन भोजनं ॥ वपुःस्नेहेन सौख्यं स्यात् । पादस्नेहेन वाहनं ॥ १६ ॥ उरोविशालो धनधान्यभोगी। शिरोविशालो नृपपुंगवश्च ॥ कटीविशालो बहुपुत्रदारो । विशालपादः सततं सुखी स्यात् ॥ १७ ॥ इमानि लक्षणानि ॥

व्यंजनानि च मषतिलकादीनि, तेषां ये गुणास्तैरुपेतं, पुनः किंवि० तत्र मानं जलभृतकुंभांतः पुरुषे निवेशिते यदि तज्जलं द्रोणमानं भवेत्तदा स पुरुषो मानप्राप्तः, यदि च तुलारोपितोऽर्धभार-मानः स्यात्तदा स उन्मानप्राप्तः, तत्र भारमानं—षट्सर्षपैर्यवस्त्वेको । गुंजेका च यवैस्त्रिभिः ॥ गुं-

जात्रयेण वल्ल स्याद् । गद्याणो ते च षोडश ॥ १ ॥ पले च दश गद्याणा–स्तेषां सार्धशतं मणे ॥ मणैर्दशभिरेका च । धटिका कथिता बुधैः ॥ २ ॥ धटिभिर्दशभिस्ताभि–रेको भारः प्रकीर्त्तितः ॥ अत्र तेषां सार्द्धशत मणे इति तेषा गद्याणानां इति वाच्य, न तु पलानां, पलानां सार्धशते तेन मणकथने हि भारे अष्टसप्ततिर्मणाः स्युस्तदर्धे च एकोनचत्वारिंशन्मणा एतावच्च शरीरमानं न संभवति, गद्याणानां सार्धशतेन मणकथने तु भारे चत्वारिंशत्शेरमानेन पादोना अष्ट मणाः किंचिदधिका जायते, संभवति तदर्धमानं पचशेराधिकपादोनचतुर्मणप्रमाण शरीरमिति, भवति च गद्याणकानां सार्धशतस्यापि मणत्वं कस्मिंश्चिद्देशे किंचिदूनशेरत्रयस्यापि मणत्वव्यवहारात्, तथा ' पमाणत्ति ' स्वांगुलेन अष्टोत्तरशतांगुलोच्च उत्तमपुरुषः, मध्यहीनपुरुषौ च षण्णवति ( ९६ ) चतुरशीत्यंगुलोच्चौ स्यातां, अत्र उत्तमपुरुषोऽपि अन्य एव, तीर्थकरस्तु द्वादशांगुलोष्णीषसद्भावेन विंशत्यधिकशतांगुलोच्चो भवति, ततश्च मानोन्मानप्रमाणैः प्रतिपूर्णानि सुजातानि सर्वांगानि शिरः प्रमुखाणि यत्र एवंविधं सुंदरं अंग यस्य तथा तं, पुनः किंवि०—

शशिवत्सौम्याकारं, कमनीयं, वल्लभदर्शनं, शोभनरूपं, दारकं प्रजनिष्यसीति ज्ञेयं। सोऽपि दारक एवंविधो भविष्यति, पुनः किंवि० त्यक्तबाल्यो जाताष्टवर्षः, पुनः किंवि० विज्ञानं परिणतमात्रं यस्य स ततः क्रमाच्च, किंवि० यौवनं अनुप्राप्तः; पुनः किंवि० ऋग्वेद (१) यजुर्वेद (२) सामवेद (३) अथर्वण (४) वेदानां, कीदृशानां ? इतिहासं पुराणं पंचमं येषां ते, तथा तेषां, पुनः कीदृशानां ? निघंटुर्नामसंग्रहः षष्ठो येषां ते, तथा तेषां, पुनः कीदृशानां ? अंगोपांगसहितानां, तत्र अंगानि शिक्षा १ कल्पो २ व्याकरणं ३ छंदो ४ ज्योति ५ निरूक्तयः ६ । उपांगानि अंगार्थविस्तररूपाणि, पुनः कीदृशानां ? तात्पर्ययुक्तानां ईदृशानां पूर्वोक्तानां चतुर्णां वेदानां स्मारकः, अन्येषां विस्मरणे वारकः, अन्येषां अशुद्धपाठनिषेधात् धारणसमर्थः, ईदृशो दारको भावी, पुनः किंवि० पूर्वोक्तानि षट् अंगानि विचारयतीति षडंगवित्, ज्ञानार्थत्वे तु पौनरुक्त्यं स्यात्, पुनः किंवि० षष्टितंत्रं कापिलीयं शास्त्रं तत्र विशारदः पंडितः, पुनः किंवि० गणितशास्त्रे, यथा—अर्धं तोये कर्दमे द्वादशांशः । षष्ठो भागो वालुकायां निमग्नः ॥ सार्धो हस्तो दृश्यते यस्य तस्य । स्तंभस्याशु ब्रूहि मानं वि-

चिंत्य॥१॥ स्तंत्रो हस्ताः ६, क्वचित् सिक्खाणेतिपाठ, तत्र सिक्खाणशब्देन आचारग्रंथः शिक्षाऽक्षराम्नायग्रंथ, कल्पश्च यज्ञादिविधिशास्त्र तत्र, तथा व्याकरणे शब्दशास्त्रे, तानि च विंशति., ऐंद्र १ जैनेंद्र २ सिद्धहेमचन्द्र ३ चांद्र ४ पाणिनीय ५ सारस्वत ६ शाकटायन ७ वामन ८ विश्रांत ९ बुद्धिसागर १० सरस्वतीकंठाभरण ११ विद्याधर १२ कलापक १३ भीमसेन १४ शैव १५ गौड १६ नंदि १७ जयोत्पल १८ मुष्टिव्याकरण १९ जयदेवाभिधानानि २० ॥ छंदःशास्त्रे पदभंजने व्युत्पत्तिरूपे टीकादौ इत्यर्थः, ज्योतिःशास्त्रे, एषु पूर्वोक्तेषु अन्येषु च बहुषु ब्राह्मणहितेषु शास्त्रेषु परिव्राजकसबंधिषु नयेष्वाचारशास्त्रेषु अतिनिपुणो भविष्यतीति योगः ॥ १० ॥

तस्मात् कारणात् उदारास्त्वया हे देवानुप्रिये स्वप्नाः दृष्टाः, यावत् आरोग्यतुष्टिदीर्घायुः कल्याणमंगलानां कारकास्त्वया हे देवानुप्रिये स्वप्ना दृष्टाः, इति कृत्वा भूयो भूयो वारंवारं अनुबृंहयति अनुमोदयति ॥ ११ ॥

ततः सा देवानंदाब्राह्मणी ऋषभदत्तस्य ब्राह्मणस्य पार्श्वे इमं अर्थं श्रुत्वा चेतसा अवधार्य

हृष्टा तुष्टा यावत् हर्षपूर्णहृदया, करतलाभ्यां कृतं दश नखा मिलिता यत्र तं, शिरसि आवर्त्तो यस्य तं, ईदृशं मस्तके करसंपुटं कृत्वा ततः सा देवानंदा एवं अवादीत्, किमित्याह—एवं एतदेव देवानुप्रिय तथैवैतद्देवानुप्रिय यथा भवद्भिरुक्तं यथास्थितं एतद्देवानुप्रिय, संदेहरहितं एतद्देवानुप्रिय, इप्सितं एतद्देवानुप्रिय, प्रतीष्टं युष्मन्मुखात् पतदेव गृहीतं देवानुप्रिय उभयधर्मोपतं देवानुप्रिय सत्यः स एषोऽर्थ इति, अथ येन प्रकारेण इमं अर्थं यूयं वदथ इति कृत्वा इति भणित्वा तान् स्वप्नान् सम्यग् अंगीकरोति; अंगीकृत्य ऋषभदत्तब्राह्मणेन सार्धं उदारान् मानुष्यकान् भोगार्हभोगान् भुंजाना विहरति ॥ १२ ॥

तस्मिन् काले तस्मिन् समये स शक्रो विहरतीति संबंधः, किंविशिष्टः? शक्रनामसिंहासनाधिष्ठाता, देवानां इंद्रः, देवेषु राजा कांत्यादिगुणै राजमान इति देवराजः, करधृतवज्रः, दैत्यनगरविदारकः, शतं क्रतवः श्राद्धपंचमप्रतिमारूपा यस्य स शतक्रतुः, इदं हि कार्तिकश्रेष्ठिभवापेक्षया, तथाहि—

पृथिवीभूषणनगरे प्रजापालो नाम राजा, कार्त्तिकनामा श्रेष्ठी, तेन श्राद्धप्रतिमानां शतं कृतं,

ततः शतक्रतुरिति ख्यातिः, एकदा च गैरिकपरिव्राजको मासोपवासी तत्रागतः, एकं कार्तिकं विना सर्वोऽपि लोकस्तद्भक्तो जातः, तच्च ज्ञात्वा कार्तिकोपरि गैरिको रुष्टः, एकदा च राज्ञा निमन्त्रितोऽव-दत्, यदि कार्तिकः परिवेषयति तदा तव गृहे पारणां करोमि, राज्ञा तथेति प्रतिपद्य कार्तिकायोक्त-मस्यं मद्गृहे गैरिकं भोजय, ततः कार्तिकेणोक्तं राजन् भवदाज्ञया भोजयिष्यामि, ततः श्रेष्ठिना भोज्यमानो गैरिको धृष्टोऽसीति अंगुलिना नासिका स्पृशंश्चेष्टां चकार, श्रेष्ठी दध्यौ यदि मया पूर्वं दीक्षा गृहीताऽभविष्यत्तदाऽद्य न पराभविष्यदिति विचिंत्याष्टाधिकसहस्रेण वणिक्पुत्रैः सह चारित्रं गृहीत्वा द्वादशांगीं अधीत्य द्वादशवर्षपर्यायः सौधर्मेन्द्रोऽभूत्, गैरिकोऽपि निजधर्मतस्तद्वाहनं ऐराव-णोऽजनत्, ततः कार्तिकोऽयमिति ज्ञात्वा पलायमानं तं धृत्वा शक्रः शीर्षं आरूढः, स च शक्रभाप-नार्थं रूपद्वयं कृतवान्, शक्रोऽपि तथा, एवं रूपचतुष्टयं, शक्रोऽपि तथा, ततश्चावधिना ज्ञातस्वरूपस्तं तर्जितवान्, तर्जितश्च स्वाभाविकं रूपं चक्रे इति कार्तिकश्रेष्ठिकथा ॥ ॥ १७ ॥

मंत्रिदेवपंचशत्या लोचनानि इंद्रकार्यकराणीति इंद्रसंबंधीन्येवेति सहस्राक्षः, मघा महामेघा

वशे संत्यस्येति मघवान्, पाकं दैत्यं शास्ति शिक्षयतीति पाकशासनः, मेरोर्दक्षिणतो यल्लोकार्धं तस्याधिपतिः, उत्तरार्धलोकस्य ईशानस्वामिकत्वात्, ऐरावणवाहनः, सुराणां इंद्र आह्लादकः, द्वात्रिंशल्लक्षविमानाधिपतिः, अरजस्कानि रजोरहितानि स्वच्छतया अंबरतुल्यानि वस्त्राणि अंबरवस्त्राणि तानि धरतीति अरजोंबरवस्त्रधरः, आलगितौ यथास्थानं परिहितौ मालामुकुटौ येन स तथा, नवाभ्यामिव हेमसत्काभ्यां चारुभ्यां मनोज्ञाभ्यां चित्राभ्यां चित्तकारिभ्यां चपलाभ्यां इतस्ततः कंपमानाभ्यां ईदृशाभ्यां कुंडलाभ्यां विलिख्यमानौ गल्लौ यस्य स तथा, महती ऋद्धिः, छत्रादिराजचिन्हरूपा यस्य स तथा, महती द्युतिराभरणशरीरादिकांतिर्यस्य स तथा, महाबलः, महायशाः, महान् अनुभावो महिमा यस्य स तथा, महासुखः, पुनः किंवि० भासुरं देदीप्यमानं शरीरं यस्य स तथा, पुनः किंवि० प्रलंबा आपादलंबिनी वनमाला पंचवर्णपुष्पमाला यस्य स तथा, अथ स कुत्र वर्तते इत्याह–सौधर्मे कल्पे सौधर्मावतंसके विमाने सुधर्मायां सभायां शक्र इति नामके सिंहासने, अथ स किं कुर्वन् विहरतीत्याह–स इंद्रस्तत्र देवलोके द्वात्रिंशद्विमानावासशतसहस्राणां

द्वात्रिंशल्लक्षविमानानां इत्यर्थ. चतुरशीतिसामानिकसहस्राणां, ० हि इंद्रसमानऋद्धयः त्रयस्त्रिं
शा महत्तरकल्पा. पूज्यस्थानीया मंत्रिकल्पा वा तेषां चतुर्णां लोकपालानां सोम १ यम २ वरुण
३ कुबेरा ४ भिधानाना अष्टानां अग्रमहिषीणां, ताहि पद्मा १ शिवा २ शची ३ अजू ४ अमला ५
अप्सराः ६ नवमिका ७ रोहिणी ० त्यभिधाना , किंविशिष्टानां तासां सपरिवाराणां, तथा तिसृणां
पर्षदां, बाह्य १ मध्यमा २ भ्यंतराणां सप्तानां अनिकानां गंधर्व १ नाटक २ अश्व ३ गज ४ रथ
५ सुभट ६ वृषभ ७ संज्ञकानां भवनपत्यादीनां, पृष्ठस्थाने महिषा भवंतीति ज्ञेयं, तथा सप्तानां
सेनापतिनां, चतसृषु दिक्षु प्रत्येकं चतुरशीतिसहस्रमितानामात्मरक्षकदेवानां, सर्वसंख्यया च षट्-
त्रिंशत् सहस्राधिकलक्षत्रयमितानां ( ३३६००० ) अन्येषां च बहूनां सौधर्मकल्पवासिनां वैमानिका-
नां देवानां देवीनां च अधिपतिकर्मरक्षा इत्यर्थ. अग्रगामित्वं नायकत्वं भर्तृत्वं पोषकत्वं गुरुतरत्वं
आज्ञया ईश्वरो य सेनापतिः, तस्य य स्वसैन्यंप्रति अद्भुतं आज्ञाप्राधान्यं इत्यर्थः. कारयन् नियुक्तै
पालेमाणेत्ति पालयन् स्वयमेव, पुन कि कुर्वन्? तत्र महतेति रवेण इत्यनेन योज्यते. महता

शब्देनेत्यर्थः, केषां इत्याह-अविच्छिन्नं एवंविधं यत् नाटकं गीतं प्रसिद्धं, वादितानि यानि तंत्र्यादीनि, तेषां तत्र तंत्री वीणा तलताला हस्ततालाः, त्रुटितानि अन्यवादित्राणि, घनमृदंगो मेघध्वनिमर्दलो, तथा पटुपटहस्य यद्वादितं वादनं, एतेषां महता शब्देन देवयोग्यान् भोगार्हभोगान् भुंजानो विहरति. पुनः स किं कुर्वन्नित्याह-इमं संपूर्णं जंबूद्वीपं विपुलेन विस्तीर्णेन अवधिना अवलोकयन् अवलोकयन् विहरति आस्ते इतिसंबंधः ॥

तत्र समये श्रमणं भगवंतं महावीरं अस्मिन्नेव जंबूद्वीपनाम्नि द्वीपे भरतक्षेत्रे दक्षिणार्धभरते ब्राह्मणकुंडग्रामनामके नगरे ऋषभदत्तस्य ब्राह्मणस्य, किंवि० कोडालेः समानं गोत्रं यस्य स तथा, कोडालगोत्रस्येत्यर्थः, तस्य भार्याया देवानंदाया ब्राह्मण्या जालंधरसगोत्रायाः कुक्षौ गर्भतया उत्पन्नं. पश्यति दृष्ट्वा हृष्टः तुष्टः चित्तेन आनंदितः प्रीतिर्मनसि यस्य सः, परमं सौमनस्यं प्राप्तः, सौमनस्यं तुष्टचित्तत्वं हर्षवशेन विसर्पमानं हृदयं यस्य सः, धाराहतं यत्कदंबस्य सुरभिकुसुमं तद्वत् रोमांचितः, अत एव उच्छ्वितरोमकूपः, तथा विकसितं वरं प्रधानं यत्कमलं तद्वत् आननं मुखं नय-

ने च यस्य स तथा, प्रमोदपूरितत्वात्, तत्र प्रचलितानि भगवद्दर्शनेन अधिकसंभ्रमवत्त्वात् कम्पितानि वराणि कटकानि कंकणानि, त्रुटिताश्च बाहुरक्षकाः, 'बहिरखां' इति लोके, केयूराणि चांगदानि 'बाजुबंध' इति लोके, मुकुट कुण्डले प्रसिद्धे, एतानि प्रचलितानि यस्य स, तथा पुनः किंवि० हाराधिराजमानं 'वच्छत्ति' हृदयं यस्य स, तथा ततो विशेषणसमासः, पुनः किंवि० प्रलंबमान यत्प्रालंबो झुम्बनकं दोलायमानानि भूषणानि च तानि धरति यः स तथा सादरं त्वरितं चपलं वेगेन सुरेन्द्रः सिंहासनादभ्युत्तिष्ठति, अभ्युत्थाय यावत् यत्र पादौ स्थाप्येते तत्पादपीठं कथ्यते, तस्मात्प्रत्यवतरति, प्रत्यवतीर्य च पादुके अवमुंचति, किं विशिष्टे ते? वैडूर्यं मरकत नाम नीलरत्नं, वरिष्टे प्रधाने रिष्टअंजननाम्नी श्यामरत्ने, एते रत्ने. कृत्वा निपुणेन शिल्पिना रचिते इव, पुनः किंवि० देदीप्यमानानि मणयश्चंद्रकांतादयः, रत्नानि कर्केतनादीनि, तैर्मण्डिते ईदृश्यौ अवमुंचति, पादुके अवमुच्य एकपटं उत्तरासंगं करोति, तत् कृत्वा च अंजलिकरणेन मुकुलीकृतौ योजितौ अग्रहस्तौ येन स तथाभूतः सप्ताष्टपदानि तीर्थकराभिमुखोऽनुगच्छति, तथा कृत्वा वामं जानुं उत्पाटयति, भूमौ अल-

ग्रं स्थापयति, तथा संस्थाप्य दक्षिणं जानुं धरणीतले निवेश्य वारत्रयं मस्तकं धरणीतले निवेशयति, तथा कृत्वा इषत् प्रत्युन्नमति, उत्तरार्धेन ऊर्ध्वो भवतीत्यर्थः, ऊर्ध्वीभूय कटकत्रुटिकाः कंकबाहुरक्षकास्ताभिः स्तंभिते भुजे वालयति, वालयित्वा करतलपरिगृहीतं हस्तसंपुटघटितं दश नखाः समुदिता यत्र स तथा तं, शिरसि मस्तके आवर्त्तः प्रदक्षिणभ्रमणं यस्य, एवंविधं मस्तके अंजलिं कृत्वा एवं अवादीत्, किं तदित्याह—

नमुत्थुणंति, णंकारः सर्वत्र वाक्यालंकारार्थः, नमोऽस्तु, केभ्यः ? अर्हद्भ्यस्त्रिभुवनपूजायोग्येभ्यः, कर्मवैरिहननात् 'अरिहंताणं' इति पाठः, कर्मबीजाऽभावेन भवक्षेत्रे प्ररोहणाऽभावात् 'अरुहंताणं' इतिपाठश्च, भगवद्भ्यो ज्ञानादिवद्भ्यः, आदिकरेभ्यः, स्वस्वतीर्थापेक्षया धर्मस्येति ज्ञेयं, तीर्थकरेभ्यः, तत्र तीर्थं संघः प्रथमगणधरो वा, तत्स्थापकेभ्यः, पुनः किंवि० स्वयं संबुद्धेभ्यः, न तु परोपदेशेन, पुनः किंवि० पुरुषेषु उत्तमेभ्यः, पुनः किंवि० पुरुषसिंहेभ्यः, कर्मवैरिषु निर्दयशूरत्वात्, पुनः किंवि० पुरुषवरपुंडरीकेभ्यः, पुरुषेषु वरं प्रधानं यत्पुंडरीकं श्वेतपद्मं तत्तुल्येभ्यः, यथा पुंडरीकं पंके

जातं, जलैर्वृद्धं, जलपङ्कौ त्यक्त्वा उपरि तिष्ठति, एवं भगवंतोऽपि कर्मकर्दमे उत्पन्नाः, भोगजलेन वृद्धाः, कर्मभोगौ त्यक्त्वा पृथग् तिष्ठति, पुन किंवि० पुरुषवरगन्धहस्तिभ्यः, यथा गन्धहस्तिगन्धेन अन्ये गजाः पलायंति, तथा च भगवत्प्रभावेण दुर्भिक्षादयोऽपि, पुनः किंवि० लोकेषु भव्यसमूहेषु चतुस्त्रिंशदतिशययुक्तत्वात् उत्तमा., लोकोत्तमास्तेभ्यो लोकोत्तमेभ्यः, पुन. किंवि० लोकानां भव्यानां नाथेभ्यो योगक्षेमकारिभ्य., तत्र योगोऽप्राप्तज्ञानादिप्रापणं, क्षेमं च प्राप्तज्ञानादिरक्षणं, पुन. किंवि० लोकानां सर्वजीवानां हितेभ्यो हितकारकेभ्यो दयाप्ररूपकत्वात्, पुनः किंवि० लोकप्रदीपेभ्यः, मिथ्यात्वध्वांतनाशकत्वात्, पुन किंवि० लोकप्रद्योतकरेभ्यः, सूर्यवत् सर्ववस्तुप्रकाशकत्वात्, पुनः किंवि० भयाना अभावो अभय, तद्दायकेभ्यः, भयानि सप्त, तद्यथा—मनुष्यस्य मनुष्याद्भय इहलोकभय १ मनुष्यस्य देवादेर्भय परलोकभय २ धनादिग्रहणाद्भयं आदानभय ३ बाह्यनिमित्तनिरपेक्षभयं अकस्माद्भय ४ आजीविकाभयं ५ मरणभयं ६ अपयशोभयं ७ इति ॥ पुन. किंवि० चक्षुःसमानश्रुतज्ञानदायकेभ्यः, पुन. किंवि० मार्गस्य सम्यग्दर्शनादिमोक्षमार्गस्य दायकेभ्य., यथा के-

चिज्ञानाश्चौरैर्लुटितधना लोचने पट्टबंधं कृत्वा उन्मार्गे पातिताः स्युस्तांश्च कोऽपि पट्टकापनयनेन धनार्पणेन मार्गदर्शनेन उपकारी भवति, एवं भगवंतोऽपि कषायैर्लुटितधर्मधनानां मिथ्यात्वाच्छादितविवेकनयनानां श्रुतज्ञानसद्धर्ममुक्तिदानेन उपकारिणो भवंति; पुनः किंवि० भवभीतानां शरणदायकेभ्यः, पुनः किंवि० जीवनं जीवः, सर्वथा मरणाऽभावस्तद्दायकेभ्यः, कचिद् ' बोहिदयाणंति ' पाठस्तत्र बोधिः सम्यक्त्वं, तद्दायकेभ्यः, पुनः किंवि० धर्मश्चारित्ररूपस्तद्दायकेभ्यः, पुनः किंवि० धर्मोपदेशदायकेभ्यः. धर्मदेशकत्वं च एतेषां धर्मस्वामित्वे सति, न पुनर्नटवदिति दर्शयन्नाह, पुनः किंवि० धर्मनायकेभ्यः, पुनः किंवि० धर्मस्य सारथय इव, यथा सारथिः उन्मार्गे गच्छंतं रथं मार्गे आनयति, एवं भगवंतोऽपि मार्गभ्रष्टं जनं मार्गे आनयति, अत्र च मेघकुमारदृष्टांतो यथा—

एकदा श्रीवीरस्वामी राजगृहे समवसृतस्तत्र श्रेणिकधारिण्योः सुतो मेघकुमारः प्रतिबुद्धः, कथमपि पितरौ आपृच्छयाऽष्टौ प्रियाः परित्यज्य दीक्षां गृहीतवान्, प्रभुणा च शिक्षार्थं स्थविराणां अर्पितस्तत्र अनुक्रमेण संस्तारककरणे द्वारपार्श्वे मेघकुमारस्य संस्तारक आगतस्ततः प्रश्रवणाद्यर्थं

गच्छदागच्छत्साधुपादरजोभिर्जरित, समग्रायां रजन्या क्षणमपि निद्रां न प्राप्त, चिंतयामास क्व मे सुखशय्या, क्वचेदं भूलुठनं, कियत्कालं इदं दुःखं मया सोढव्यं, ततः प्रातः प्रभुमापृच्छ्य गृहं यास्यामीति प्रभाते प्रभुपार्श्वमागतः, प्रभुणापि मधुरवचनेन आभाषितः, वत्स त्वया निशि एवं दुर्ध्यानं कृतं, अविचारितं एतत्, नरकादिदुःखाग्रे कियदेतद्दुःख ? तान्यपि दुःखानि सागरोपमाणि अनेकानि यावत् प्राणिना बहुशः सोढानि, किंच—वरमग्गिंमि पवेसो। वर विसुद्धेण कम्मुणा मरण ॥ मा गहियव्वयभंगो। मा जीय खलिअसीलस्स ॥ १ ॥ तथा इदं चारित्रादिकष्टानुष्ठानं महते फलाय भवति, यथा त्वयैव पूर्वभवे अनुभूत धर्मार्थे कष्टं एतावत्फलप्रापक अजवत्, शृणु ततः पूर्वभवान्, यथा इतस्तृतीये भवे वैताढ्यभूमौ षड्दंत शुभ्रो हस्तिनीसहस्रभर्ता सुमेरुप्रभनामा त्वं गजराजोऽभू, अन्यदा दावानलाद्भीतः पलायमानस्तृषित एकमहल्लं एक सरः प्राप्तस्तत्र चाऽज्ञातमार्गः पंके निमग्नो नीरात्तीराच्च भ्रष्टः, पूर्ववैरिहस्तिना दंतैर्हन्यमान सप्त दिनानि वेदनां अनुभूय सविंशं शतं आयुः समाप्य विंध्याचले रक्तवर्णश्चतुर्दंतः सप्तहस्तिनीशतभर्ता हस्ती जातः,

क्रमेण च दावानलं दृष्ट्वा जातजातिस्मरणः पूर्वभवं स्मृतवान्, ततो दावानलपराभवरक्षणाय योजनपरिमितं मंडलं कृतवान्, तत्र वर्षाणां आदौ मध्ये अंते च यत् किंचित् तृणवल्ल्यादि भवति, तत् सर्वं उन्मूलयति. अन्यदा च दावानलाद्भीताः सर्वे वनजीवास्तन्मंडलं व्याप्तवंतस्त्वमपि शीघ्रं आगत्य तत्र मंडले स्थितः, कदाचिद्देहकंडूयनेच्छया एकं पादं उत्पाटितवान्, उत्पाटिते च तस्मिन् पादे अन्यत्र सांकीर्ण्यपीडितः शशकस्तत्र आगत्य स्थितः, गात्रं कंडूयित्वा च पादं मुंचन् शशकं दृष्ट्वा तद्दयया सार्धं दिनद्वयं तथैव पादं स्थापितवान्, उपशांते च दवानले सर्वेषु विलगितपादो झटिति भूमौ पतितस्ततो दिनत्रयं क्षुधया तृषा च पीडितः कृपापरः शतवर्षं आयुः परिपाल्यात्र श्रेणिकधारिण्योः पुत्रत्वेन जातस्त्वं, ततो भो मेघ ! तदानीं तिर्यग्भवेऽपि त्वया धर्मार्थं तत्कष्टं सोढं, तर्हि जगद्वंद्यसाधूनां चरणैर्घर्षमानः किं दूयसे, इत्याद्युपदेशेन भगवता धर्मे स्थिरीकृतो मेघकुमारो नेत्रे विमुच्याऽन्यत्सर्वं शरीरं मया व्युत्सृष्टं इत्यभिग्रहं कृतवान्, क्रमात् निरतिचारं चारित्रमाराध्यां॑ मासिकीं संलेखनां कृत्वा विजयविमाने सुरोऽभवत्, ततः च्युतो महाविदेहे सेत्स्यति, इति

श्रीमेघकुमारकथा ॥

॥ इति महोपाध्याय श्रीकीर्तिविजयगणिशिष्योपाध्याय श्रीविनयविजयगणिविरचितायां कल्पसुबोधिकायां प्रथमं व्याख्यानं समाप्तं ॥ ग्रंथाग्रंथ—६६५ ॥ श्री ॥

॥ अथ द्वितीय व्याख्यान आरभ्यते ॥

धम्मवरेत्ति, त्रय. समुद्राश्चतुर्थो हिमवानिति चत्वारोंतास्तेषु प्रभुतया भवाश्चातुरंताश्चतुरतस्वामिनः, एवंविधा ये चक्रवर्तिनस्ते चातुरतचक्रवर्तिनः, धर्मस्य वराः श्रेष्टाश्चातुरंतचक्रवर्तिनो धर्मवरचातुरंतचक्रवर्तिनः, धर्मनायका इत्यर्थः, तेभ्यः समुद्रे मज्जतां द्वीप इव संसारसमुद्रे आधार, त्राणं अनर्थप्रतिघातहेतुः, अत एव कर्मोपद्रवेभ्यो भीतानां शरणं सौख्याय दुःस्थैराश्रीयते इति गतिः, भवकूपपतत्प्राणिनां अवलंबनं, दीवोत्ताणं इत्यादीनि पदानि प्रथमांतान्यपि चतुर्थ्यर्थषष्ठ्यंततया व्याख्येयानि, अप्रतिहते कटकुड्यादिभिरस्खलिते वरे प्रधाने ज्ञानदर्शने केवलज्ञानदर्शने धरंति ये

ते तथा तेभ्यः, व्यावृत्तं गतं छद्म घातिकर्माणि येभ्यस्ते व्यावृत्तछद्मानस्तेभ्यः, रागद्वेषजेतृभ्यः उपदेशदानादिना भव्यसत्वै रागादिजीपकास्तेभ्यः, भवसमुद्रं तीर्णेभ्यः, सेवकानां तारकेभ्यः, सर्वं तत्वबुद्धेभ्यः, अन्येषां बोधकेभ्यः, मुक्तेभ्यः, कर्मपंजरात् सेवकानां मोचकेभ्यः, सर्वज्ञेभ्यः सर्वदर्शिभ्यः, निरुपद्रवं अचलं रोगरहितं अनंतं वस्तुविषयं, ज्ञानस्वरूपत्वात् क्षयरहितं, साद्यनंतत्वात् व्याबाधारहितं, पुनरागमनं, तेन रहितं, एवंविधं सिद्धिगतिनामकं यत्स्थानं तत्संप्राप्तेभ्यः, नमो जिनेभ्यो जितभयेभ्यः, एवं सर्वजिनान्नमस्कृत्याथ शक्रः श्रीवीरं नमस्करोति, नमोऽस्तु श्रमणस्य भगवतो महावीरस्य पूर्वतीर्थकरैर्निर्दिष्टस्य यावत् सिद्धिगतिनामकं स्थानं संप्राप्तुकामस्य, श्रीवीरो हि अथ मुक्तिं यास्यतीति, एवं विशेषणं, इमानि सर्वाण्यपि विशेषणानि चतुर्थ्येकवचनांतानि ज्ञेयानि ॥

वंदामि अहं भगवंतं तत्र गतं देवानंदाकुक्षौ स्थितं इत्यर्थः, अत्र स्थितोऽहं पश्यतु मां भगवान् तत्र स्थित इहस्थितं इति उक्त्वा श्रमणं भगवंतं महावीरं वंदते नमस्यति, वंदित्वा नमंस्य-

यित्वा पूर्वाभिमुख· सिंहासने सन्निषण्ण उपविष्ट इत्यर्थः ततः तस्य शक्रस्य देवेंद्रस्य देवानां राज्ञ·, अयं एतद्रूप आत्मविषय इत्यर्थ , चिंतात्मकः, प्रार्थितोऽभिलाषरूपः, मनोगतो न तु वचनेन प्र काशित·, इदृश सकल्पो विचार· समुत्पन्न·, ॥ १६ ॥

कोऽसौ इत्याह–न निश्चयेन एतद्भूतं अतीतकाले, न भवति एतत् वर्त्तमानकाले, एतत् न भविष्यति आगामिनि काले, किं तदित्याह–यत् अर्हंतो वा, चक्रवर्तिनो वा, बलदेवा वा, वासुदेवा वा, अत्यकुलेपु शूद्रकुलेषु इत्यर्थः. प्रांतकुलेपु अधमकुलेषु, तुच्छा अल्पकुटुंबास्तेपा कुलेषु वा, दरिद्रा निर्धनास्तेपां कुलेषु वा, कृपणा अदातारस्तेपा कुलेपु वा, भिक्षाकास्तालाचरास्तेपा कुलेपु वा, ब्राह्मणकुलेपु वा, तेपां भिक्षुकत्वात्, एतेषु आगता अतीतकाले, आगच्छंति वर्तमान-काले, आगमिष्यंति अनागतकाले, एतन्न भूतमित्यादियोगः ॥ १७ ॥

तर्हि अर्हदादयः ४ केपु कुलेपु उत्पद्यते इत्याह–एवं अनेन प्रकारेण खलु निश्चये अर्हंतो वा, चक्रवर्तिनो वा, बलदेवा वा, वासुदेवा वा, उग्राः श्रीआदिनाथेन आरक्षकतया स्थापिता

जनाः, तेषां कुलेषु, भोगा गुरुतया स्थापिताः, तेषां कुलेषु, राजन्याः श्रीऋषभदेवेन मित्रस्थाने स्थापिताः, तेषां कुलेषु, ईक्ष्वाकाः श्रीऋषभदेववंशोद्भवाः, तेषां कुलेषु, क्षत्रियाः श्रीआदिदेवेन प्रजालोकतया स्थापिताः, तेषां कुलेषु, तत्र 'हरित्ति' पूर्वभववैरिनीतहरिवर्षक्षेत्रयुगलं. तस्य वंशो हरिवंशस्तत्कुलेषु, अन्यतरेषु वा विशुद्धे जातिकुले यत्र एवंविधेषु वंशेषु, तत्र जातिर्मातृपक्षः, कुलं पितृपक्षः, इदृशेषु कुलेषु आगता अतीतकाले, आगच्छंति वर्त्तमानकाले, आगमिष्यंति अनागतकाले, न तु पूर्वोक्तेषु ॥ १७ ॥

तर्हि भगवान् कथं उत्पन्न इत्याह–अस्ति पुनः एषोऽपि भावो भवितव्यताख्यः, लोके आश्चर्यभूतः, अनंतासु उत्सर्पिण्यवसर्पिणीषु व्यतिक्रांतासु इदृशः कश्चित्पदार्थ उत्पद्यते. तत्रास्यां अवसर्पिण्यां इदृशानि दश आश्चर्याणि जातानि, यथा—

उवसग्गा १ गब्भहरणं २। इत्थीतित्थं ३ अभाविआपरिसा ४ ॥ कण्हस्स अवरकंका ५। अवयरणं चंदसूराणं ६ ॥ १ ॥ हरिवंसकुलुप्पत्ती ७। चमरुप्पाओ ८ अट्ठसया सिद्धा ९ ॥ अस्संजया-

ण पूआ १० । दसवि अणंतेण कालेण ॥ २ ॥ व्याख्या–उवसग्गात्ति उपसर्गा उपद्रवास्ते हि श्रीवीरस्वामिन छद्मस्थावस्थायां अग्रे वक्ष्यमाणा बहवोऽभवन्, किंच अस्य भगवतः केवल्यवस्थायां अपि स्वप्रभावप्रशमितसर्वोपद्रवस्यापि स्वशिष्याभासेन गोशालकमात्रेणापि उपद्रवः कृतस्तथाहि–एकदा श्रीवीरो विहरन् श्रावस्त्यां समवसृतः, गोशालकोऽपि जिनोऽहं इति लोके ख्यापयन् तत्रागतः, ततो द्वौ जिनौ श्रावस्त्यां वर्तेते इति लोके प्रसिद्धिर्जाता, तां श्रुत्वा श्रीगौतमेन भगवान् पृष्टः, स्वामिन् कोऽसौ द्वितीयो जिन इति स्वं ख्यापयति, श्रीभगवानुवाच गौतम नाय जिनः, किंतु शरवणग्रामवासी मंखलेः सुभद्राभार्यायां गोबहुलब्राह्मणगोशालायां जातत्वात् गोशालनामा अस्माकं एव शिष्यीभूतोऽस्मत्त एव किंचिद्बहुश्रुतीभूतो मुधा स्वं जिनं ख्यापयति, तत सर्वत्र प्रसिद्धां इमां वार्त्तां आकर्ण्य रुष्टो गोशालो गोचरचर्यां गत आनंदनामानं भगवच्छिष्यं जगाद, भो आनंद ! एक दृष्टांत शृणु यथा—

केचिद्वणिजो धनोपार्जनाय विविधक्रयाणकपूर्णशकटाः परदेशं गच्छतोऽरण्ये प्रविष्टास्तत्र जला-

ऽभावेन तृषाकुला जलं गवेषयंतः चत्वारि वल्मीकशिखराणि पश्यंतिस्म, ततस्तैरेकं शिखरं स्फोटितं, तस्माद्विपुलं जलं निर्गतं, तेन जलेन गतपिपासाः पयःपात्राणि पूरितवंतः, तत एकेन वृद्धेनोक्तं सिद्धं अस्माकं समीहितं, अथ मा स्फोटयंतु द्वितीयं शिखरं, इति निवारिता अपि द्वितीयं स्फोटयामासुस्तस्माच्च सुवर्णं प्रापवंतः, तथैव वृद्धवारिता अपि तृतीयं स्फोटितवंतस्तस्माद्रत्नानि प्राप्य तथैव वृद्धवारिता अपि लोभांधाश्च चतुर्थं अपि स्फोटयंतिस्म, तस्माच्च प्रादुर्भूतेन दृष्टिविषसर्पेण सर्वेऽपि स्वदृष्टिपातेन पंचत्वं प्रापिताः, सहितोपदेशको वणिक् तु न्यायित्वात् आसन्नदेवतया स्वस्थाने मुक्तः. एवं तव धर्माचार्योऽपि एतावत्या स्वसंपदा असंतुष्टो यथा तथा भाषणेन मां रोषयति, तेनाहं स्वतपस्तेजसा धक्ष्यामि, ततस्त्वं शीघ्रं तत्र गत्वा एनं अर्थं तस्मै निवेदय, त्वां वृद्धवणिजमिव हितोपदेशकत्वात् जीवंतं रक्ष्यामीति श्रुत्वा भीतोऽसौ मुनिर्भगवदग्रे सर्वं व्यतिकरं कथितवान्, ततो भगवता उक्तं, भो आनंद शीघ्रं त्वं गौतमादीन् मुनीन् कथय, यत एष गोशाल आगच्छति, न केनाप्यस्य संभाषणं कर्त्तव्यं, इतस्ततः सर्वे प्रसरंतु, ततस्तैस्तथा कृते गोशाल आ-

गत्य भगवंतं अवादीत् भो काश्यप ! किमेवं वदसि, यदयं गोशालो मंखलिपुत्र इत्यादि, स तव शिष्यस्तु मृत, अहं तु अन्य एव, परीषहसहनसमर्थं तच्छरीरं ज्ञात्वा अधिष्ठाय स्थितोऽस्मि, एवं च भगवत्तिरस्कारं असहमानौ सुनक्षत्रसर्वानुभूती अनगारौ मध्ये उत्तरं कुर्वाणौ तेन तेजोलेश्यया दग्धौ स्वर्गं गतौ, ततो भगवता उक्त, भो गोशाल ! स एव त्वं, नान्यो मुधा किं आत्मानं गोपयसि ? नह्येवं आत्मा गोपयितुं शक्य., यथा कश्चिच्चोर आरक्षकैर्दृष्टोऽङ्गुल्या तृणेन वा आच्छादयति, स किं आच्छादितो भवति ? एवं च प्रभुणा यथास्थितेऽभिहिते स दुरात्मा भगवदुपरि तेजोलेश्यां मुमोच, सा च भगवंतं त्रिःप्रदक्षिणीकृत्य गोशालकशरीरं प्रविष्टा, तया च दग्धशरीरो विविधा वेदनां अनुभूय सप्तमरात्रौ मृतः, भगवानपि तस्यास्तापेन षण्मासीं यावल्लोहितवर्चोबाधां अनुभूतवान्, तदेव नामस्मरणशमितसकलदुःखस्य भगवतोऽप्येवं उपसर्गस्तदाश्चर्यं ( १ )

( गब्भहरणंति ) गर्भस्य हरणं उदरांतरमोचनं, तत् कस्यापि जिनस्य न अभूत् पूर्वं, श्रीवीरस्य जातं, इत्याश्चर्यं ( २ )

( इत्थीत्ति ) तीर्थंकरा हि भगवंतः पुरुषोत्तमा एव भवंति, अत्रावसर्पिण्यां च मिथिलापतिकुंजराजस्य पुत्री मल्लिनाम्नी एकोनविंशतितमजिनत्वेनोत्पन्ना, तीर्थं प्रवर्तितवंतीति आश्चर्यं. ३.

अभाविता पर्षद्, जगवतो हि देशना कदापि निष्फला न जवति, अत्र च समुत्पन्नकेवलेन श्रीवर्धमानस्वामिना प्रथमसमवसरण एव देशना दत्ता, न च तया कस्यापि विरतिपरिणामो जात इत्याश्चर्यं. ४.

( कह्रस्सत्ति ) कृष्णस्य नवमवासुदेवस्य डौपदीनिमित्तं अपरकंकागमनं आश्चर्यं, तच्चैवं— पुरा किल पांडवजार्यया डौपद्या असंयतत्वान्नारदस्य अभ्युत्थानादि न कृतं, तेन च रुष्टेन तस्याः कष्टे पातनार्थं धातकीखंरुभरते अपरकंकाराजधानीप्रजोः पद्मोत्तरस्य स्त्रीलुब्धस्य पुरतो रूपवर्णनं कृतं, तेनापि स्वमित्रदेवेन डौपदी स्वगृहं आनायिता, इतश्च पांरुवमात्रा कुंत्या विज्ञपितेन कृष्णेन डौपदीगवेषणव्यग्रेण नारदमुखादेव स समाचारो लब्धस्ततः सोऽपि आराधितसुस्थितदेवताप्रदत्तमार्गो द्विलक्षयोजनायामं लवणसमुद्रं अतिक्रम्य अपरकंकां गतस्तत्र च तार्जितपांरुवं पद्मोत्तरं न

रसिंहरूपकरणेन विजित्य द्रौपदीवचसा जीवंतं मुक्त्वा च द्रौपद्या सह पश्चाद्वलितः, वलमानश्च शंख आपूरितवान्, तत् श्रुत्वा च विहरमानमुनिसुव्रतजिनवचनेन कृष्ण आगतं ज्ञात्वा मिलनोत्सुकः कपिलवासुदेवोऽपि जलधितटमुपेत्य शंखं आपूरितवान्, ततो मिथः शंखशब्दौ मिलितौ, ततोऽस्यां अवसर्पिण्यां कण्हस्स अपरककागमनं आश्चर्यं. ५

( अवयरण चंदसूराणंति ) यत् कोशांब्यां भगवतः श्रीवर्धमानस्वामिनो वंदनार्थं मूलविमानेन सूर्यचंद्रमसौ उत्तीर्णौ, तदाश्चर्यं ६

हरिवंसकुलुप्पत्तित्ति, सा चैवं-कोशांब्यां सुमुखो राजा, तेन वीरकशालापतिभार्या वनमालानाम्नी सुरूपेति स्वांतःपुरे क्षिप्ता, स शालापतिस्तस्या वियोगेन विकलो जातो य कंचन पश्यति तं वनमाला वनमालेति जल्पयति. एवं च कौतुकाक्षिप्तैरनेकैर्लोकैः परिवृतः पुरे भ्रमन् वनमालया समं क्रीडता राज्ञा दृष्टस्ततश्चाभ्याचिरनुचितं कृतं, इति चिंतयतौ तौ दंपती तत्क्षणाद्विद्युत्पातेन मृतौ, हरिवर्षक्षेत्रे युगलित्वेन समुत्पन्नौ, शालापतिश्च तौ मृतौ श्रुत्वा आ॰ पापिनोः पापं लग्नं, इति सा-

वधानोऽभूत्, ततोऽसौ वैराग्यात्तपस्तप्त्वा व्यंतरोऽभूत्, विभंगज्ञानेन च तौ दृष्ट्वा चिंतितवान्, अहो इमौ मद्वैरिणौ युगलसुखं अनुभूय देवौ भविष्यतस्तत इमौ दुर्गतौ पातयामीति विचिंत्य स्वशक्त्या संक्षिप्तदेहौ तौ इहानीतवान्, आनीय च राज्यं दत्वा सप्त व्यसनानि शिक्षितौ, ततस्तौ तथाभूतौ नरकं गतौ. अथ तस्य वंशो हरिवंशः, अत्र युगलिकस्यात्रानयनं शरीरायुःसंक्षेपणं नरकगमनं सर्वं आश्चर्यं. ७.

( चमरुप्पाउत्ति ) चमरस्य असुरकुमारराजस्य उत्पातः, स चैवं—पूरणनामा ऋषिस्तपस्तप्त्वा चमरेंद्रतया उत्पन्नः, स च नवोत्पन्नः शिरःस्थं सौधर्मेंद्रं विलोक्य कोपाक्रांतः परिघं गृहीत्वा श्रीवीरं शरणीकृत्य सौधर्मेंद्रात्मरक्षकांस्त्रासयन् सौधर्मावतंसकविमानवेदिकायां पादं मुक्त्वा शक्रं आक्रोशयामास, ततो रुष्टेन शक्रेण जाज्वल्यमानं वज्रं तंप्रति मुक्तं, ततोऽसौ भीतो भगवत्पादयोर्लीनस्ततो ज्ञातव्यतिकरेण इन्द्रेण सहसागत्य चतुरंगुलाऽप्राप्तं वज्रं गृहीतं, भगवत्प्रसादान्मुक्तोऽसीत्युक्त्वा चमरो मुक्तः, इदं चमरस्योर्ध्वगमनं आश्चर्यं. ८.

(अट्ठसयत्ति) एकस्मिन् समये उत्कृष्टावगाहनावंतो अष्टाधिकशतमिता न सिध्यति, ते च अस्यां अवसर्पिण्यां सिद्धाः, यत ऋषभो १ ऋषभस्य सुता ९९ भरतेन विवर्जिताश्च नवनवतिः, अष्टौ भरतस्य सुताः शिवं गता एकसमयेन. ( १०८ ) ९.

( असंजयाणत्ति ) असंयता असंयमवंत आरंभपरिग्रहप्रसक्तास्तेषा, संयता एव सर्वदा पूज्यंते, अस्यां अवसर्पिण्यां तु नवमदशमजिनयोरंतरे असंयतादीना अपि ब्राह्मणादीना पूजाप्रवृत्तिरिति आश्चर्यं १०

इमानि दशापि आश्चर्याणि अनंतकालातिक्रमे अस्यां अवसर्पिण्यां जातानि, एवं च कालसाम्यात् शेषेष्वपि चतुःषु भरतेषु पचसु ऐरवतेषु प्रकारांतरेण दश आश्चर्याणि ज्ञेयानि, अथ दशानां आश्चर्याणां तीर्थव्यक्तिः—अष्टाधिकशतसिद्धिगमनं श्रीऋषभतीर्थे १, हरिवंशोत्पत्तिः शीतलतीर्थे २, अपरकंकागमनं श्रीनेमितीर्थे ३, स्त्रीतीर्थंकरी मल्लितीर्थे ४, असंयतपूजा सुविधिजिनतीर्थे ५ ॥ शेषाणि च उपसर्ग १ गर्भापहार २ अभाविता पर्षत् ३ चमरोत्पात ४ चन्द्रसूर्यावतरणलक्षणा-

नि पंच आश्चर्याणि श्रीवीरतीर्थे, एकं तावत् आश्चर्यं इदं अपरंच ॥

( नामगुत्तस्सेत्ति ) नाम्ना गोत्रं इति प्रसिद्धं यत्कर्म गोत्राभिधानं कर्मेत्यर्थः, तस्य किं विशिष्टस्य? अक्षीणस्य, स्थितेरक्षयेण, अवेदितस्य रसस्य अपरिभोगेन, अनिर्जीर्णस्य जीवप्रदेशेभ्योऽपरिशटितस्य, इदृशस्य गोत्रस्य नीचैर्गोत्रस्य उदयेन भगवान् ब्राह्मणीकुक्षौ उत्पन्न इति योगः, तच्च नीचैर्गोत्रं भगवता स्थूलसप्तविंशतिभवापेक्षया तृतीयभवे बद्धं, तथाहि—

प्रथमभवे पश्चिममहाविदेहे नयसारनामा ग्रामपतिः, स चैकदा काष्ठनिमित्तं वनं गतस्तत्र मध्याह्ने भोजनसमये सार्थभ्रष्टान् साधून् दृष्ट्वा हृष्टश्चिंतितवान्, अहो मे भाग्यं! यदस्मिन् समये अतिथिसमागमः, ततः परमप्रमोदेन साधवोऽशनपानादिभिः प्रतिलाभिताः, पश्चाद् भोजनानंतरं साधून् नत्वा उवाच, चलंतु महाभागा मार्गं दर्शयामि, ततो मार्गे गच्छद्भिः साधुभिर्योग्योऽयमिति धर्मोपदेशेन सम्यक्त्वं प्रापितः, अंते च नमस्कारस्मरणपूर्वं मृत्वा द्वितीयभवे सौधर्मदेवलोके पल्योपमायुर्देवो जातः, ततश्च्युत्वा तृतीयभवे मरीचिनामा भरतचक्रवर्तिपुत्रो जातः, स च प्राप्तवैराग्यः

श्रीऋषभदेवपार्श्वे प्रव्रजित., स्थविरपार्श्वे एकादशांगीं अधीतश्च, एकदा च ग्रीष्मकाले तापादिपीडितश्चिंतितवान् अतिदुःकरोऽयं संयमभारो मया निर्वोढुं न शक्यते, गृहे गमनं च सर्वथा अनुचितं, इति ध्यात्वाऽभिनवं वेषं रचितवान्, तथाहि—श्रमणास्त्रिदंडविरता, अहं तु न तथेति मम त्रिदंडं चिह्नमस्तु, श्रमणा द्रव्यभावाभ्यां मुंडा, अहं तु न तथेति मम शिरसि चूडा क्षुरमुंडनं चास्तु, तथा श्रमणानां सर्वेभ्यः प्राणातिपातादिभ्यो विरतिर्मम स्थूलेभ्यः साऽस्तु. शीलसुगंधाः साधवो नाहं तथेति मम चंदनादिविलेपनमस्तु, तथा अपगतमोहाः श्रमणाः, अहं तु मोहाच्छादित इति मे छत्रकं अस्तु, श्रमणास्तु पादचारिणः मम तु चरणयोरुपानदस्तु; श्रमणा निष्कषायाः, अहं तु सकषाय इति मम काषाय्य वस्त्र अस्तु; श्रमणाः स्नानाद्विरताः, मम तु परिमितजलेन स्नानं पानं चास्तु, एवं स्वबुध्ध्या परिव्राजकधर्मं विकल्पितवान्, ततस्त विरूपवेष विलोक्य सर्वे जना धर्म पृच्छंति, तत्पुरश्च साधुधर्मं प्ररूपयति, देशनाशक्त्या च अनेकान् राजपुत्रादीन् प्रतिबोध्य भगवतः शिष्यतया ददाति भगवता सहैव च विहरति.

एकदा भगवान् अयोध्यायां समवसृतस्तत्र वंदनार्थं आगतेन भरतेन पृष्टं, स्वामिन्नस्यां पर्षदि कोऽपि भरतक्षेत्रेऽस्यां चतुर्विंशतिकायां भाविजिनोऽस्ति? भगवानुवाच भरत! तव पुत्रोऽयं मरीचिनामा अस्यां अवसर्पिण्यां वीरनामा चतुर्विंशतीर्थकृत् (१) विदेहे मूकाराजधान्यां प्रियमित्रनामा चक्री (२) अत्रैव भरते प्रथमो वासुदेवश्च (३) भविष्यतीति श्रुत्वा हर्षितो भरतो गत्वा त्रिःप्रदक्षिणीकृत्य मरीचिं वंदित्वा अवदत्, भो मरीचे! यावंतो लाभास्ते त्वयैव लब्धाः, यतस्त्वं तीर्थकरो वासुदेवश्चक्री च भविष्यसि, अहं च तव पारिव्राज्यं न वंदे, किंतु त्वं तीर्थकरो भविष्यसीति वंदे, इति पुनः पुनः स्तुत्वा भरतः स्वस्थानं गतः, मरीचिरपि तत् श्रुत्वा हर्षोद्रेकात्त्रिपदीं आस्फोट्य नृत्यन्निदं अवोचत्–प्रथमो वासुदेवोऽहं । मूकायां चक्रवर्त्यहं ॥ चरमस्तीर्थराजोऽहं । ममाहो उत्तमं कुलं ।१। आद्योऽहं वासुदेवानां । पिता मे चक्रवर्तिनां ॥ पितामहो जिनेंद्राणां । ममाहो उत्तमं कुलं ।२। इत्थं च मदकरणेन नीचैर्गोत्रं बद्धवान्, यतः–जाति १ लाभ २ कुलै ३ श्वर्य ४ । बल ५ रूप ६ तपः ७ श्रुतैः ८ ॥ कुर्वन् मदं पुनस्तानि । हीनानि लभते जनः ॥ ६ ॥ ततो भगवति निर्वृते प्राग्वज्ज्ञानान् प्रतिबोध्य

माधुना शिष्यान् कुर्वन् तैः सह विहरति ॥

एकदा च ग्लानीभूतस्य तस्य न कोऽपि वैयावृत्य करोति, तदा स चिंतितवान्, अहो एते बहुपरिचिता अपि परकीया एव निर्ग्रंथा, ततो यदि नीरोगीभवामि तदैकं वैयावृत्यकर शिष्य करोमीति. क्रमेण च नीरोगो जातः, एकदा कपिलनामा राजपुत्रो देशना निशम्य प्रतिबुद्धो मरीचिना प्रोक्तो भो कपिल याहि साधुसमीपे चारित्र गृहाण, तदा कपिलेन प्रोक्तं स्वामिन्! भवद्दर्शने एव व्रतं ग्रहिष्यामि, तदा मरीचिरुवाच, भो कपिल! श्रमणास्त्रिदण्डविरताः, अहं तु त्रिदण्डवानित्यादि सर्वे स्वरूप कथितं, तथापि स बहुलकर्मा चारित्रपराङ्मुखः प्रोवाच, किं भवद्दर्शने सर्वथा धर्मो नास्ति? तदा मरीचिना मम योग्य एषः शिष्य इति विचिंत्य उक्तं, 'कविला इत्थं इहयपि' कपिल! जैनमार्गेऽपि धर्मोऽस्ति, मम मार्गेऽपि विद्यते तत् श्रुत्वा च कपिलस्तत्पार्श्वे प्रव्रजितः, मरीचिरपि अनेन उत्सूत्रवचनेन कोटाकोटिसागरप्रमाण संसारं उपार्जयामास, यत्तु किरणावलीकारेण प्रोक्त 'कविला इत्थपि इहयपिच्चि' वचनं उत्सूत्रमिश्रितमिति, तदुत्सूत्रभाषिणां नियमादनंतः सं-

सार इति स्वमतस्थापनरसिकतयेति ज्ञेयं, इदं हि तन्मतं—उत्सूत्रभाषिणस्तावन्नियमादनंतसंसारः स्यात्, यदि च इदं मरीचिवचनमुत्सूत्रमित्युच्यते तदा अस्यापि अनंतः संसारः प्रसज्यते, न चासौ संपन्नस्तदिदं उत्सूत्रमिश्रितमिति, तच्चाऽयुक्तं, उत्सूत्रभाषिणां अनंत एव संसार इति नियमाऽभावात्, श्रीभगवत्यादिबहुग्रंथानुसारेण उत्सूत्रभाषिशिरोमणेर्जमालिनिह्नवस्यापि परिमितभवत्वदर्शनात्, न चोत्सूत्रमिश्रत्वकथनेऽपि अस्य मरीचिवचनस्य उत्सूत्रत्वं अपगच्छति, विषमिश्रितान्नस्यापि विषत्वमेवेत्यलं प्रसंगेन ॥

ततोऽनालोचिततत्कर्मा चतुरशीतिलक्षपूर्वाणि आयुः परिपाल्य मृत्वा चतुर्थे भवे ब्रह्मलोके दशसागरस्थितिः सुरः संजातस्ततश्च्युतः पंचमे भवे कोल्लाकसन्निवेशे अशीतिलक्षपूर्वायुर्विप्रो भूत्वा विषयासक्तो निःशूकः प्रांते त्रिदंडी भूत्वा बहुकालं संसारे भ्रांतस्ते हि भवाः स्थूलभवमध्ये न गण्यंते, ततः षष्ठे भवे स्थूणायां नगर्यां द्वासप्ततिलक्षपूर्वायुः पुष्पनामा द्विजस्त्रीदंडी भूत्वा सौधर्मे कल्पे मध्यस्थितिः सुरोऽभूत्, ततश्च्युतोऽष्टमे भवे चैत्यसन्निवेशे षष्टिलक्षपूर्वायुः अग्निद्योतो

नाम विप्रस्त्रिदण्डी भूत्वा मृतो नवमे भवे ईशानदेवलोके मध्यस्थितिकः सुरः, ततश्च्युतो दशमे भवे मंदरसन्निवेशे पट्पञ्चाशल्लक्षपूर्वायुरग्निभूतिनामा ब्राह्मणः, तत्र त्रिदंडी भूत्वा मृतो एकादशे भवे तृतीयकल्पे मध्यस्थितिक सुरः, ततश्च्युतो द्वादशे भवे श्वेताव्यां नगर्यां चतुश्चत्वारिंशल्लक्षपूर्वायुर्भारद्वाजनामा विप्रस्त्रिदण्डी भूत्वा मृत्वा माहेंद्रकल्पे मध्यस्थितिः सुरस्ततश्च्युतः कियत्काल संसारे भ्रांत्वा चतुर्दशे भवे राजगृहे चतुस्त्रिंशल्लक्षपूर्वायु स्थावरो नाम विप्रस्त्रिदंडी भूत्वा मृत्वा पंचदशे भवे ब्रह्मलोके मध्यस्थितिको देवः, षोडशे भवे कोटिवर्षायुर्विश्वभूतिनामा युवराजपुत्र, सम्भूतिमुनिपादाते चारित्रं गृहीत्वा वर्षसहस्रं दुस्तपं तपस्तप्यमानो मासोपवासपारणाया मथुरायां गोचर्यर्थं गतस्तत्र एकया धेन्वा तपःकृशत्वाद् भुवि पातितः, तद् दृष्ट्वा च परिणयनार्थं तत्रागतेन विशाखनंदिनाम्ना पितृव्यपुत्रेण हसितः सन् कुपितस्तां धेनुं शृंगयोर्गृहीत्वा आकाशे भ्रमितवान्, निदानं चैव कृतवान्—यदनेन उग्रतपसा भवांतरे भूयिष्ठवीर्यो भूयासं, ततो मृत्वा सप्तदशे भवे महाशुक्रे उत्कृष्टस्थितिः सुरस्ततश्च्युतो अष्टादशे भवे पोतनपुरे स्वपुत्रीकामुकस्य प्रजापतेराज्ञो मृगावत्याः

पुत्र्याः पत्न्याश्च कुक्षौ चतुरशीतिलक्षवर्षायुस्त्रिपृष्ठनामा वासुदेवस्तत्र बाल्येऽपि प्रतिवासुदेवशालिक्षेत्रविघ्नकारिणं सिंहं विमुक्तशस्त्रः कराभ्यां विदारितवान्, क्रमेण च वासुदेवत्वं प्राप्तः, एकदा च शय्यापालकं आदिष्टवान्, यदस्मासु निद्राणेषु एते गायना गीतगानन्नान्निवारणीयास्तेन च गीतरसासक्तेन वासुदेवे निद्राणेऽपि ते न निवारितास्ततः क्षणात् प्रतिबुद्धेन वासुदेवेन आः पाप! मदाज्ञापालनादपि तव गीतश्रवणं प्रियं, लभस्व तर्हि फलं, इत्युक्त्वा तत्कर्णयोस्तप्तं त्रपु क्षिप्तवान्, तेन च कर्णयोः कीलकप्रक्षेपकारणं कर्मोपार्जितवान्, एवं च कृतानेकदुष्कर्मा ततो मृत्वा एकोनविंशे भवे सप्तमनरके नारकतया उत्पन्नः, ततो निर्गत्य विंशतितमे भवे सिंहस्ततो मृत्वा एकविंशतितमे भवे चतुर्थनरके, ततो निर्गत्य बहून् भवान् भ्रांत्वा द्वाविंशे भवे मनुष्यत्वं प्राप्योपार्जितशुभकर्मा त्रयोविंशे भवे मूकायां राजधान्यां धनंजयस्य राज्ञो धारिण्या देव्याः कुक्षौ चतुरशीतिलक्षपूर्वायुः प्रियमित्रनामा चक्रवर्ती बभूव. स च पोट्टिलाचार्यसमीपे दीक्षां गृहीत्वा वर्षकोटिं यावत् परिपाल्य चतुर्विंशतितमे भवे महाशुक्रे देवः, ततश्च्युतः पंचविंशे भवे इहैव भरतक्षेत्रे छत्रिकायां

त्क्रमणं तेन निष्क्रांता वा, निष्क्रामंति वा, निष्क्रामिष्यंति वा, अयमर्थः, यद्यपि कदाचित् कर्मोदयेन आश्चर्यभूतस्तुच्छादिकुलेषु अर्हदादीनां अवतारो भवति, परं जन्म तु कदाचिन्न भूतं, न भवति, न भविष्यति च ॥ १९ ॥

अथ प्रत्यक्ष श्रमणो भगवान् महावीरः, जंबूद्वीपे द्वीपे भरतक्षेत्रे ब्राह्मणकुंडग्रामे नगरे ऋषभदत्तस्य ब्राह्मणस्य कोडालस्य गोत्रस्य भार्याया देवानंदाया ब्राह्मण्या जालंधरस्य गोत्रायाः कुक्षौ गर्भतया उत्पन्नः ॥ २० ॥ तस्मात् हेतो, जीतं एतत्, आचार एव इत्यर्थः, केषां इत्याह– अतीतवर्त्तमानाऽनागतानां शक्राणां देवेंद्राणां देवराजानां, कोऽसौ इत्याह–यत् अर्हतो भगवंतः तथा प्रकारेभ्य अंतकुलेभ्य, प्रांतकुलेभ्यः, तुच्छकुलेभ्य, दरिद्रकुलेभ्यः, भिक्षाचरकुलेभ्यः, कृपणकुलेभ्य, ब्राह्मणकुलेभ्यश्चादाय, तथा प्रकारेषु उग्रकुलेषु वा, भोगकुलेषु वा, राजन्यकुलेषु वा, ज्ञातकुलेषु वा, अन्यतरेषु वा, तथाप्रकारेषु विशुद्ध जातिकुले यत्र, इक्ष्वाकुवंशेषु वंशेषु यावत् राज्यश्रियं कुर्वत्सु पालयत्सु च मोचयितु इंद्राणा एष आचारः, ततः श्रेयः खलु युक्तमेतन्ममापि, किं

नगर्यां जितशत्रुनृपतेर्भद्रादेव्याः कुक्षौ पंचविंशतिवर्षलक्षायुर्नंदनो नाम पुत्रः, स च पोट्टिलाचार्यपार्श्वे चारित्रं गृहीत्वा यावज्जीवं मासक्षपणैर्विंशतिस्थानकाराधनेन च तीर्थंकरनामकर्म निकाच्य वर्षलक्षं चारित्रपर्यायं परिपाल्य मासिकया संलेखनया मृत्वा षड्विंशतितमे भवे प्राणतकल्पे पुष्पोत्तरावतंसकविमाने विंशतिसागरोपमस्थितिको देवो जातः, ततश्च्युत्वा तेन मरीचिभवबद्धेन नीचैर्गोत्रकर्मणा भुक्तशेषेण सप्तविंशे भवे ब्राह्मणकुंडग्रामे नगरे ऋषभदत्तस्य ब्राह्मणस्य देवानंदाया ब्राह्मण्याः कुक्षौ उत्पन्नः, ततः शक्र एवं चिंतयति—

( जंनं ) यत् एवं नीचैर्गोत्रोदयेन अर्हंतो वा, चक्रवर्तिनो वा, बलदेवा वा, वासुदेवा वा, अंत्याः शूद्रास्तेषां कुलेषु वा, प्रांता अधमाचाराः, तेषां कुलेषु वा, तुच्छा अल्पकुटुंबास्तेषां कुलेषु वा, दरिद्रा निर्धनास्तेषां कुलेषु वा, कृपणा अदातारस्तेषां कुलेषु वा, भिक्षाकाश्चारणादयस्तेषां कुलेषु वा, ब्राह्मणानां कुलेषु वा; आगता अतीतकाले, आगच्छंति वर्त्तमानकाले, आगमिष्यंति अनागतकाले; कुक्षौ गर्भतया उत्पन्ना वा, उत्पद्यंते वा, उत्पत्स्यंतीति वा, नैव योन्या यत् जन्मार्थं नि·

तदित्याह–श्रमणं जगवंतं महावीरं चरमतीर्थकरं पूर्वतीर्थकरैर्निर्दिष्टं ब्राह्मणकुंडग्रामात् नगरात् ऋषभदत्तस्य ब्राह्मणस्य जार्याया देवानंदाया ब्राह्मण्या जालंधरस्य गोत्रायाः कुक्षेर्मध्यात् क्षत्रियकुंडग्रामे नगरे ज्ञातानां श्रीऋषभस्वामिवंश्यानां क्षत्रियविशेषाणां मध्ये सिद्धार्थस्य क्षत्रियस्य काश्यपगोत्रस्य जार्यायाः त्रिशलायाः क्षत्रियाण्या वासिष्ठसगोत्रायाः कुक्षौ गर्जतया मोचयितु, तथा–योऽपि च तस्यास्त्रिशलायाः क्षत्रियाण्या गर्जः पुत्रिकारूपः, तं अपि देवानंदाया ब्राह्मण्या जालंधरसगोत्रायाः कुक्षौ गर्जतया मोचयितु, इति कृत्वा एवं पूर्वोक्तं विचारयति, विचार्य हरिनैगमेषिनामकं पादातिकटकाधिपतिं देवं आकारयति, आकार्य एव इंद्रो अवादीत् ॥ २१ ॥

किं तदित्याह–एवं निश्चयेन हे हरिनैगमेषिन्! न एतद्भूतं, न एतत् जवति, न एतद्भविष्यति, यत् अर्हंतो वा चक्रधरा वा बलदेवा वा वासुदेवा वा, अंत्यकुलेषु वा, प्रांता अधमाचारास्तेषां कुलेषु वा, तुच्छा अल्पकुटुंबास्तेषां कुलेषु वा, दरिद्रा निर्धनास्तेषां कुलेषु वा, कृपणा अदातारस्तेषां कुलेषु वा, भिक्षाकाश्चारणादयस्तेषां कुलेषु वा, ब्राह्मणानां कुलेषु वा, आगता आ-

तीतकाले, आगच्छंति वर्त्तमानकाले, आगमिष्यंति अनागतकाले, न भूतमित्यादिना योगः ॥

अनेन प्रकारेण निश्चयेन अर्हतो वा चक्रवर्तिनो वा बलदेवा वा वासुदेवा वा श्रीऋषभेन आरक्षकतया स्थापिता उग्रास्तेषां कुलेषु वा, गुरुतया स्थापिता भोगास्तेषां कुलेषु वा, मित्रस्थाने स्थापिता राजन्यास्तेषां कुलेषु वा, प्रजालोकतया स्थापिताः क्षत्रियास्तेषां कुलेषु वा, पूर्ववैरिसुरानीतहरिवर्षक्षेत्रयुगलस्य वंशो हरिवंशस्तस्य कुलेषु वा, अन्यतरेषु वा तथाप्रकारेषु विशुद्धे जातिकुले यत्र इदृशेषु वंशेषु, मातृपक्षो जातिः पितृपक्षः कुलं, आगता वा आगच्छंति वा आगमिष्यंति वा, तर्हि भगवान् कथमुत्पन्न इत्याह–॥ २२ ॥

अस्ति पुनः एषोऽपि भवितव्यतानामपदार्थः, लोके आश्चर्यभूतः, अनंतासु उत्सर्पिणीअवसर्पिणीषु व्यतिक्रांतासु सतीषु इदृशः कश्चिद्भावः समुत्पद्यते, नाम्ना कृत्वा गोत्रस्य, अर्थात् नीचैर्गोत्रनामकस्य, वेति पक्षांतरे, कर्मणः, किं विशिष्टस्य ? स्थितेरक्षयेण अक्षीणस्य, पुनः किंवि० रसस्याऽपरिभोगेन अवेदितस्य, पुनः किंवि० अत एव अनिर्जीर्णस्य, आत्मप्रदेशेभ्य अपृथग्भूतस्य, उदयेन

कृत्वा यत् नीचैर्गोत्रोदयेन कृत्वा अर्हंतो वा चक्रवर्तिनो वा बलदेवा वा वासुदेवा वा, अंत्यकुलेषु वा प्रांतकुलेषु वा तुच्छकुलेषु वा दरिद्रकुलेषु वा भिक्षाचरकुलेषु वा कृपणकुलेषु वा ब्राह्मणकुलेषु वा, आगता वा, आगच्छंति वा, आगमिष्यति वा, कुक्षौ गर्भतया उत्पन्ना वा उत्पद्यंते वा उत्पत्स्यति वा, परं नैव योनिमार्गेण जन्मनिमित्त निष्क्रमणेन कृत्वा निष्क्रांता वा निष्क्रमंति वा निष्क्रमिष्यति वा ॥ २३ ॥

( अयं चणमिति ) अथ प्रत्यक्ष श्रमणो भगवान् महावीरो जम्बूद्वीपे द्वीपे भरतक्षेत्रे ब्राह्मणकुण्डग्रामे नगरे ऋषभदत्तस्य ब्राह्मणस्य कोडालस्य गोत्रस्य भार्याया देवानंदाया ब्राह्मण्या जालंधरस्य गोत्रायाः कुक्षौ गर्भतया उत्पन्न॰ ॥ २४ ॥

तस्मात् आचार॰ एषः, अतीतवर्त्तमानाऽनागताना शक्राणां देवेंद्राणां देवराजांना, अर्हंतो भगवंतस्तथाप्रकारेभ्यः, अत्यकुलेभ्यः, प्रांतकुलेभ्य॰, तुच्छकुलेभ्य॰, दरिद्रकुलेभ्यः, कृपणकुलेभ्य॰, भिक्षाचरकुलेभ्य॰, ब्राह्मणकुलेभ्यश्च, तथा प्रकारेषु उग्रकुलेषु वा, भोगकुलेषु वा, राजन्यकुलेषु वा,

ज्ञातकुलेषु वा, क्षत्रियकुलेषु वा, इक्ष्वाकुकुलेषु वा, हरिवंशकुलेषु वा, अन्यतरेषु वा, तथाप्रकारेषु विशुद्धजातिकुलवंशेषु मोचयितुं ॥ २५ ॥

( तं गच्छणं तुमं देवाणुप्पिए त्ति ) यस्मात् कारणात् इंद्राणां एष आचारः, तस्मात्कारणात् त्वं गच्छ, देवानुप्रिय ! हे हरिणैगमेषिन् ! श्रमणं भगवंतं महावीरं ब्राह्मणकुंडग्रामात् नगरात् ऋषभदत्तस्य ब्राह्मणस्य कोडालस्य गोत्रस्य भार्याया देवानंदाया ब्राह्मण्या जालंधरसगोत्रयाः कुक्षेर्गृत्वा क्षत्रियकुंडग्रामे नगरे ज्ञातजातीयानां क्षत्रियाणां मध्ये सिद्धार्थस्य क्षत्रियस्य काश्यपगोत्रस्य भार्यायास्त्रिशलायाः क्षत्रियाण्या वासिष्ठगोत्रायाः कुक्षौ गर्भतया मुंच ? योऽपि च तस्याः त्रिशलायाः क्षत्रियाण्या गर्भस्तमपि देवानंदाया ब्राह्मण्याः कुक्षौ गर्भतया मुंच ? मुक्त्वा मम एतामाज्ञप्तिं आज्ञां शीघ्रं प्रत्यर्पय, कार्यं कृत्वाऽऽगत्य मयैतत् कार्यं कृतं, इति शीघ्रं निवेदय इत्यर्थः ॥ २६ ॥

( तएणं से हरिणेगमेसीति ) ततः स हरिणैगमेषी पदात्यनीकाधिपतिर्देवः शक्रेण देवेंद्रेण देवराजेन एवं उक्तः सन् हृष्टः यावत्, यावत्करणात् तुट्ठेत्यादि सर्वं वक्तव्यं, हर्षपूर्णहृदयः, अथैवंविधः

हरिणैगमेषी करतलाभ्यां यावत्, यावत्करणात् परिग्गहियमिति प्राग्वत् वाच्यं. तथा मस्तके अंजलिं कृत्वा यत् शक आज्ञापयति, आज्ञाया उक्तरूपाया यद्वचनं तद्विनयेन प्रतिश्रुत्य च, अंगीकृत्य च, इशाणकोणनामके दिग्विभागे इत्यर्थः, तत्र अपक्रामति गच्छतीत्यर्थः. अपक्रम्य गत्वा च वैक्रियसमुद्घातेन समुहंति, वैक्रिशरीरकरणार्थं प्रयत्नविशेषं करोतीत्यर्थः. प्रयत्नविशेषं कृत्वा संख्येययोजनप्रमाणं दंडाकारं शरीरबाहल्यं ऊर्ध्वाध आयतं जीवप्रदेशकर्मपुद्गलसमूहं शरीराद्बहिर्निष्कासयतीत्यर्थः तत्कुर्वाणस्तु एवंविधान् पुद्गलान् आदत्ते, तद्यथा—

( रयणाणमिति ) रत्नानां, कर्केतनादीनां १ यद्यपि रत्नपुद्गला औदारिका वैक्रियशरीरकरणे असमर्था, तत्र वैक्रियवर्गणा पुद्गला एव उपयुज्यते, तदपि रत्नानां इव सारपुद्गला इति ज्ञेयं. वज्राणां हीरकाणां २, वैडूर्याणां नीलरत्नानां ३, लोहिताक्षाणां ४, मसारगल्लानां ५, हंसगर्भाणां ६, पुलकानां ७, सौगंधिकानां ८, ज्योतीरसानां ९, अंजनानां १०, अंजनपुलकानां ११, जातरूपाणा १२, सुभगानां १३, अकानां १४, स्फटिकानां १५, रिष्टानां १६ ॥ एताः षोडशरत्नजातयस्तेषां

च यथा बादरान् अत्यंतं असारान् स्थूलान् इत्यर्थः. तान् पुद्गलान् परित्यज्य, यथा सूक्ष्मान् अत्यंतं असारान् इत्यर्थः, तान् पुद्गलान् पर्यादत्ते गृह्णातीत्यर्थः ॥ २७ ॥

(परियाइत्तेति) पर्यादाय गृहीत्वा द्वितीयवारं अपि वैक्रियसमुद्घातेन पूर्ववत् प्रयत्नविशेषं करोति, प्रयत्नविशेषं कृत्वा उत्तरवैक्रियं, भवधारणीयापेक्षया अन्यत् इत्यर्थः, इदृशं रूपं विकुर्वते करोति, तया कृत्वा तया उत्कृष्टया, अन्येषां गतिभ्यो मनोहरया, त्वरितया, चित्तौत्सुक्यवत्त्या, कायचापल्ययुक्तया, चंडया अत्यंततीव्रया, शेषगतिजयनशीलया, उध्धुतया प्रचंडपवनोध्धुतधूमादेरिव, अत एव शीघ्रया छेआएत्ति कुत्रचित् पाठः, तत्र छेकया विघ्नपरिहारदक्षया देवयोग्यया, इदृश्या देवगत्या गच्छन् अधस्ताडुत्तरन् तिर्यगसंख्येयानां द्वीपसमुद्राणां मध्यं मध्येन मध्यभागेन, यत्रैव जंबूद्वीपो द्वीपः, भरतक्षेत्रं, यत्रैव ब्राह्मणकुंडग्रामं नगरं; यत्रैव ऋषभदत्तस्य ब्राह्मणस्य गृहं, यत्रैव देवानंदा ब्राह्मणी, तत्रैव उपागच्छति, उपागत्य च आलोके दर्शनमात्रे श्रमणस्य भगवतो महावीरस्य प्रणामं करोति, कृत्वा च देवानंदाया ब्राह्मण्याः सपरिवाराया अवस्वापिनीनिद्रां ददाति, तां

दत्वा च अशुचीन् पुजलान्, अपवित्रानित्यर्थः. अपहरति दूरीकरोति, तथा कृत्वा च शुभान् पुजलान् पवित्रपुजलानित्यर्थः, प्रक्षिपति, प्रक्षिप्य अनुजानातु आज्ञां ददातु मह्यं भगवान् इति कृत्वा, इत्युक्त्वा श्रमणं भगवंतं महावीरं, व्याबाधारहितं अव्याबाधेन सुखेन दिव्येन देवयोग्येन प्रभावेण करतलसंपुटे गृह्णाति, न च तेन गृह्यमाणस्यापि गर्भस्य काचित् पीडा स्यात्, यदुक्तं भगवत्यां–' पभूणं भंते हरिणेगमेसी सक्कदूए इत्थीगब्भं नहसिरंसि वा रोमकूवंसि वा साहरित्तए वा निहरित्तए वा, हंता पभू नोचेव णं तस्स गब्भस्स आबाहं वा वीबाहं वा उप्पाएज्जा, छविच्छेयं पुण करिज्जा ' छविच्छेदं त्वग्छेदनं अकृत्वा गर्भस्य प्रवेशयितुं अशक्यत्वादिति, हस्ततलसंपुटे गृहीत्वा च, यत्रैव क्षत्रियकुंडग्रामनामनगरं, यत्रैव सिद्धार्थस्य क्षत्रियस्य गृहं, यत्रैव त्रिशलानाम क्षत्रियाणी, तत्रैव उपागच्छति, त्रिशलायाः क्षत्रियाण्याः परिवारसहिताया अवस्वापिनीं निद्रां ददाति, तां दत्वा च अशुभान् पुजलान् दूरीकरोति, तथा कृत्वा शुभान् पुजलान् प्रक्षिपति, प्रक्षिप्य च श्रमणं भगवंतं महावीरं व्याबाधारहितं, अव्याबाधेन सुखेन, दिव्येन प्र-

ज्ञावेण, त्रिशलायाः क्षत्रियाण्याः कुक्षौ गर्जतया मुंचति, अत्र गर्जाशयात् गर्जाशये, गर्जाशयात् योनौ, योनेर्गर्भाशये, योनेर्योनौ इति गर्जसंहारणे चतुर्जंगी भवति. तत्र योनिमार्गेण आदाय गर्भाशये मुंचतीत्ययं तृतीयो जंगोऽनुज्ञातः, शेषाश्च निषिद्धाः श्रीभगवतीसूत्रे ॥

योऽपि च तस्यास्त्रिशलायाः क्षत्रियाण्या गर्जः पुत्रीरूपः, तं अपि गर्जं देवानंदाया ब्राह्मण्याः कुक्षिविषये गर्जतया मुंचति, मुक्त्वा च, यस्या एव दिशः सकाशात् प्रादुर्भूत आगतः तस्यां एव दिशि पश्चाद् गतः, स देव इति ॥ २७ ॥

( ताए उक्किट्ठाएत्ति ) तया अयेन्षां गतिभ्यो मनोहरया चित्तौत्सुक्यवत्या; कायचापल्ययुक्तया, अत्यंततीव्रया, सकलगतिजेत्र्या, उध्धूतया, अत एव शीघ्रया देवयोग्यया, इदृश्या देवगत्या, तिर्यगसंख्येयानां द्वीपसमुद्राणां मध्यंमध्येन मध्यजागेन, योजनलक्षप्रमाणान्निर्विग्रहैः पदन्यासांतरैरुर्ध्वं उत्पतन् यत्र स्थाने सौधर्मे कल्पे सौधर्मावतंसकनामविमाने शक्रनामसिंहासने शक्रनामा देवेंद्रो देवराजोऽस्ति, तत्रैव स्थाने उपागच्छति, उपागत्य च शक्रस्य देवेन्द्रस्य

देवराजस्य तां पूर्वोक्ता आज्ञां शीघ्रमेव प्रत्यर्पयति, कृत्वा निवेदयति स देव., इति ॥ २ए ॥

( तेणं कालेणमिति ) तस्मिन् प्रस्तावे तस्मिन् समये श्रमणो जगवान् महावीरः, योऽसौ वर्षाणां वर्षाकालसबंधी तृतीयो मासः, पंचमः पक्षः, कोऽसौ इत्याह–आश्विनमासस्य कृष्णपक्षः, तस्य आश्विनबहुलस्य त्रयोदश्याः पक्ष. पश्चार्धरात्रिरित्यर्थ., तस्यां द्व्यशीतौ अहोरात्रेषु अतिक्रांतेषु त्र्यशीतितमस्याऽहोरात्रस्य अंतरकाले रात्रिलक्षणे काले वर्तमाने, स्वस्य इंद्रस्य च हितेन तथा जगवतोऽनुकंपेन जगवतो जक्तेन, अनुकंपायाश्च जक्तिवाचित्व ' आयरिअ अणुकंपाए गच्छो अणुकंपिओ महाजागो ' इति वचनात् ईदृशेन हरिणैगमेषिनामकेन देवेन शक्रवचनेन संदिष्टेन प्रेषितेन ब्राह्मणकुंडग्रामात् नगरात् ऋषजदत्तस्य ब्राह्मणस्य कोडालस्य गोत्रस्य भार्याया देवानंदाया ब्राह्मण्या जालंधरसगोत्राया कुक्षितः क्षत्रियकुंडग्रामे नगरे ज्ञातजातीयानां क्षत्रियाणां सिद्धार्थस्य क्षत्रियस्य काश्यपगोत्रस्य जार्यायात्रिशलायाः क्षत्रियाण्या वासिष्ठगोत्राया मध्यरात्रकालसमये उत्तराफाल्गुनीनक्षत्रे चंद्रेण संबंधे उपागते सति पीडारहितं यथास्यात्तथा अव्याबाधेन दिव्यप्रजावेण कुक्षि-

विषये गर्जतया संहृतः, मुक्त इत्यर्थः. ॥ अत्र कवेरुत्प्रेक्षा—सिद्धार्थपार्थिवकुलासगृहप्रवेशे । मौहूर्तमागमयमान इव क्षणं यः । रात्रिंदिवान्युषितवान् जगवान् छ्यशीतिं । विप्रालये स चरमो जिनराट् पुनातु ॥ ३० ॥

(तेणं कालेणमिति) तस्मिन् काले तस्मिन् प्रस्तावे च श्रमणो जगवान् महावीरः त्रिभिर्ज्ञानैरुपगतः सहितोऽजवत्, संहरिष्यमाणः, मां इतः संहरिष्यति इति जानाति, संह्रियमाणः, संहरणसमये न जानाति, संहृतोऽस्मीति जानाति, ननु संह्रियमाणो न जानातीति कथं युक्तं? संहरणस्य असंख्यसामयिकत्वात्, जगवतश्च विशिष्टज्ञानकत्वात्, उच्यते, इदं वाक्यं संहरणस्य कौशलज्ञापकं, तथा तेन संहरणं कृतं यथा जगवता ज्ञातमपि अज्ञातमिवाभूत्, पीडाऽजावात्; यथा कश्चिद्वदति त्वया मम पादात्तथा कंटक उद्धृतो यथा मया ज्ञात एव नेति सौख्यातिशये च सत्येवंविधो व्यपदेशः, सिद्धांतेऽपि दृश्यते, तथाहि—'तेहिं देवावंतरिआ वरतरुणीगीअवाइअरवेणं निच्चं सहिआ पमुइआ आगयंपि कालं न याणंति' इत्यादि, तथा च 'साहरिज्जनाणेवि जाणइ'

इत्याचारांगोक्तेन विरोधोऽपि न स्यात्, इति मंतव्य ॥

( रयणिंचि ) यस्यां च रात्रौ श्रमणो भगवान् महावीरो देवानंदाया ब्राह्मण्या जालंधरसगोत्रायाः कुक्षितः त्रिशलायाः क्षत्रियाण्या वासिष्टगोत्रायाः कुक्षिविषये गर्भतया मुक्तः, तस्या एव रात्रौ सा देवानंदा ब्राह्मणी शय्यायां सुप्तजागरा अल्पनिद्रां कुर्वती इमान् एतद्रूपान् प्रशस्तान् यावत् चतुर्दशमहास्वप्नान् त्रिशलया क्षत्रियाण्या हृतान् इति दृष्ट्वा जागरिता, तद्यथा—' गयवसह ' इति गाथात्र वाच्या. ॥ ३१ ॥

यस्यां च रात्रौ श्रमणो भगवान् महावीरो देवानंदाया ब्राह्मण्या जालंधरसगोत्रायाः कुक्षितः त्रिशलायाः क्षत्रियाण्या वासिष्टसगोत्रायाः कुक्षौ गर्भतया मुक्तः, तस्यां रजन्यां सा त्रिशला क्षत्रियाणी तस्मिन् तादृशे वक्तुं अशक्यस्वरूपे महाभाग्यवतां योग्ये वासगृहे, शयनमंदिरे इत्यर्थः. किंविशिष्टे वासगृहे? मध्ये चित्रकर्मरमणीये, पुनः किंवि० बाह्यभागे सुधादिना धवलिते, कोमलपाषाणादिना घृष्टे, अत एव सुकोमले, पुनः किंवि० विचित्रो विविधचित्रकलित उल्लोच उपरिभागो

यत्र, तत्तथा ' चिल्लिअतले ' देदीप्यमानतलः, अधोभागो यत्र तत्तथा कर्मधारये विचित्रोल्लोकचिल्लिअतले, पुनः किंवि० मणिरत्नप्रणाशितांधकारे, पुनः किंवि० अत्यंतं समो अविषमः, पंचवर्णमणिनिबद्धत्वात् सुविचक्तः, विविधस्वस्तिकादिरचनान्मनोहरः, एवंविधो भूमिभागो यत्र, तस्मिन्, पुनः किंवि० पंचवर्णेन सरसेन सुरभिणा ' मुक्कत्ति ' इतस्ततो विक्षिप्तेन इहशेन पुष्पपुंजलक्षणेन उपचारेण, पूजया कलिते, पुनः किंवि० कृष्णागुरु प्रसिद्धं, विशिष्टं चीडाभिधानं गंधद्रव्यविशेषः, तुरुष्कं सिलकाभिधानं सुगंधद्रव्यं, दह्यमानो धूपो, दशांगादिरनेकसुगंधद्रव्यसंयोगसमुद्भूतः, एतेषां वस्तूनां संबंधि यो मघमघायमानोऽतिशयेन गंधवान् उद्भूतः प्रकटीभूतः, एवंविधो गंधस्तेनाभिरामे, पुनः किंवि० सुगंधाः सुरभयो ये वरगंधाः प्रधानचूर्णानि, तेषां गंधो यत्र तथा तस्मिन्, पुनः किंवि० गंधवर्तिर्गंधद्रव्यगुटिका तत्सदृश अतिसुगंधे इत्यर्थः. एताहशे वासभवने, अथ तस्मिन् ताहशे वक्तुं अशक्यस्वरूपे महाभाग्यवतां योग्ये शयनीये, पल्यंके इत्यर्थः, इदं विशेष्यं, किं विशिष्टे— सालिंगनवर्तिके आलिंगनवर्तिकानाम शरीरप्रमाणं दीर्घगंडोपधानं, तया सहिते, पुनः किंवि०

उभयत. शिरोंतपादांतयोरुच्छीर्षके यत्र तत्तथा तस्मिन्, पुन· किंवि॰ यत उभयत उच्छीर्षकयुक्ते, अत एव उभयत उन्नते, पुन किंवि॰ तत एव मध्ये नते गंभीरे च, पुनः किंवि॰ तत्र ' उद्दालत्ति ' उद्दालेन पादविन्यासे अधोगमनेन गगातटवालुकासदृशे, अयमर्थ —यथा गंगापुलिनवालुका पादे मुक्ते अधो व्रजति, तथा अतिकोमलत्वात् स पल्यकोऽपीति ज्ञेयं, पुन· किंवि॰ परिकर्मितं, क्षौम अतसीमय दुकूलं वस्त्र, तस्य य· पट्टो युगलापेक्षया एकपट्ट·, तेन आच्छादिते, पुन किंवि॰ सुष्ठु विरचित रजस्त्राण, अपरिभोगावस्थाया आच्छादनं यत्र तस्मिन्, पुन· किंवि॰ रक्तांशुकेन मशकगृहाभिधानेन रक्तवस्त्रेणाच्छादिते, तथा अतिरमणीये, पुन· किंवि॰ आजिनकं देशातरीयं चर्म, रुत प्रतीतं, बूरो वनस्पतिविशेषः, नवनीतं म्रक्षणं, तूलं अर्कतूलं, एभिर्वस्तुभिस्तुल्यः समान स्पर्शो यस्य तथा तस्मिन्, एतद्वस्तुवत्कोमले इत्यर्थ·, पुन· किंवि॰ सुगंधवरैरतिसुगधै कुसुमै चूर्णैर्वासादिभिश्च य शयनोपचार· शय्यासंस्क्रिया तेन कलिते कुसुमैः चूर्णैश्च मनोहरे इत्यर्थः. मध्यरात्रकालप्रस्तावे सुप्तजागरा अल्पनिद्रां कुर्वती इमान् एतद्रूपान् प्रशस्तान् यावत् चतुर्दशमहा-

स्वप्नान् दृष्ट्वा जागरिता, तद्यथा–गय १ वसह २ सीह ३ अभिसेअ ४ । दाम ५ससि ६ दिणयरं ७ झयं ८ कुंभं ९ ॥ पउमसर १० सागर ११ विमाण–भवण १२ रयणुच्चय १३ सिहिं च १४ ॥२॥ इयं गाथा सुगमा ॥

ततः सा त्रिशला क्षत्रियाणी ततः प्रथमतया प्रथमं इत्यर्थः, इभं स्वप्ने पश्यतीति संबंधः, अत्र प्रथमं इभं पश्यतीति यदुक्तं तत् बह्वीभिर्जिनजननीभिस्तथा दृष्टत्वात् पाठानुक्रममपेक्ष्योक्तं, अन्यथा ऋषभमाता प्रथमं वृषभं, वीरमाता च सिंहं ददर्शेति, अथ कीदृशं इभं पश्यति, चत्वारो दंता यस्य स चतुर्दंतस्तं, क्वचित् ' तउअ चउदंतं ' इति पाठस्तत्र ततौजसा महाबलवंतश्चत्वारो दंता यस्येति व्याख्येयं, पुनः कीदृशं ? उच्छ्रित उत्तुंगस्तथा गलितो वर्षणादनंतरकालभावी, स हि दुग्धवर्णो भवति, एवंविधो यो विपुलजलधरो महामेघस्तथा पुंजीकृतो मुक्ताहारो दुग्धसमुद्रः, चंद्रकिरणाः, जलकणाः, रजतस्य रूप्यस्य महाशैलो महान् पर्वतो वैताढ्यः, तद्वत्पांडुरः, ततश्च उच्छ्रितश्चासौ पूर्वोक्तसर्ववस्तुवत्पांडुरश्चेति कर्मधारयः, पुनः कीदृशं ? समागता गंधलोभेन मिलिता म-

धुकरा भ्रमरा यत्र तादृश यत् विशिष्टगन्धाधिवासित मदवारि तेन सुरभीकृतं कपालयोर्मूलं यस्य स तथा त, तस्य कपोलमूल दानवासित अस्ति, तद्गन्धेन भ्रमरा अपि तत्र मिलिता सन्तीति भावः, पुन॰ कीदृश? देवराजो देवेंद्रस्तस्य कुंजरो हस्ती, तद्वत् वर शास्त्रोक्तप्रमाण देहमानं यस्य स तथा तं, प्रेक्षते, इदं क्रियापद पश्यतीति ' इभं ' इत्यनेन पूर्वे योजित, पुन॰ कीदृश? सजलो जलपूर्ण-स्तस्य हि ध्वनिर्गंभीरो भवति, एवविधो यो घनो निविडो विपुलजलधरो महामेघस्तस्य यद्गर्जित तद्वत् गंभीरश्चारुर्मनोहरश्च घोष शब्दो यस्य स तथा त, महामेघवत् स गजो गर्जतीति भाव॰, गजं, इद विशेष्य॰ पुन कीदृश? शुभ प्रशस्य, पुन कीदृशं? सर्वलक्षणाना कदंब समूहस्तज्जात यस्य स तथा त, पुनः कीदृश? वर॰ प्रधान उरुर्विशालश्च, एवविध हस्तिवर प्रथमे स्वप्ने त्रिशला पश्यतीति ॥ १ ॥ ३३ ॥

( तओ पुणोत्ति ) तत पुनर्गजदर्शनानंतर वृषभ पश्यतीति संबंध, अथ किं विशिष्टं वृषभ? धवलाना उज्ज्वलानां कमलानां यानि पत्राणि तेषां प्रकरः समूहस्तस्मात् अतिरेका अधिकतरा रूप-

प्रजा रूपकांतिर्यस्य स तथा तं, पुनः किंवि० प्रजा कांतिस्तस्याः समुदयः समूहस्तस्य उपहारा विस्तारणानि तैः सर्वतो दशापि दिशः निश्चयेन दीपयंतं, शोजयंतं, पुनः किंवि० अतिशयितः श्रीजरः शोजासमूहस्तेन कृता या प्रेरणा, उत्प्रेक्ष्यते, तयेव विसर्पत् उल्लसत्, अत एव कांतदीप्तिमत्, तत एव शोजमानं मनोहरं ककुदं स्कंधो यस्य स तथा तं, अयमर्थः—यद्यपि स्कंध उन्नतत्वात् स्वयमेव उल्लसति, तथापि अतिश्रीभरप्रेरणयेव उल्लसतीत्युत्प्रेक्ष्यते, पुनः किंवि० तनूनि सूक्ष्माणि शुद्धानि निर्मलानि सुकुमालानि, इदृशानि यानि रोमाणि, तेषां स्निग्धा सस्नेहा न तु रूक्षा कांतिर्यस्य स तथा तं, पुनः किंवि० स्थिरं दृढं अत एव सुबद्धं मांसयुक्तं, अत एव पुष्टं लष्टं प्रधानं, सुविभक्तं, यथास्थानस्थितसर्वावयवं, इदृशं सुंदरं अंगं यस्य स तथा तं सा त्रिशला प्रेक्षते, इदं क्रियापदं, पुनः किंवि० घने निचिते वृत्ते वर्तुले लष्टात्प्रधानादपि उत्कृष्टे अतिप्रधाने इत्यर्थः, मृक्षिताग्रे तीक्ष्णे इदृशे शृंगे यस्य स तथा तं, पुनः किंवि० दांतं अक्रूरं, उपद्रवहरं, पुनः किंवि० समानास्तुल्यप्रमाणा अत एव शोजमानाः श्वेता निर्दोषा वा दंता यस्य स तथा तं, पुनः किंवि०

अमिता गुणा येभ्य एवंविधानि यानि मंगलानि, तेषां मुख आगमनकारणमित्यर्थः ॥ २ ॥ ३४ ॥

ततः पुनः पद्मदर्शनानंतरं सा त्रिशला सिंहं पश्यति, अथ किं विशिष्टं सिंहं? हारनिकरक्षीरसागरशशांककिरणदकरजोरजतमहाशैलाः पूर्वं व्याख्यातास्तद्वत्पाण्डुर उज्ज्वलं, पुनः किंवि० रमणीय मनोहर, अत एव प्रेक्षणीय, द्रष्टुं योग्यं, पुनः किंवि० स्थिरौ दृढौ, अत एव लष्टौ प्रधानौ प्रकोष्ठौ कलाचिके 'पहुंचा' इति लोकप्रसिद्धौ, हस्तावयवौ यस्य स तथा तं, पुनः किंवि० वृत्ताः वर्तुलाः पीवराः पुष्टाः सुश्लिष्टा अन्योऽन्यं अंतररहिताः, अत एव विशिष्टाः प्रधानाः तीक्ष्णा एवंविधा या दंष्ट्रास्ताभिर्विडंबितं, कोऽर्थे? अलंकृत मुखं यस्य स तथा तं, पुनः किंवि० परिकर्मिताविव परिकर्मितौ, सम्यग् जलादिना निक्त इव यत् जात्यं उत्तमजातिसंजातं पद्मकमलं, तद्वत् कोमलौ, तथा यथोक्तमानेन शोभमानौ, तथा लष्टौ प्रधानौ एवंविधौ ओष्ठौ यस्य स तथा तं, पुनः किंवि० रक्तोत्पलं रक्तकमलं, तस्य यत् पत्रं, तद्वत् मृदु सुकुमाल तालु, तथा निर्लालिता चपलायमाना अग्र्या प्रधाना जिह्वा यस्य, कोऽर्थः—रक्तस्वरूपं तालु, रक्तरूपा जिह्वा च विद्यते यस्य स

तथा तं, पुनः किंवि० मूषा मृन्मयभाजनं, यत्र सुवर्णकारेण सुवर्णं निक्षिप्य गाल्यते, तस्यां स्थितं तापितं आवर्त्तायमानं प्रदक्षिणं भ्रमत् एवंविधं यत् प्रवरकनकं तद्वत् वृत्ते, विमला या तडित् विद्युत् तत्सदृशे नयने लोचने यस्य तथा तं, पुनः किं विशिष्टं–विशालौ विस्तीर्णौ पीवरौ पुष्टौ वरौ प्रधानौ ऊरू यस्य स तथा तं, पुनः किंवि० प्रतिपूर्णोऽन्यूनो विमलश्च स्कंधो यस्य स तथा तं, पुनः किंवि० सुकुमाराणि विशदानि धवलानि सूक्ष्माणि प्रशस्तलक्षणानि विस्तीर्णानि, दीर्घाणि केसराणि स्कंधसंबंधिरोमाणि, तेषां आटोप उद्धतत्वं तेन शोभितं, पुनः किंवि० उच्छ्रितं उन्नतं सुनिर्मितं कुंडलीकृतं सुजातं सशोभं, एवं यथास्यात्तथा आस्फोटितं लांगूलं पुच्छं येन स तथा तं, तेन पूर्वं लांगूलं आस्फोट्य पश्चात् कुंडलीकृतमिति भावः, पुनः किंवि० सौम्यं, मनसा अक्रूरं, सौम्याकारं सुंदराकृतिमित्यर्थः, पुनः किंवि० सविलासगतिं, पुनः किंवि० आकाशतलात् अवपतंतं, अवस्तादुत्तरंतं, पुनः किंवि० स्वकीयमुखमध्ये अतिपतंतं प्रविशंतं प्रेक्षते सा त्रिशला, पुनः किंवि० गाढं अत्यंतं तीक्ष्णानि अग्राणि येषां, एवंविधा नखा यस्य स तथा तं केसरिणं इति विशेष्यं,

पुन किंवि० वदनस्य श्रीः शोभा तदर्थं पल्लववत् प्रसारिता मनोहरा जिह्वा यस्य स तथा तं ॥ ३ ॥ ३५ ॥

ततः पुनः सिंहदर्शनानंतर पूर्णचंद्रवदना त्रिशला भगवतीं श्रिय श्रीदेवतां पश्यतीति योजना, अथ किंविशिष्टां ता ? उच्चो योऽग' पर्वतो हिमवान् तत्र जातं उच्चागजं एवंविधं प्रधान यत् स्थानकं कमललक्षणं तत्र संस्थिता, तच्चैवं–एकशतयोजनो १०० च्चो द्वादशकलाधिकद्विपंचाशद्योजनो त्तरयोजनसहस्र १०५२ पृथुल' सर्वणमयो हिमवन्नामा पर्वतः, तदुपरि च दशयोजनावगाढः पचश तयोजनपृथुलः, सहस्र १००० योजनदीर्घो वज्रमयतलभागपद्मह्रदनामा ह्रदः, तस्य मध्यभागे कोशद्वयोच्च एकयोजनपृथुलं एकयोजनदीर्घं नीलरत्नमयदशयोजननालं वज्रमयमूल, रिष्टरत्न-मयकंदं,रक्तकनकमयबाह्यपत्रं,कनकमयमध्यपत्रं,एवंविध एक कमलं,तस्मिन् कमले च क्रोशद्वयपृथुला, क्रोशद्वयदीर्घा, एकक्रोशोच्चा रक्तसुवर्णमयकेसराविराजिता एवंविधा कनकमयी कर्णिका,तस्या मध्ये च अर्धक्रोशपृथुलं एकक्रोशदीर्घं किंचिदूनैकक्रोशोच्च श्रीदेवीभवनं, तस्य च त्रीणि द्वाराणि पंचशतध-नुरुच्चानि, तदर्धमानपृथुलानि पूर्वदक्षिणोत्तरदिक्स्थितानि, अथ तस्य भवनस्य मध्यभागे सार्ध-

शतद्वयधनुर्मिता रत्नमयी वेदिका, तदुपरि च श्रीदेवीयोग्या शय्या; अथ तस्मान्मुख्यकमलात्प-
रितश्च श्रीदेव्या आभरणभूतानि वलयाकाराणि पूर्वोक्तमानादर्धमानउच्चत्वदीर्घत्वपृथुत्वानि, अ-
ष्टोत्तरशतकमलानि, एवं सर्वेष्वपि वलयेषु तदर्धार्धमानत्वं ज्ञेयं, इति प्रथमं वलयं ॥

द्वितीयवलये वायव्येशानोत्तरस्यां दिक्षु चतुःसहस्रसामानिकदेवानां चतुःसहस्री कमलानां;
पूर्वदिशि चत्वारि महत्तरा कमलानि; आग्नेय्यां गुरुस्थानीयाभ्यंतरपर्षद्देवानां अष्टसहस्रकमलानि;
दक्षिणदिशि मित्रस्थानीयमध्यमपर्षद्देवानां दशसहस्रकमलानि; नैरुत्यां किंकरस्थानीयबाह्यपर्षद्दे-
वानां द्वादशसहस्रकमलानि; पश्चिमायां च हस्ति १ तुरंगम २ रथ ३ पदाति ४ महिष ५ गंधर्व
६ नाट्य ७ रूपसप्तकटकनायकानां सप्त कमलानि, इति द्वितीयं वलयं ॥

ततस्तृतीये वलये तावतां अंगरक्षकदेवानां षोडशसहस्रकमलानि, इति तृतीयं वलयं ॥
अथ चतुर्थे वलये अभ्यंतराभियोगिकदेवानां द्वात्रिंशल्लक्षकमलानि; पंचमे वलये मध्यमाभियोगि-
कदेवानां चत्वारिंशल्लक्षकमलानि; षष्ठे च वलये बाह्याभियोगिकदेवानां अष्टचत्वारिंशल्लक्षकमलानि;

सर्वसंख्यया च मूलकमलेन सह एका कोटि १ विंशतिर्लक्षाः २० पंचाशत् सहस्राः ५० शतमेकं १ विंशतिश्च २० कमलानामिति. अथ एवंविध यत्कमललक्षण स्थानं तत्र स्थितां, पुनः किंवि० प्रशस्तरूपा मनोरमरूपा इत्यर्थः, पुनः किंवि० सुप्रतिष्टितौ सम्यक्कृतया स्थापितौ यौ कनककमयकच्छपौ तयोः सदृश युक्त उपमानं ययोः, एवंविधौ चरणौ यस्याः सा तथा तां, पुनः किंवि० अत्युन्नतं, तथा पीनं पुष्ट यत् अंगुष्टादि तत्र स्थिता रजिता इव, अयमर्थः—श्रीदेव्याः स्वयमेव नखास्तथा रक्ताः संति, यथा उत्प्रेक्ष्यते, लाक्षादिना रजिता इव मांसयुक्ताः, तत एव उपचिताः पुष्टाः तनवः सूक्ष्माः, न तु स्थूलाः, ताम्रा अरुणाः, स्निग्धा अरुक्षा नखा यस्याः सा तथा तां ॥

पुनः किंवि० कमलस्य पलाशानि पत्राणि तद्वत् सुकुमालौ करचरणौ यस्याः सा तथा तां, कोमला अत एव वराः श्रेष्ठा अंगुल्यो यस्याः सा तथा तां, पुनः किंवि० कुरुविंदावर्त्त आवर्त्तविशेष आभरणविशेषो वा, तेन शोभिते वृत्तानुपूर्वे, कोऽर्थः—पूर्वं बहुस्थूले ततः स्तोकं स्थूले करिकरवत्, ईदृश जंघाद्वितयं यस्याः सा तथा तां, पुनः किंवि० निगूढे गुप्ते जानुनी यस्याः सा तथा

तां, पुनः किंवि० गजवरो गजेंद्रस्तस्य करः शुंडा तत्सदृशो पीवरे पुष्टे ऊरू यस्याः सा तथा तां, ऊरूशब्देन लोके 'साथल' इत्युच्यते, पुनः किंवि० सुवर्णरचिता सुवर्णमयी इत्यर्थः, एवंविधा या मेखला, तया युक्तं, अत एव मनोहरं विस्तीर्णं श्रोणिचक्रं कटितटं यस्याः सा तथा तां, पुनः किंवि० जात्यांजनं, मर्दितं तैलादिना अंजनं भ्रमराणां प्रसिद्धानां जलदानां च मेघानां यः प्रकरः समूहस्तत्सदृशी, तत्समानवर्णतया जात्यांजनभ्रमरजलदप्रकर इव ऋजुका प्रधरा, अत एव समाऽविषमा संहिता निरंतरा तनुका सूक्ष्मा, आदेया सुभगा, लटभा विलासमनोहरा, सुकुमालेभ्यः शिरीषपुष्पादिवस्तुभ्योऽपि मृदुका, तत एव रमणीया रोमराजिर्यस्याः सा तथा तां ॥

पुनः किंवि० नाभिमंडलेन सुंदरं विशालं विस्तीर्णं प्रशस्तं लक्षणोपेतं एवंविधं जघनं अग्रेतनकट्यधोभागो यस्याः सा तथा तां, पुनः किंवि० करतलमेयो मुष्टिग्राह्य इत्यर्थः, प्रशस्ता त्रिवलिस्तिस्रो रेखा यत्रैवंविधो मध्यभाग उदरलक्षणो यस्याः सा तथा तां, पुनः किंवि० नानाजातीया मणयश्चंद्रकांतप्रभृतयः, कनकं पीतवर्णं, रत्नानि वैडूर्यप्रभृतीनि विमलं निर्मलं महत् महाजातीयं

एवंविध तपनीय रक्तवर्ण सुवर्ण, एतत्संबंधीनि यानि आभरणानि अंगपरिधेयानि ग्रैवेयककंकणादीनि भूषणानि, उपांगपरिधेयानि मुद्रिकादीनि, तैर्विराजितानि अंगानि शिरःप्रभृतीनि, उपांगानि अंगुल्यादीनि यस्याः सा तथा तां, कोऽर्थः—आभरणैः श्रीदेव्या अंगानि भूषितानि संति, भूषणैश्च उपांगानीति, पुनः किंवि० हारेण मौक्तिकादिमालया विराजत् शोभमान कुंदापि पुष्पमालया परिणद्धं व्याप्तं जाज्वल्यमानं देदीप्यमानं, एवंविध यत् स्तनयुगलं, तदेव कनककलशवत् पीनौ कठिनौ वृत्तौ च श्रीदेव्याः स्तनौ वर्त्तेते इत्यर्थः सूचितः, पुनः किंवि० आयुक्तानियंथास्थानस्थापितानिः पत्रिकाभिर्मरकतपत्रैः 'पाना' इतिलोकप्रसिद्धैः, विभूषितेन अलंकृतेन सुभगानि दृष्टिसुखकराणि यानि जालानि मुक्तागुच्छानि तैरुज्ज्वलेन, एवंविधेन मुक्ताकलापकेन मौक्तिकहारेण शोभितां, अत्र शोभितां इतिपदं सूत्रे अनुक्तमपि अध्याहार्य, एवं अग्रे विशेषणद्वयेऽपि ॥

पुनः किंवि० उर स्थया हृदयस्थितया दीनारमालया सौवर्णिकमालया विराजितेन कंठमणिसूत्रकेन च कंठस्थरत्नमयदवरकेण शोभितां इति पूर्ववत्, पुनः किंवि० तव इदृशेन शोभागुणस-

मुदयेन, कांतिगुणप्राग्भारेण शोभितामिति योजना. अथ कीदृशेन शोभागुणसमुदयेन? अत्र 'अंसोवसत्' इतिपदं प्राक् योज्यं, ततः 'अंसोवसत्तत्ति' अंसयोः स्कंधयोरुपसक्तं लग्नं यत् कुंडलयोर्युगलं, तस्य 'उल्लसंतत्ति' उल्लसंती 'शोभंतत्ति' शोभमाना, अत एव 'सत्ति' संती समीचीना 'पभत्ति' प्रभा कांतिर्यस्मिन् एवंविधेन शोभागुणसमुदयेन, पुनः कीदृशेन शो० आननस्य मुखस्य कौटुंबिकेनेव, यथा राजा कौटुंबिकैः सेवकैः शोभते, एवं श्रीदेव्या आननं तेन शोभागुणसमुदयेनेति भावः, अत्र 'उल्लसंतत्ति' शोभंते इत्यादीनि शोभागुणसमुदयस्य विशेषणानि 'अंसोवसत्तेत्ति' च कुंडलयुगलविशेषणं ॥ ननु तर्हि प्रभागुणसमुदयविशेषयोर्मध्ये कुंडलयुगलविशेषणं कथं न्यस्तं? तथा 'अंसोवसत्ते' त्यस्य कुंडलयुगलात् परनिपातश्च कथं? इति चेदुच्यते, प्राकृतत्वात् अन्यविशेषणावतारः, विशेषणस्य परनिपातश्च भवति, एवं सर्वत्र विशेषणपरनिपाते हेतुर्ज्ञेयः ॥

पुनः किंविशिष्टां श्रीदेवतां? कमलवत् अमले विशाले रमणीये च लोचने यस्याः सा तथा

तां, पुनः किंवि० तत्र पर्ववत् प्राकृतत्वात् विशेषणस्य परनिपात , ततः प्रज्वलंतौ देदीप्यमानौ यौ करौ हस्तौ, ताभ्यां गृहीते ये कमले, ताभ्यां मुक्त क्षरत् तोय मकरंदरूपजल यस्याः सा तथा तां, अयमर्थः—श्रीदेव्या तावद् द्वयोः करयोः प्रत्येकं कमल गृहीतमस्ति, तस्माच्च मकरंदबिंदव' श्रवंतीति, पुन॰ किंवि० लीलया, न तु प्रस्वेदापनोदाय, प्रस्वेदस्य दिव्यशरीरेष्वभावात्, ततो लीलया वातोदीरणार्थं कृतोऽवधूतो य पञ्चकस्तालवृतं तेन शोभितां, अत्रापि शोभितां इति पदं अध्याहार्यं, पुन॰ किंवि० सुविशद॰ सुविविक्त॰, न पुनर्जटाजूटवत् परस्परसंलग्न', कृष्ण॰ श्यामवर्णः, घनोऽविरलो, न तु मध्ये मध्ये रिक्त , सूक्ष्म', न तु शूकररोमवत्स्थूलः, लवमानः केशहस्तो वेणिर्यस्याः सा तथा तां, पुन॰ किंवि० पद्मद्रहस्य यत्कमलं पूर्वोक्तस्वरूपं तत्र निवसतीं श्रिय श्रीदेवतां, इदं विशेष्य, पुन किंवि० भगवतीं ऐश्वर्यादियुतां प्रेक्षते, इदं क्रियापद, पुनः किंवि० हिमवान् नामा पर्वतस्तस्य शिखरे दिग्गजेंद्रा ऐरावणादयः, तैरुरुपीवरैर्दीर्घैः पुष्टैश्च, एवंविधैः करैः शुंडाभिः कृत्वा अभिषिच्यमाना स्नाप्यमानाम् ॥ ४ ॥ ३६ ॥

॥ इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजय-
गणिविरचितायां कल्पसुबोधिकायां द्वितीयः क्षणः समाप्तः ॥
ग्रंथाग्रंथ ७४१ ॥ द्वयोर्व्याख्यानयोः ग्रंथाग्रंथ १४०६ ॥



॥ अथ तृतीयं व्याख्यानं प्रारभ्यते ॥

॥ सूत्रं-( तउपुणोत्ति ) ततः पुनर्नभस्तलादवपतद् दाम पुष्पमाल्यं त्रिशला पंचमे स्वप्ने पश्यति इति योजना, अथ किंविशिष्टं पुष्पदाम? सरसानि सद्यस्कानि कुसुमानि पुष्पाणि येषु एवंविधानि यानि मंदारदामानि, कल्पवृक्षमाल्यानि, तैः रमणीयभूतं, अतिमनोहरमित्यर्थः, पुनः किंवि० चंपकः प्रतीतः, अशोकोऽपि प्रतीतः, तथा पुन्नागनागप्रियंगुशिरीषाः वृक्षविशेषाः, तथा मुद्गरः प्रतीतः, मल्लिकाजातियूथिकावल्लिविशेषाः प्रतीताः, अंकोल्लः प्रतीतः, कोद्यकोरंटौ अपि वृक्षविशेषौ, दमनकपत्राणि, तथा नवमालिका लताविशेषः, बउलसिरी इति नामा 'बकुल' वृक्षविशेषः,

तिलकनामा वृक्षविशेषः, वासंतिकापि लताविशेषः, पद्मानि सूर्यविकाशिकमलानि, उत्पलानि चं द्रविकाशिकमलानि, पाटलकुंदातिमुक्ता वृक्षविशेषाः, सहकारः प्रतीतः, एतेषां चंपकाशोकादीनां सहकारांतानां कुसुमानां पुष्पाणां सुरभिर्घ्राणतर्पणो गंधो यत्र तत्तथा, पुनः किंवि० अनुपमो य उपमानरहितः अद्वितीय इति यावत्, मनोहरश्च चित्ताह्लादक एवंविधेन गंधेन दशापि दिशो वा- सयत् सुरभीकुर्वत्, पुनः किंवि० सर्वर्तुकं यत् सुरभि सुगंधपुष्पमाल्यं तेन धवलं, अयमर्थः—षण्णां अपि ऋतूनां संबंधिन्यः पुष्पमालास्तत्र दामनि वर्त्तंते इति, तथा दीप्यमाना अतएव कांता मनो- हरा ये बहवो वर्णा रक्तपीतादयस्तेषां रचना तया चित्रं आश्चर्यकारि, अथवा चित्रयुक्त इव, त- तश्च विशेषणद्वयस्य कर्मधारयः कर्त्तव्यः, अनेन च विशेषणेन तत्र पुष्पदामनि भूयान् धवल एव वर्णो वर्त्तते, स्तोकाश्च अन्येऽपि वर्णा वर्त्तंते इत्यर्थःसूचितः, पुनः किंवि० अत्रापि विशेषणस्य प- रनिपाते गुमगुमायमानो मधुरं शब्दं कुर्वन्, अन्यस्थानात् आगत्य तत्र दामनि लयं प्राप्नुवन्, अव्यक्तं शब्दविशेषं कुर्वन्, एवंविधो यः षट्पद १ मधुकरी २ भ्रमरा ३ णां भ्रमरजातिविशेषाणां

यो गणः समूहः, स देशनागेषु शिखाग्रभागपार्श्वद्वयाऽधोभागादिकेषु देशनागेषु यत्र तत्तथा, कोऽर्थः–तद्दाम सौरभ्यातिशयात् सर्वनागेषु भ्रमरैः सेवितमस्तीति नावः, अत्र षट्पदमधुकरी भ्रमराणां च वर्णादिनिर्भेदो ज्ञेयः, पुष्पदाम, इदं विशेष्यं, प्रेक्षते इति क्रियापदं, पुनः किंवि० नजोंगणतलात् अवपतत् उत्तरत् ॥ ५ ॥ ३७ ॥

( ससिं चत्ति ) ततः पुनः सा त्रिशलादेवी षष्ठे स्वप्ने शशिनं पश्यति, अथ कीदृशं ? गोक्षीरं धेनुदुग्धं, फेनं प्रसिद्धं, दकरजांसि जलकणाः, रजतकलशो रूप्यघटः, तद्वत् पांडुरं उज्ज्वलं, पुनः किंवि० शुनं सौम्यं, पुनः किंवि० अत्र लोकानां इति शेषः, ततश्च लोकानां हृदयनयनयोः कांतं वल्लनं, पुनः किंवि० प्रतिपूर्णं, पूर्णमासीसत्कं, पुनः किंवि० तिमिराणां अंधकाराणां निकरेण समूहेन घना निबिडा गंभीरा ये वनगह्वरादयस्तेषां अंधकाराऽनावकरं, वनगह्वरस्थितांधकारनाशकं इत्यर्थः, यदुक्तं–विरम तिमिर साहसादमुष्मा–द्यदि रविरस्तमितः स्वतस्ततः किं ॥ कलयसि न पुरो महोमहोर्मि–स्फुटतारकैरचितांतरिक्षमिंदुं ॥ १ ॥ पुनः किंवि० प्रमाणपक्षौ वर्षमासादिमानकारि-

यौ यौ पक्षौ शुक्लकृष्णपक्षौ तयोः अंतर्मध्ये पूर्णिमायां इत्यर्थ , तत्र राजत्यः शोभमाना लेखा' कला यस्य स तथा तं, पुन. किंवि० कुमुदानां चंद्रविकाशिकमलानां विबोधक विकाशकं, यत'—दिनकरतापव्याप—प्रपन्नमूर्छानि कुमुदसुवनानि ॥ उच्चस्थुरमृतदीधिति—कांतिसुधासेकतस्त्वरितं ॥ १ ॥ पुन' किंवि० निशाशोभक रात्रिशोभाकारकं, पुनः किंवि० सुपरिमृष्ट सम्यक्प्रकारेण रक्षादिना उज्ज्वलितं यत् दर्पणतलं, तेन उपमा यस्य स तथा तं, पुन' किंवि० हंसवत् पटुवर्णं उज्ज्वलवर्णं इत्यर्थः, पुन किंवि० ज्योतिषा मुखमंडक, पुन. किंवि० अंधकारवैरिणं, पुनः किंवि० मदनस्य कामस्य शरापूरमिव तूणीरमिव, अयमर्थः—यथा धनुर्धरस्तूणीर प्राप्य मुदितो निःशंकं मृगादिक शरैर्विध्यति, एवं मदनोऽपि चंद्रोदय प्राप्य नि शंको जनान् बाणैर्व्याकुलीकरोति, पुन. किंवि० समुद्रोदक पूरक, जलधिवेलावर्धकं इत्यर्थ , पुनः किंवि० दुर्मनस्कं व्यग्रं इदृश दयितेन प्राणवल्लभेन रहितं जन, विरहिणीलोकं इत्यर्थ., पादै. किरणैः शोषयतं, वियोगिदुःखदं इत्यर्थः यतः—रजनिनाथ निशाचर दुर्मते। विरहिणां रुधिरं पिबसि ध्रुवं ॥ उदयतोऽरुणता कथमन्यथा। तव कथं च तके तनुता-

भृतः ॥१॥ पुनः शब्दो धुरि योजितः, पुनः किंवि० यः सौम्यः सन् चारुरूपो मनोहररूपस्तं, प्रेक्षते इति क्रियापदं. सा, पुनः किंवि० गगनमंरुलस्य आकाशतलस्य विशालं विस्तीर्णं सौम्यं सुंदराकारं, चंक्रम्यमाणं चलनस्वभावं, एवंविधं तिलकं, तिलकमिव शोभाकरत्वात्, पुनः किंवि० रोहिण्याश्चंद्रवल्लभाया मनश्चित्तं तस्य हितदो हितकारी, एकपाक्षिकप्रेमनिरासार्थं हितद इति विशेषणं, इदृशो वल्लभो यस्तं, इदं कविसमयापेक्षया, अन्यथा रोहिणी किल नक्षत्रं, नक्षत्रचंद्रयोश्च स्वामिसेवकभाव एव सिद्धांते प्रसिद्धो न तु स्त्रीभर्तृभावः, देवी त्रिशला पूर्णं चंद्रं, इदं विशेष्यं ज्योत्स्नया शोभ्यमानं ॥ ६ ॥ ३७ ॥

( तओपुणोत्ति ) ततः पुनश्चंद्रदर्शनानंतरं सप्तमे स्वप्ने सूर्यं पश्यति, अथ किं विशिष्टं सूर्यं ? तमःपटलं अंधकारसमूहस्तस्य परिस्फोटकं नाशकं इत्यर्थः, निश्चयेन, पुनः किंवि० तेजसैव प्रज्वलत् जाज्वल्यमानं रूपं यस्य स तथा तं, स्वभावतस्तु सूर्यबिंबवर्त्तिनो बादरपृथ्वीकायिकाः शीतला एव, किंत्वातपनामकर्मोदयात्तेजसैव एते जनं व्याकुलीकुर्वंतीति ज्ञेयं, पुनः किंवि० रक्ताशोकोऽशो-

कयूक्तविशेषः प्रकाशत्किंशुक· पुष्पितपलाश·, शुकमुखं गुंजार्धं च प्रसिद्धं, एतेषां वस्तूनां यो रागो रक्तत्वं, तेन सदृशं, पूर्वोक्तवस्तुवत् रक्तवर्णं इत्यर्थः, पुन· किंवि० कमलवनानां अलंकरणं शोभाकारक, विकाशकं इति यावत्, विकसितानि तानि अलंकृतानीव विभांति, पुन· किंवि० ज्योतिषस्य ज्योतिश्चक्रस्य अकन, मेपादिराशिसंक्रमणादिना लक्षणज्ञापक, पुनः किंवि० अंबरतले प्रदीप, आकाशतलप्रकाशक, पुन· किंवि० हिमपटलस्य हिमसमूहस्य गलग्रह गलहस्तदायकं, हिमस्फोटकमित्यर्थ , पुन· किंवि० ग्रहगणस्य ग्रहसमूहस्य उरुमहान् नायको य· स तथा तं, पुनः किंवि० रात्रिविनाशं, रात्रिविनाशकारणं इत्यर्थ·, पुन किंवि० उदयास्तसमययोरुउदयवेलाया अस्तवेलायांच मुहूर्त यावत् सुखदर्शनं, सुखेन अवलोकनीय इत्यर्थ·. अन्यस्मिन् काले दुर्निरीक्ष्यरूपं सन्मुख विलोकयितुं न शक्यते इत्यर्थः ॥ पुनः किंवि० रात्रौ उद्धत· स्वेच्छाचारिण·, मकारोऽत्र प्राकृतत्वात्, एवंविधा ये दु·प्रचाराश्चौरादयोऽन्यायकारिणस्तान् प्रमर्दयति यस्तं, अन्यायकारिप्रचारनिवारक इत्यर्थ·, पुनः किंवि० शीतवेगमथनं, आतपेन शीतवेगनिवारणात् प्रेक्षते इति क्रियापदं

प्राग्योजितं, पुनः किंवि० मेरुगिरेः सततं परिवर्त्तकं, मेरुं आश्रित्य प्रदक्षिणया भ्रमंतं इति यावत्, पुनः किंवि० विशालं विस्तीर्णमंडलं सूर्यं इत्यपि विशेष्यं योजितं, पुनः किंवि० रश्मिसहस्रेण किरणदशशत्या कृत्वा प्रदलिता स्फोटिता दीप्तानां चंद्रतारादीनां शोभा येन स तथा तं, येन स्वकिरणैः सर्वेषां अपि प्रभा विलुप्तास्तीति भावः. अत्र सहस्रकिरणाभिधानं तु लोकप्रसिद्धत्वात्, अन्यथा कालविशेषे अधिका अपि तस्य किरणा भवंति, तथा चोक्तं लौकिकशास्त्रेषु—ऋतुभेदात्पुनस्तस्या-ऽतिरिच्यंतेऽपि रश्मयः ॥ शतानि द्वादश १२०० मधौ। त्रयोदश १३०० तु माधवे ।१। चतुर्दश १४०० पुनर्ज्येष्टे। नभोनभस्ययोस्तथा १४००–१४०० ॥ पंचदशैव १५०० त्वाषाढे। षोडशैव १६०० तथाश्विने ॥२॥ कार्तिके त्वेकादश च ११००। शता न्येवं ११०० तपस्यपि॥ मार्गे च दशसार्धानि १०५०। शतान्येवं १०५० च फाल्गुने ।३। पोष एव परं मासि । सहस्रं १००० किरणा रवेः ॥ ७ ॥ ३९ ॥

| चैत्र. | वैशाख. | ज्येष्ट. | आषाढ. | श्रावण. | भाद्रपद. | आश्विन. | कार्तिक. | मार्ग० | पोष. | माघ. | फाल्गुन |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १२०० | १३०० | १४०० | १५०० | १४०० | १४०० | १६०० | ११०० | १०५० | १००० | ११०० | १०५० |

( तओ पुणोवि ) ततः सा त्रिशला पुनः अष्टमे स्वप्ने ध्वजं पश्यति, किं विशिष्टं ध्वजं ? जात्य उत्तमजातीय यत् कनकं सुवर्णं तस्य या यष्टिस्तत्र प्रतिष्ठितं, सुवर्णमयदंडशिखरे स्थितं इत्यर्थः, पुनः किंवि० समूहीभूतानि बहूनीत्यर्थः, नीलरक्तपीतशुक्लवर्णमनोहराणीत्यर्थः, सुकुमालानि उल्लसन्ति, वातेन लहलहायमानानि इत्यर्थः, एवंविधानि यानि मयूरपिच्छानि तैः कृता मूर्धजा इव केशा इव स तथा तं, अयमर्थः—यथा मनुष्यशिरसि वेणिर्विराजति तथा तस्य, पुनः किंवि० अधिकसश्रीकं अतिशोभितं इत्यर्थः, पुनः किंवि० ॥ एवंविधेन सिंहेन राजमानं इति विशेषणयोजना, अथ कीदृशेन सिंहेन ? स्फटिकं रत्नविशेषः, शंखः प्रसिद्धः, अंकोऽपि रत्नविशेषः, कुंदस्य धवलपुष्पविशेषस्य माल्यं, दकरजांसि जलकणाः, रजतकलशो रूप्यघटः, उक्तसर्ववस्तुवत् उज्ज्वलवर्णेन मस्तकस्थितेन, चित्रतया ध्वजशिरसि आलेखितेनेत्यर्थः, सिंहेन इति विशेष्यं, पुनः कीदृशेन सिंहेन ? राजमानेन, सुंदरत्वात् शोभमानेनेत्यर्थः, राजमान इति तु योजितं, पुनः कीदृशेन सिंहेन ? भेत्तुं द्विधाकर्तुं, किं ? आकाशतलमण्डलं, उत्प्रेक्षाया सोद्यमेनेव, अयमर्थः—ध्वजस्तावद्वायुतरंगेण

कंपते, कंपमाने च ध्वजे सिंहोऽपि गगनं प्रति व्रजति, तथा उत्प्रेक्षते, अयं सिंहः किं गगनतलं भेत्तुं उद्यमं करोतीति प्रेक्षते इति क्रियापदं. अथ पुनः किं विशिष्टं ध्वजं? शिवः सौम्यः सुखकारी, अतएव मृदुको मंदमंद इति यावत् एवंविधो यो मारुतो वायुस्तस्य लयः आश्लेषो मिलनमिति यावत्, तेन आहत आंदोलितो यः, तत एव चलनस्वभावो यः स तथा तं, पुनः किंवि० अतिप्रमाणं, महांतं इत्यर्थः, पुनः किंवि० जनानां प्रेक्षणीयं द्रष्टुं योग्यं रूपं स्वरूपं यस्य स तथा तं ॥ ८ ॥ ४० ॥

( तओ पुणोत्ति ) ततः सा त्रिशलाक्षत्रियाणी नवमे स्वप्ने रजतपूर्णकलशं रूप्यमयं पूर्णकुंभं पश्यति, अथ किं विशिष्टं रजतपूर्णकलशं? जात्यकांचनवत् उत्तमसुवर्णवत् उत्प्राबल्येन दीप्यमानं रूपं यस्य स तथा तं, यथा किल जात्यकांचनस्य रूपं अतिनिर्मलं भवति तथा तस्य कलशस्यापि रूपं इति तात्पर्यं. पुनः किंवि० निर्मलेन जलेन पूर्णं, अत एव उत्तमं शुभसूचकं, पुनः किंवि० दीप्यमाना शोभा यस्य स तथा तं, पुनः किंवि० कमलकलापेन कमलसमूहेन परिराजमानं सर्वतः

शोजायमानं, पुन॰ किंवि॰ प्रतिपूर्णा न तु न्यूना एवंविधा ये सर्वमंगलजेदा मंगलप्रकारास्तेषां समागम॰ संकेतस्थानमिव, यथा संकेतकारिणो जना अवश्यं प्राप्यते तथा तस्मिन् कलशे दृष्टे अवश्य सर्वे मंगलजेदा॰ प्राप्यते इति जावः, पुन॰ किंवि॰ प्रवररत्नै॰ परिराजमानं यत् कमलं तत्र स्थित, रत्नमयविकसितकमलोपरि स कलशो मुक्तोऽस्तीति भाव॰, पुन॰ किंवि॰ नयनानां जूषणकरं आनंदकरं, नयनयोर्हि आनंद एव भूषण, यथा पद्मस्य विकाश, पुन॰ किंवि॰ प्रजासमानं दीप्यमान, पुन॰ किंवि॰ सर्वतः सर्वदिश निश्चयेन दीपयतं, पुन किंवि॰ सौम्या प्रशस्ता या लक्ष्मीस्तस्या॰ गृह, अथ देश्य॰ शब्द॰, पुन॰ किंवि॰ सर्वैः पापै॰ अमंगलै॰ परिवर्जितं रहितं, अत एव शुभं जासुरं, दीप्यमानं श्रिया शोजया प्रधान, पुन॰ किंवि॰ सर्वर्त्तुकानां सर्वऋतुजातानां सुरभिकुसुमानां सुगधपुष्पाणां संबंधीनि आसक्तानि कंठे स्थापितानि माल्यदामानि यस्मिन् कलशे स तथा तं प्रेक्षते इति क्रियापदं, सा त्रिशला रजतस्य पूर्णकलश, इद विशेष्य ॥ ए ॥ ४१ ॥

(तर्ठ पुणोचि ) ततः पुनः सा त्रिशला दशमे स्वप्ने पद्मसरः पश्यति, अथ किंविशिष्टं

पद्मसरः ? प्राकृतत्वाद्विशेषणस्य परनिपातात् तरुणो नूतनो यो रविस्तस्य ये किरणास्तैर्बोधितानि सहस्रपत्राणि महापद्मानि तैरत्यंतं सुगंधि पीतरक्तं च जलं यस्य तत्तथा, पुनः किंवि० जलचरा जलजीवास्तेषां समूहस्तेन परिपूर्णं सर्वतो व्याप्तं इत्यर्थः, तथा मत्स्यैः परिभुज्यमानो व्याप्रियमाणो जलसंचयो यस्य तत्तथा, ततः कर्मधारयः, पुनः किंवि० महत्, पुनः किंवि० ज्वलदिव देदीप्यमानं इव, केन ? कमलानि सूर्यविकाशीनि अंबुजानि, कुवलयानि च चंद्रविकाशीनि कमलानि, उत्पलानि रक्तकमलानि, तामरसानि महापद्मानि, पुंडरीकानि उज्ज्वल कमलानि, एतेषां जातीयकमलानां उरुर्विस्तीर्णः सर्पन् प्रसरन् एवंविधो यः श्रीसमुदयः शोभासमूहस्तेन, कमलानां शोभाप्रकरेण हि शोभमानत्वं एव स्यात्, न तु सूर्यबिंबादिवद्देदीप्यमानत्वं, अत उत्प्रेक्ष्यते, एतेषां विविधकमलशोभाप्राग्भारेण ज्वलदिव देदीप्यमानमिवेति, पुनः किंवि० रमणीया मनोरमा रूपशोभा यस्य तत्तथा, पुनः किंवि० प्रमुदितं अंतश्चित्तं येषां ते प्रमुदितांतरा एवंविधा ये भ्रमरगणा मत्तमधुकरीगणाश्च भ्रमरजातिविशेषगणास्तेषां उत्कराः समूहाः, भ्रमरमधुकरीणां बहूनि वृंदानि इत्यर्थः, तै-

रव विज्ञमानानि आस्वाद्यमानानि कमलानि यत्र तत्तथा, पुन. किंवि० कादंबा· कलहंसा, बलाहका बलाकाः, चक्राश्चक्रवाका, कला मधुरशब्दा ये हंसाः कलहंसा राजहंसा इत्यर्थ., सारसा दीर्घजानुका जीवविशेषा., इत्यादयो ये गर्विता., तादृक्स्थानप्राप्त्यभिमानिनो ये शकुनिगणाः पक्षिसमूहास्तेषां मिथुनैर्द्वंद्वैः सेव्यमानं सलिलं यस्य तत् तथा, पुन किंवि० पद्मिन्य· कमलिन्यस्तासां पत्राणि तत्र उपलग्ना थे जलबिंदुनिचयास्तैश्चित्रं मंडितमिव, इंद्रनीलरत्नमयानीव पद्मिनीपत्राणि, मुक्ताफलानुकारिभिर्जलबिंदुभिरतीव शोभंते, तैश्च पत्रैस्तत् सरः कृतचित्रं इव जातीति भाव., प्रेक्षते इति क्रियापदं सा त्रिशला, पुनः किंवि० हृदयनयनयो· कांतं मनोज्ञं पद्मसर इति नाम्ना सर· सरोवरं, इदं विशेष्यं, किंवि० सरस्सु अर्ह पूज्य, अत एव अभिरामं रमणीयं ॥ १० ॥ ४२ ॥

( तउपुणोत्ति ) तत. पुनरेकादशे स्वप्ने शरद्रजनिकरसौम्यवदना सा त्रिशला क्षीरोदसागरं पश्यति, अथ किंविशिष्टं क्षीरोदसागरं? चंद्रस्य किरणराशिः किरणसमूहस्तेन सदृशा श्रीः शोभा यस्याः एवंविधा वक्ष शोभा यस्य स तथा तं, वक्षःशब्देन हि हृदयं उच्यते, तत्तु प्राणिनो

भवति, न तु समुद्रस्य, ततो हृदयशब्देनात्र मध्यभागः प्रोच्यते इति, ततोऽत्युज्ज्वलो मध्यभागो यस्येति ज्ञेयं, पुनः किंवि० चतुर्षु गमनेषु दिग्मार्गेषु प्रकर्षेण वर्धमानो जलसंचयो जलसमूहो यस्य स तथा तं, चतुसृष्वपि दिक्षु तत्र अगाध एव जलप्रवाहोऽस्तीति भावः, पुनः किंवि० चपलचंचला चपलेभ्योऽपि चपला अतिचपला इति यावत्, तथा उच्चं आत्मप्रमाणं येषामेवंविधा ये कल्लोलास्तैर्लोलत्पुनःपुनरेकीभूय पृथग्भवत् एवंविधं तोयं पानीयं यस्य स तथा तं, पुनः किंवि० पटुना अमंदेन पवनेन आहता आस्फोटिताः संतः, अत एव चलिता धावितुं प्रवृत्ताः, तत एव चपलाः प्रकटाः, एवंविधास्तरंगाः कल्लोलास्तथा रंगंत इतस्ततो नृत्यंत एवंविधाः कल्लोलविशेषाः, तथा अतिक्षुभ्यंतः,भयभ्रांता इव भ्रमंतः शोभमाना निर्मलाः स्वच्छाः उत्कटा उद्धता ऊर्मयो विच्छित्तिमंतः कल्लोलाः, ततः एतैः सर्वैः पूर्वोक्तैः कल्लोलप्रकारैः सह यः संबंधो मिलनं तेन धावमानस्त्वरितं तीराभिमुखं प्रसर्पन्, अपनिवर्त्तमानस्तटात् पश्चाद्वलमानः सन् भासुरतरोऽत्यंतं दीप्रोऽत एव अभिरामो मनोहरो यः स तथा तं, पुनः किंवि० महांतो मकरा मत्स्याश्च प्रसिद्धाः, तथा तिमयः १

तिमिंगिला २ निरुद्धाः ३ तिलितिलिकाः ४ च जलचरजीवविशेषाः, अथैतेषां अभिघातेन पुच्छाछोटनेन उत्पन्नः कर्पूरवदुज्ज्वल फेनप्रसरो यस्य स तथा तं, पुनः किंवि० महत्यो नद्यो गंगाद्यास्तासां ये त्वरितवेगाः शीघ्रं आगमनानि तैरागतभ्रम उत्पन्नभ्रमणो यो गंगावर्त्तनामा आवर्त्तविशेषस्तत्र व्याकुलीभवत्, अत एव उच्छलत् आवर्त्तपतितत्वेन अन्यत्र निर्गमावकाशाऽभावात् ऊर्ध्वं उच्छलत् प्रत्यवनिवृत्तं ऊर्ध्वंउच्छल्य तत्रैव पुन पतितं, अत एव तत्र आवर्त्ते एव भ्रमत्, तत एव च लोलं एवंविध स्वभावतश्चचलं, सलिल पानीय यत्र स तथा तं, प्रेक्षते इति क्रियापदं, क्षीरोदसागरं इदं विशेष्य, शरत्कालिन रजनीकर. चन्द्रस्तद्वत् सौम्य वदनं यस्या , एवंविधा त्रिशला ॥ ११ ॥ ४३ ॥

( तओ पुणो त्ति ) तत सा त्रिशला द्वादशे स्वप्ने विमानवर पुंडरीक प्रेक्षते, अथ किं विशिष्टं विमानवरपुण्डरीक ? तरुणो नूतनो य· सूर्यस्तस्य मंडलं बिंबं तेन समा प्रभा कांतिर्यस्य तत्तथा, पुनः किंवि० दीप्यमाना शोभा यस्य स तथा, पुन· किंवि० उत्तमै· काचनमणिसमूहैः सुवर्णरत्नप्रकरै· प्रवरा ये अष्टाधिकसहस्रसंख्या ये, ते के, स्तंभाः तैः दीप्यमानं सत् नभ आकाश प्रदीपयति

यत् तत् तथा, पुनः किंवि० कनकप्रतरेषु सुवर्णपत्रेषु लंबमानाभिर्मुक्ताभिः समुज्ज्वलं, पुनः किंवि० ज्वलंति दीप्यमानानि देवसंबंधीनि, अर्थाल्लंबितानि दामानि पुष्पमाल्यानि यत्र तत्तथा, पुनः किंवि० इहा मृगा वृकाः' वरगरूजीव इति लोके ' वृषभाः, तुरगा अश्वाः, नरा मनुष्याः, मकराः, विहगाः पक्षिणः, व्यालकाः सर्पाः, किन्नरा देवजातिविशेषाः, रुरवो मृगभेदाः, शरभा अष्टपदाः, चमर्यो धेनवः, संसक्ताः श्वापदविशेषाः, कुंजरा हस्तिनः, वनलता अशोकलताद्याः, पद्मलताः पद्मिन्यः, एतेषां सर्वेषां या भक्ती रचनाचित्राणि, इति यावत्, तैः चित्रं आश्चर्यकारि ॥ पुनः किंवि० गांधर्वशब्देन इह गीतं उच्यते, उपवाद्यमानशब्देन वादित्राण्युच्यंते, ततो गांधर्वोपवाद्यमानानां गीतवादित्राणां संपूर्णो घोषः शब्दो, यत्तत्तथा, पुनः किंवि० नित्यं निरंतरं सजलो जलसंपूर्णो घनो निबिडो विपुलः पृथुल एवंविधो यो जलधरो मेघस्तस्य यत् गर्जितशब्दो गर्जारव इत्यर्थः, तस्य अनुनादिना सदृशेन, एवंविधेन देवसंबंधिदुंदुभिमहाशब्देन सकलमपि जीवलोकं पूरयंतं शब्दव्याप्तं कुर्वंतं इत्यर्थः, पुनः किंवि० कृष्णागुरु १ प्रवरकुंदुरुक्क २ तुरुक्काः ३ प्राग्व्याख्याताः,

तथा दह्यमानधूपो दशांगादिर्धूपो, वासांगानि सुगंधद्रव्याणि, एतेषां सर्वेषां यो मघमघायमानो उद्धुत इतस्ततः प्रसृतश्च यो गंधस्तेन अभिरामं, पुनः किंवि० नित्य आलोक उद्योतो यत्र तत्तथा ॥ पुनः किंवि० श्वेत उज्ज्वल, अत एव श्वेता उज्ज्वला प्रभा कांतिर्यस्य तत्तथा, पुन किंवि० सुरवरैः प्रधान शोभित, न तु रिक्त, प्रेक्षते इति क्रियापदं, सा त्रिशला, इति प्राग्योजित, पुनः किंवि० सातस्य सातावेदनीयस्य कर्मण उपभोगो यत्र तत् सातोपभोगं, ईदृश विमानवरपुंडरीकं, विमानवरेषु पुंडरीकमिव अत्युत्तमत्वात्, इदं विशेष्य ॥ १२ ॥ ४४ ॥

( तओ पुणोत्ति ) ततः पुनः सा त्रिशला त्रयोदशे स्वप्ने रत्ननिकरराशिं पश्यति, अथ किं विशिष्ट रत्ननिकरराशिं? पुलक १ वज्र २ इंद्रनीलं नीलरत्नं ३ सस्यक रत्नविशेषः ४ कर्केतनं ५ लोहिताक्ष ६ मरकतं ७ मसारगल्लं ८ प्रवाल ९ स्फटिक १० सौगंधिक ११ हंसगर्भ १२ अंजनं १३ चंद्रप्रभश्चंद्रकांतरत्नं १४ एभी रत्नप्रकारैर्महीतलप्रतिष्ठितं महीतले स्थितमपि गगनमंडलस्यांतं यावत् प्रभासयंतं, लोकप्रसिद्धस्य आकाशस्यापि शिखरं स्वकांत्या शोभयंतं इत्यर्थः, पुनः किंवि० उच्चं,

किंप्रमाणं इत्याह—मेरुगिरिसदृशं प्रेक्षते इति क्रियापदं, सा त्रिशला रत्ननिकराणां राशिः उच्छ्रितः समूहस्तं. इदं विशेष्यं ॥ १३ ॥ ४५ ॥

( सिहिं चत्ति )सिहिं चेति पदं प्रागुक्तगाथागतं 'तउ पुणो' इत्यर्थसूचकं, ततः सा त्रिशलाचतुर्दशस्वप्ने ईदृशं शिखिनं अग्निं पश्यति, अथ किं विशिष्टं शिखिनं, विपुला विस्तीर्णा तथा उज्ज्वलपिंगलेन मधुघृतेन परिषिच्यमाना, उज्ज्वलेन घृतेन पिंगलेन च मधुना सिच्यमाना, अत एव निर्धूमा धगधगिति कुर्वत्यो ज्वलंत्यो दीप्यमाना या ज्वालास्ताभिरुज्ज्वलं, अत एव अभिरामं; पुनः किंवि० तरतमयोगयुक्तैर्ज्वालाप्रकरैरन्योऽन्यं अनुप्रकीर्ण इव, तस्य सर्वा अपि ज्वाला अन्योऽन्यं प्रविष्टा इव संतीति भावः, प्रेक्षते इति क्रियापदं, पुनः किंवि० ज्वालानां ऊर्ध्वं ज्वलनं ज्वालोज्ज्वलनं, अत्र तृतीयैकवचनलोपः, तेन ज्वालोज्ज्वलनकेन कचित्प्रदेशे अंबरं आकाशं पचंतं इव, अभ्रंलिहत्वेन आकाशपचनसमर्थ इवेत्यर्थः, पुनः किंवि०, अतिवेगेन चंचलं शिखिनं, अग्निं, इदं विशिष्यं ॥ १४ ॥ ४६ ॥

( इमे एयारिसेत्ति ) इमान् एतादृशान् शुभान् कल्याणहेतून् उभया कीर्त्या सहितान् प्रियदर्शनान्, दर्शनमात्रेण प्रीतिकरान् सुरूपान् स्वप्नान् शयनमध्ये निद्रामध्ये दृष्ट्वा प्रतिबुद्धा जागरिता सती अरविंदलोचना त्रिशला हर्षपुलकितांगी, प्रमोदभररोमांचितगात्री ॥ अत्र प्रसंगेन एतेषां स्वप्नानां गर्भकाले सकलजिनराजजननीविलोकनीयत्वं दर्शयन्नाह–एतान् चतुर्दशस्वप्नान् सर्वा पश्यति तीर्थंकरमातरः, यस्यां रजन्या उत्पद्यंते कुक्षौ महायशसः अर्हंतः ॥ ४७ ॥

( तएणं सा तिसला खत्तिआणीत्ति ) ततः सा त्रिशलाक्षत्रियाणी इमान् एतद्रूपान् चतुर्दशमहास्वप्नान् दृष्ट्वा जागरिता सती हृष्टा तुष्टा यावत् हर्षपूर्णहृदया मेघधाराभिः सिक्त यत्कदंबपुष्प कवधतरुकुसुम तद्वत् उल्लसितानि रोमाणि कूपेषु यस्याः सा स्वप्नाना अवग्रह स्मरण करोति, कृत्वा च शय्याया अभ्युत्तिष्ठति, अभ्युत्थाय पादपीठात् प्रत्यवतरति, प्रत्यवतीर्य च अत्वरितया चित्तोत्सुक्यरहितया, अचपलया कायचापल्यरहितया, असंभ्रांतया, कुत्रापि स्खलनारहितया तथा विलंबरहितया राजहंसगतिसदृशया एवंविधया गत्या यत्रैव शयनीय, यत्रैव सिद्धार्थनामा क्षत्रियः, तत्रैव उपागच्छति,

उपागत्य च सिद्धार्थं क्षत्रियं ताभिर्वाणिभिः संलपंती २ प्रतिबोधयतीति संबंधः, अथ कीदृशी- भिर्वाणीभिरित्याह—

( ताहिंत्ति ) ताभिर्विशिष्टगुणसंयुक्ताभिः, पुनः किंवि० इष्टाभिस्तस्य वल्लभाभिः, पुनः किंवि० कांताभिः सर्वदा वांछिताभिः, अत एव प्रियाभिः अद्वेष्याभिः, पुनः किंवि० मनोज्ञाभिर्मनोविनोदकारिणीभिः, अत एव मनोरमाभिर्मनसा रम्यंते पुनःपुनर्गम्यंते, न तु कदापि विस्मार्यंते, एवंविधाभिः, पुनः किंवि० उदाराभिः, सुंदरध्वनिवर्णसंयुताभिः, पुनः किंवि० कल्याणानि समृद्धयस्तत्कारिणीभिः, पुनः किंवि० शिवाभिरुपद्रवहरीभिः, तथाविधवर्णसंयुक्तत्वात्, अत एव धन्याभिर्धनप्रापिकाभिः, पुनः किंवि० मंगलकरणे प्रवीणाभिः, पुनः किंवि० सश्रीकाभिः, अलंकारविराजिताभिः, पुनः किंवि० कोमलतया सुबोधतया च हृदयंगमाभिः, पुनः किंवि० हृदयप्रह्लादनीयाभिः, हृद्गतशोकाद्युच्छेदिकाभिः, पुनः किंवि० मिताः, अल्पशब्दाः बह्वर्थाश्च, मधुराः श्रोत्रसुखकारिण्यः, मंजुलाः सुललितवर्णमनोहराः, ततः पदत्रयस्य कर्मधारये मितमधुरमंजुलाभिरिति, एवंविधाभिर्वा-

णीभिः मंजुपती मदंती जागरयति ॥ ४७ ॥

( " तएणंत्ति " ) ततोऽनंतर जागरणानंतर सा त्रिशला क्षत्रियाणी सिद्धार्थेन राज्ञा अ-भ्यनुज्ञाता सती नानामणिकनकरत्नानां भक्तिभी रचनाभि· चित्रे आश्चर्यकारिणि, एवंविधे भद्रा-सने निषीदति, निषद्य च मार्गजनितश्रमापगमेन आश्वसता उपगता, अत एव विश्वस्ता क्षोभाऽ-भावेन, सुखासनवर गता सुखेन उपविष्टा सती सिद्धार्थं क्षत्रिय ताभि· इष्टाभिः ॥ २ ॥ यावत् पूर्वोक्तस्वरूपाभिर्वाणीभि· एव अवादीत्, तत् किमित्याह ॥ ४९ ॥

एवं निश्चयेन अहं हे स्वामिन्! अद्य तस्मिन् तादृशे पल्यंके, वर्णक· पूर्वोक्तः यावत् जागरि-ता तावद्वाच्य·,तद्यथा ' गयवसह ' इति गाथाप्यत्र वाच्या, तस्मात् एतेषां हे स्वामिन् ! प्रशस्तानां चतुर्दशानां महास्वप्नानां मन्ये इति वितर्कार्थो निपात·, ततः क· अहं विचारयामि कल्याणकारी फलवृत्तिविशेषो भविष्यतीति ॥ ५० ॥

तत्र ततः स सिद्धार्थो राजा त्रिशलाया· क्षत्रियाण्याः अंतिके पार्श्वात् एतमर्थं श्रुत्वा, आ-

न्तेण निशम्य हृदयेनावधार्य हृष्टतुष्टः यावत् हर्षपूर्णहृदयः, धारासिक्तो यो नीपवृक्षः, तस्य सुगंधिपुष्पं, तद्वत् उल्लसितानि रोमाणि कूपेषु यस्य स तथा, एवंविधः सन् तान् स्वप्नान् अवगृह्णाति चेतसि धारति, अवगृह्य च इहां सदर्थविचारणालक्षणां अनुप्रविशति, अनुप्रविश्य च आत्मनः स्वभावेन उत्पन्नेन, तथा मतिपूर्वकेण एवंविधेन बुद्धिविज्ञानेन कृत्वा तेषां स्वप्नानां अर्थावग्रहं अर्थनिश्चयं करोति, अर्थनिश्चयं कृत्वा च त्रिशलाक्षत्रियाणीं प्रति ताभिः इष्टाभिः यावत् सश्रीकाभिः, एवंविधाभिर्वाग्भिः संलपन् सन् एवं अवादीत् ॥ ५१ ॥

किमित्याह उदाराः प्रशस्ताः त्वया हे देवानुप्रिये ! सरलस्वभावे ! स्वप्नाः दृष्टाः, तथा कल्याणकारिणः त्वया हे देवानुप्रिये ! स्वप्नाः दृष्टाः, अनेनाभिलापेन उपद्रवहराः, धनप्रापकाः, मंगलकारकाः, शोभया सहिताः, नीरोगत्वं, चिदानंदः, चिरजीवित्वं, कल्याणं समृद्धिः, मंगलं वांछितप्राप्तिः, एतेषां वस्तूनां कारकाः त्वया हे देवानुप्रिये ! स्वप्नाः दृष्टाः, अर्थो मणिकनकादिः, तस्य लाभः हे देवानुप्रिये ! भोगाः शब्दादयस्तेषां लाभः हे देवानुप्रिये ! पुत्रस्य लाभः हे देवा-

नुप्रिये! सौख्य मनसो निर्वृत्तिस्तस्य भाजः हे देवानुप्रिये! राज्य स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गसैन्य-
लक्षण सप्ताङ्गं, तेषा लाभो भविष्यतीति ॥ अथ सामान्येन फलान्युक्त्वा विशेषतो मुख्यं फलमाह—
अनेन प्रकारेण निश्चयेन त्वं हे देवानुप्रिये! हे त्रिशले! नवसु मासेषु बहुप्रतिपूर्णेषु सत्सु, अर्द्धा-
ष्टमरात्रिदिवसाधिकेषु व्यतिक्रान्तेषु सुरूपं दारक पुत्रं प्रजनिष्यसीति सबधः, किंविशिष्टं अस्माकं
कुले केतुरिव केतुश्चिन्ह ध्वजस्तत्सदृश अत्युत्तं इत्यर्थं, अस्माक कुले दीप इव दीपस्तं प्रकाशकं
मंगलकारक च, कुले पर्वत इव, पर्वत' अपराजवनीय. स्थिरश्च, कुलस्य आधार इत्यर्थः, कुले अव-
तंसक इव मुकुट इव शस्तं, शोभाकरत्वात्, अत एव कुलतिलक, मस्तकधार्यत्वात्, कुलकीर्त्तिकरं,
अशुभवारित्वात्, कुलस्य वृत्ति निर्वाहस्तस्य कारकं, प्रकाशकत्वात् कुले दिनकरसमानं, कुलाधार.
पृथ्वीवत् कुलस्याधारं, कुलस्य नदि वृद्धिस्तस्याः करं कारक, कुलस्य यशः सर्वदिग्गामिनी ख्यातिः
तस्य कारकं, 'एकदिग्गामिनी कीर्त्ति', सर्वदिग्गामुकं यशः' ॥ इतिवचनात्, छायाकरत्वात् आश्र-
यणीयत्वाच्च कुले पादपसमानं, पादपः वृक्षः, कुलस्य विवर्धनं सर्वतो वृद्धिस्तस्य करं कारकं सुकु-

मालं पाणिपादं यस्य तथा तं, लक्षणोपेतानि तथा स्वरूपेणापि पूर्णानि, एवंविधानि पंचेंद्रियाणि यत्र, एवंविधं शरीरं यस्य तथा तं, लक्षणानां व्यंजनानां च ये गुणाः तैः उपपेतं सहितं, मानेन उन्मानेन प्रमाणेन च प्रतिपूर्णानि तथा सुजातानि शोभायुक्तानि, एवंविधानि सर्वाणि अंगानि यत्र एवंविधं सुंदरं अंगं शरीरं यस्य तथा तं, चंद्रवत् सौम्याकारं, वल्लभं, प्रियं दर्शनं यस्य तथा तं, शोभनरूपं, एवं भूतं पुत्रं प्रजनिष्यसि ॥ ५२ ॥

सोऽपि च बालकः उन्मुक्तो बालभावो येन सः, विज्ञातं विज्ञानं तत् परिणतमात्रं यस्य सः, परिपक्वविज्ञान इत्यर्थः, यौवनावस्थां अनुप्राप्तः सन् दाने अंगीकृतनिर्वाहे च समर्थ इत्यर्थः, वीरः संग्रामे समर्थः, विक्रांतः परमंडलाक्रमणसमर्थः, पराक्रमवानित्यर्थः. विस्तीर्णादपि विपुले अतिविस्तीर्णे इत्यर्थः, एवंविधे बलवाहने यस्य स तथा, तत्र बलं सेना, वाहनं गजादिकं, राज्यस्य स्वामि, एवंविधो राजा भविष्यति ॥ ५३ ॥

तस्मात् प्रशस्ताः यावत् त्वया स्वप्ना दृष्टाः, एवं वारद्वयं वारत्रयं प्रशंसति, ततोऽनंतरं सा त्रि-

शला क्षत्रियाणी सिद्धार्थस्य राज्ञः पार्श्वे एत अर्थं श्रुत्वा, निशम्य अवधार्य हृष्टा तुष्टा यावत् हर्षपूर्णहृदया करतलाभ्यां कृत यावत् मस्तके अजलिं कृत्वा एवं अवादीत् ॥ ५४ ॥

एव एतत् हे स्वामिन्! तथा एतत् हे स्वमिन् ! यथास्थितं एतत् हे स्वामिन्! संदेहरहितं एतत् हे स्वामिन्! वांछितं एतत् हे स्वामिन्! युष्मन्मुखात्पतदेव गृहीत एतत् हे स्वामिन्! वांछित सत् पुन• पुनः वाछित एतत् हे स्वमिन्! सत्य• एष• अर्थः, स यथा येन प्रकारेण इमं अर्थं यूय वदथ इति उक्त्वा तान् स्वमान् सम्यक्प्रतीछति अंगीकरोति, अगीकृत्य च सिद्धार्थेन राज्ञा अभ्यनुज्ञाना सती नानामणिरत्नभक्तिभिश्चित्रात् भद्रासनात् अभ्युत्तिष्ठति, अभ्युत्थाय च अत्वरितया अचपलया अ· संभ्रांतया विलंबरहितया राजहंससदृशया गत्या यत्रैव स्वकीय शयनीय तत्रैव उपागछति, उपाग· त्य च एवं अवादीत्, मा इति निषेधे, लोके 'रखे' इति मम एते उत्तमा• स्वरूपतः सत्फलदाय· कत्वात् प्रधानाः, अत एव मगलकारिण• स्वप्ना• दृष्टाः, अन्यैः पापस्वप्नैः मा प्रतिहन्यतां विफली· क्रियता, इति कृत्वा देवगुरुजनसंबंधाभिः, अत एव प्रशस्ताभिः, मंगलकारिणीभिः, धार्मिकाभिः

एवंविधाभिः कथाभिः स्वप्नजागरिकां स्वप्नसंरक्षणार्थं जागरिका स्वप्नजागरिका तां जाग्रती तान् स्व-प्नानेव स्वापनिवारणेन प्रतिचरंती आस्ते इत्यर्थः ॥ ५६ ॥

ततः सिद्धार्थः क्षत्रियः प्रभातकालसमये कौटुंबिकपुरुषान् सेवकान् आकारयति, आकार्य च एवं अवादीत्, किमित्याह ॥ ५७ ॥

क्षिप्रमेव शीघ्रमेव अरे सेवकाः! अद्य उत्सवदिनत्वात् विशेषप्रकारेण बाह्यां उपस्थानशालां ' कचेरी ' इति लोके, किं विशिष्टां? सुगंधोदकेन सिक्तां, शुचिं पवित्रां, संमार्जितां कचवरापनयनेन, उपलिप्तां छगणादिना. ततः पदत्रयस्य कर्मधारयः, सुगंधानां वराणां पंचवर्णानां च पुष्पाणां य उपचारस्तेन कलितां, तथा दह्यमाना कृष्णागुरुप्रवरकुंदुरुष्कतुरुष्कधूपास्तेषां मघमघायमानो यो गं-धस्तेन उद्धूताभिरामां, तथा सुगंधवराणां चूर्णादीनां गंधो यत्र तथा तां, गंधद्रव्यगुटिकासमानां एवंविधां उपस्थानशालां कुरुत स्वयं, अन्यैः कारयत? कृत्वा कारयित्वा च तत्र सिंहासनं रचयत? रचयित्वा मम एतां आज्ञां शीघ्रमेव प्रत्यर्पयत ॥ ५८ ॥

ततोऽनतरं ते कौटुंबिकपुरुषाः सिद्धार्थेन राज्ञा एवं उक्ताः संतः हृष्टास्तुष्टा इत्यादि पूर्ववत्, यावत् हर्षपूर्णहृदयाः अंजलिं कृत्वा हे स्वामिन् ! यथा यूय आदिशथ, तत्तथैव अस्माभिरवश्य कर्तव्य इत्युक्त्वा आज्ञया विनयेन वचनं प्रतिशृण्वति, प्रतिश्रुत्य च सिद्धार्थस्य क्षत्रियस्य पार्श्वात् वहिस्तान्निष्क्रामति, तथा कृत्वा यत्रैव बाह्या उपस्थानशाला तत्रैव उपागच्छंति, उपागत्य शीघ्रं एव विशेषप्रकारेण बाह्या उपस्थानशाला गधोदकेन सिक्तां, तथा शुचिं च कृत्वा यावत् तत्र सिंहासनं रचयंति, रचयित्वा यत्रैव सिद्धार्थः क्षत्रियः, तत्रैव उपागच्छंति, उपागत्य करतलाभ्यां यावत् मस्तके अंजलिं कृत्वा सिधार्थस्य क्षत्रियस्य तां आज्ञा प्रत्यर्पयति, तत्तथैव सर्वं कृत्वा अस्माभिर्भवदादेशः कृत इति निवेदयतीत्यर्थ. ॥ ५९ ॥

ततः स सिद्धार्थ क्षत्रिय. कल्ये च आगामिनि दिने ' प्रादुरित्यव्यय प्रकाशे ' तत. प्रकटप्रभातायां एवं विधायां रजन्यां जातायां सत्यां फुल्लं विकसितं यत् उत्पलं पद्मं, कमलश्च हरिणविशेषस्तयो. सुकुमालं उन्मिलित्तं विकसनं यस्मिन्नेवंविधे, अथ रजनीविभातानंतरं पांडुरे उज्ज्व-

ले प्रभाते पद्मानां दलविकासेन विकसनं जातं, हरिणानां च नयनविकासेनेति, तस्मिन् प्रभाते जाते, पूर्वं रजनी विभाता. तत ईषत्प्रकाशो जातः, ततश्च पांडुरं उज्ज्वलं प्रभातं जातं, ततश्च क्रमेण सूर्ये उत्थिते सति, अथ किं विशिष्टे सूर्ये ? रक्तस्य अशोकस्य यः प्रकाशः प्रभासमूहः, किंशुकं च पलाशपुष्पं, शुकमुखं शुकचंचुपुटं, गुंजाया अर्धं कृष्णभागादन्यभागलक्षणं, एतेषां यो रागो रक्तत्वं तथा बंधुजीवकं पुष्पविशेषः, 'बपोहरीआं फुल' इति लोकप्रसिद्धं, पारापतस्य चरणनयनं, परभृतस्य कोकिलस्य सुरक्ते कोपादिना रक्तीकृते ये लोचने, जपापुष्पस्य 'जासूद' इति लोकप्रसिद्धस्य यो राशिः समूहस्तथा हिंगुलनिकरश्च प्रसिद्धः, एतेभ्यः सर्ववस्तुभ्यः अतिरेकेण राजमानः सन् सदृशः, अत्र यः अतिरेकेण राजमानः सदृशः कथं भवतीत्याशंकायां रक्तत्वमात्रेण सदृशः, कांत्या तु अतिरेकेण राजमान इति वृद्धाः, अथवा रक्ताशोकप्रकाशादीनां हिंगुलनिकरांतानां यो राजमानोऽतिरेकः प्रकर्षस्तत्सदृश इति, पुनः किं विशिष्टे सूर्ये ?

कमलानां आकरा उत्पत्तिस्थानानि ये पद्महृदादयस्तेषु यानि कमलवनानि तेषां विकाशके

एवंविधे अभ्युदिते सूर्ये सति, पुनः किंवि॰ सहस्ररश्मौ, पुनः किंवि॰ दिनकरे, दिनकरणशीले, पुन. किंवि॰ तेजसा देदीप्यमाने, तस्य च श्रीसूर्यस्य करप्रहारैः किरणाभिघातैः अंधकारे अपराद्धे विनाशिते सति, अथ च बालातपः प्रसिद्ध., स कुंकुममिव, तेन जीवलोके मनुष्यलोके खचिते व्याप्ते सति, कोऽर्थ.,—यथा कुंकुमेन किंचिद्वस्तु पिंजरीकृते सति शयनीयात् अभ्युत्तिष्ठति ॥ ६० ॥

स सिद्धार्थ. शयनीयादभ्युत्थाय पादपीठात् प्रत्यवतीर्य यत्रैव अट्टनशाला परिश्रमशाला तत्रैव उपागच्छति, उपागत्य च अट्टनशाला अनुप्रविशति, अनुप्रविश्य च, अनेकानि व्यायामानि, व्यायामपरिश्रमा योग्याभ्यासः ' खुरली तु श्रमो योग्याभ्यास ' इति वचनात्, वल्गनं अन्योऽन्य उपर्युपरिपतनं, व्यामर्दनं परस्परेण बाह्वाद्यंगमोटनं, मल्लयुद्धानि प्रतीतानि, एतै. करणैः कृत्वा श्रांत. सामान्येन श्रमं उपगतः, परिश्रांतः सर्वांगीणश्रमं प्राप्तः, एवंविध. सन् शतवारं न वनौषधसेन पक्वानि, अथवा यस्य पाके शतसौवर्णा लगंति तानि शतपाकानि, एवं सहस्रपाकानि, एवविधै सुगधवरतैलादिभिः, आदिशब्दात् कर्पूरपानीयादीनि ग्राह्याणि, अथ कीदृशैः तैला-

दिभिः? प्रीणनीयैः रसरुधिरादिधातुसमताकारिभिः, दीपनीयैः अग्निदीप्तिकरैः, मदनीयैः कामवृद्धिकरैः, बृंहणीयैर्मांसपुष्टिकरैः, दर्पणीयैर्बलकारिभिः, सर्वाणि इंद्रियाणि गात्राणि च तेषां प्रह्लादनीयैः आप्यायनाकारिभिः, एतादृशैः तैलादिभिः अभ्यंगितः सन् तैलचर्माणि, तैलाभ्यंगानंतरं एवंविधैः पुरुषैः संवाहितः सन् अपगतपरिश्रमो जात इति योगः ॥

अथ किंविशिष्टैः पुरुषैः ? निपुणैः उपायविचक्षणैः, पुन किंवि० प्रतिपूर्णस्य पाणिपादस्य सुकुमालकोमलानि अत्यंतकोमलानि तलानि येषां ते तथा तैः, पुनः किंवि० अभ्यंगनं तैलादिना मृक्षणं, परिमर्दनं तस्य तैलस्य मर्द्दनं, उद्वलनं तस्य तैलस्य वहिःकर्षणं उद्वर्तनं वा, एतेषां करणे ये गुणविशेषास्तेषु निर्मातैर्विशिष्टाभ्यासवद्भिः, पुनः किंवि० दक्षैः, त्वरितत्वरितकार्यकारिभिः, पुनः किंवि० पृष्टैः मर्दनकारिणां अग्रेसरैः. पुनः किंवि० कुशलैर्विवेकिभिः, पुनः किंवि० मेधाविभिः, अपूर्वविज्ञानग्रहणसमर्थैः, पुनः किंवि० जितपरिश्रमैः, वहुपरिश्रमकरणेऽपि श्रममनाप्नुवद्भिः, एवंविधैः पुरुषैः, अस्थ्नां सुखकारिण्या, मांसस्य सुखकारिण्या, त्वचः सुखकारिण्या, रोमाणां सुखका-

रिणा, ' रोमाणां सुखकारि ' इत्येवंरूपया चतुःप्रकारया, सुखा सुखकारिणी परिकर्मणा कृतवि-
श्रामणा यस्यां अंगशुश्रुषा सा, तथा एवंविधया संबाधनया विश्रामणया संबाहितः कृतविश्रामणः, अपगतपरिश्रमः, अट्टनशालायाः प्रतिनिष्क्रामति. ॥ ६१ ॥

अट्टनशालायाः प्रतिनिःक्रम्य यत्रैव मज्जनगृहं तत्रैव उपागच्छति, उपागत्य मज्जनगृहं अनुप्रविशति, अनुप्रविश्य सुमुक्त मुक्ताफलयुक्त यत् जालं गवाक्षस्तेन आकुलो व्याप्तोऽभिरामश्च तस्मिन्, विचित्राणां मणिरत्नानां कुट्टिमतलं बद्धभूभागो यस्य स तथा तस्मिन्, रमणीये, एवंविधे स्नानमंडपे, तथा नानामणिरत्नभक्तिचित्रे, एवंविधे स्नानपीठे सुखेन निषण्ण उपविष्टः,सुखनिषण्णः सन् पुष्पोदकैः पुष्परसमिश्रैर्जलैः,गंधोदकैः श्रीखंडादिरसमिश्रैर्जलैः,उष्णोदकैः,शुभोदकैस्तीर्थजलैः,शुद्धोदकैःस्वभावनिर्मलोदकैः,एवंप्रकारैर्विविधपानीयैःकृत्वा कल्याणकरणे प्रवरःप्रवीण एवंविधो यो मज्जनविधिस्तेन मज्जितस्ताहशैः पुरुषैरिति शेषः, तत्र स्नानावसरे कौतुकशतैः रक्षादीनां शतैः बहुविधैः संयुक्ते ॥

अथ कीदृशो राजा? कल्याणकारि एवंविधं यत् प्रवरमज्जनं तस्यावसाने प्रांते पक्ष्मला अत एव सुकुमाला गंधप्रधाना काषायिका कषायरक्ता शाटिका तया लूहितं निर्जलीकृतं अंगं शरीरं यस्य सः, तथा पुनः कीदृशो राजा? अहतं अभ्यंगं सुमहार्घं बहुमूल्यं ईदृशं यत् दूष्यरत्नं वस्त्ररत्नं तेन सुष्ठु संवृतः, परिहितदूष्यरत्न इत्यर्थः, पुनः किंवि० सरसेन सुरभिणा च गोशीर्षचंदनेन अनुलिप्तं गात्रं यस्य सः, तथा पुनः किंवि० तत्र माला पुष्पमाला, वर्णकविलेपनं च मंडनकारि कुंकुमादिविलेपनं तत् उभयं शूचि पवित्रं यस्य सः, तथा पुनः किंवि० आविद्धानि परिहितानि मणिसुवर्णानि, लक्षणया मणिसुवर्णमयानि भूषणानि येन सः, तथा पुनः किंवि० कल्पिता विन्यस्ता ये हारादयः, तत्र हारोऽष्टादशसरिकः, अर्धहारो नवसरिकस्त्रिसरिकं च प्रतीतं, तथा प्रलंबमानः प्रालंबो झुंबनकं, कटिसूत्रं कट्याभरणं, एतैः कृत्वा सुष्ठु कृता शोभा यस्य सः, तथा पुनः किंवि० पिनद्धानि परिहितानि ग्रैवेयानि ग्रीवाभरणानि येन सः, तथा पुनः किंवि० अंगुलीयकानि अंगुल्याभरणानि ललितानि यानि कचाभरणानि केशमंडनानि पुष्पादीनि यस्य सः, तथा पुनः किंवि०

वरै प्रधानैः कटकैर्वलयैः, त्रुटिकैश्च बाह्वाभरणैः स्तंभितौ इव भुजौ यस्य सः, तथा पुनः किंवि० अधिकरूपेण सश्रीको यः स, तथा पुनः किंवि० कुंडलाभ्यां उद्योतितं आननं मुखं यस्य सः, तथा मुकुटेन दीप्तं शिरो यस्य सः, तथा पुनः किंवि० हारेण अवस्तृतं आच्छादितं, अत एव सुष्टु कृतरतिकं दृष्टृणां प्रमोददायि एवंविधं वक्षो हृदयं यस्य सः, तथा पुनः किंवि० मुद्रिकाभिः पिंगलाः पीतवर्णाः अङ्गुलयो यस्य सः, तथा पुनः किंवि०

प्रलंबेन दीर्घेण अत एव प्रलंबमानेन ईदृशेन पटेन सुष्टु कृतः उत्तरासंगो येन सः, तथा पुनः किंवि० नानामणिकनकरत्नैर्विमलानि दीप्तिमन्ति, अत एव महार्हाणि निपुणेन शील्पिना उपचितानि परिकर्मितानि, देदीप्यमानानि एवंविधानि विरचितानि सुश्लिष्टानि, सुयोजितसंधीनि, अत एव विशिष्टानि, अन्येभ्योऽतिरमणीयानि, लष्टानि मनोहराणि, एवंविधानि आविद्धानि परिहितानि वीरवलयानि वीरत्वगर्वसूचकानि वलयानि येन स तथा, यः कश्चिद्वीरमन्यः स मां विजित्य इमानि मोचयतु, इति बुध्या धृतवीरवलय इत्यर्थः, उपसंहरति, बहुना वर्णकवाक्येन

किं ? कल्पवृक्ष इव अलंकृतो विभूषितः, तत्र कल्पवृक्षः अलंकृतः पत्रादिभिः, विभूषितश्च पुष्पादिभिः, राजा तु अलंकृतो मुकुटादिभिः, विभूषितो वस्त्रादिभिः, इदृशो नरेंद्रः कोरिंटवृक्षसंबंधीनि माल्यानि पुष्पाणि, मालायै हितानीति व्युत्पत्तेस्तेषां माल्यदामभिः सहितेन छत्रेण ध्रियमाणेन श्वेतवरचामरैरुद्धूयमानैश्च शोभित इति विशेषः, पुनः किंवि० मंगलभूतो जयशब्दः कृत आलोके दर्शने यस्य सः, तथा, यस्य दर्शने लोकैर्जयजयशब्दः क्रियमाणोऽस्तीति ज्ञेयं, पुनः किंवि० अनेके ये गणनायकाः स्वस्वसमुदायस्वामिनः, दंडनायकास्तंत्रपालाः स्वराष्ट्रचिंताकर्त्तार इत्यर्थः, राजानो मांडलिकाः, ईश्वराः युवराजाः 'पाटवीकुंवर' इति लोके, तलवरास्तुष्टभूपालप्रदत्तपट्टबंधविभूषिता राजस्थानीयाः, माडंबिकाः मडंबस्वामिनः, कौटुंबिकाः कतिपयकुटुंबस्वामिनः, मंत्रिणो राज्याधिष्ठायकाः सचिवाः, महामंत्रिणस्त एव विशेषाधिकारवंतः, गणका ज्योतिषिकाः, दौवारिकाः प्रतिहाराः, अमात्याः सहजन्मानो मंत्रिणः, चेटा दासाः, पीठमर्द्दकाः, पीठं आसनं मर्दयंतीति पीठमर्दकाः, आसन्नसेवकाः वयस्या इत्यर्थः, नागरा नगरवासिनो लोकाः, निगमा

वणिजः, श्रेष्ठिनो नगरमुख्यव्यवहारिणः, सेनापतयश्चतुरंगसेनाधिकारिणः, सार्थवाहाः सार्थनायकाः, दूताः, अन्येषां गत्वा राजादेशनिवेदकाः, संधिपालाः संधिरक्षकाः, एतैः सर्वैः सार्धं संपरिवृत, ईदृशो नरपतिर्मज्जनगृहात् प्रतिनिःक्रामतीति योगः ॥

अथ मज्जनगृहान्निष्क्रमणे उपमां आह—धवलमहामेघनिर्गत इव, यथा ग्रहसमूहदीप्यमानऋक्षतारागणानां मध्ये वर्त्तमानः शशीव, अत्र ग्रहगणऋक्षतारागणतुल्यः पूर्वोक्तः परिवारः, शशितुल्यस्तु राजेति, कीदृशो नृपः ? प्रियं दर्शनं यस्य स तथा, यथा हि वार्दलान्निर्गतो नक्षत्रादिपरिवृतश्च शशी प्रियदर्शनो भवति, तथा सोऽपि नरपतिरिति भावः, पुनः कीदृशो नरपतिः ? नरपतिः सिद्धार्थः, नरेंद्रः, नरेषु इंद्रसमानः, नरवृषभः, धराभारधुरधरत्वान्नरेषु वृषभसमानः, नरसिंहो, दुस्सहपराक्रमत्वात् नरेषु सिंहसमानः, पुनः किंवि० दीप्यमानः, कया, अभ्यधिकराजतेजोलक्ष्म्या, एवंविधो नृपतिः मज्जनगृहात् स्नानमंदिरात् प्रतिनिष्क्रामति ॥ ६२-॥

स्नानमंदिरात् प्रतिनिष्क्रम्य यत्रैव बाह्या उपस्थानशाला तत्रैव उपागच्छति, उपागत्य सिंहा-

सने पूर्वाभिमुखो निषीदति, उपविशति. ॥ ६३ ॥

सिंहासने पूर्वाभिमुखो निषद्य उपविश्य आत्मनः सकाशात् ईशानकोणे दिग्भागे अष्ट भद्रासनानि, अथ कीदृशानि? श्वेतवस्त्रेण आच्छादितानि, पुनः किंवि० सिद्धार्थैः श्वेतसर्षपैः कृतो मंगलनिमित्तं उपचारः पूजा येषु तानि, रचयति, रचयित्वा च आत्मनो नातिदूरे नातिसमीपे इत्यर्थः, यवनिकां रचयतीति योजना, अथ किं विशिष्टां यवनिकां? नानाप्रकारैर्मणिरत्नैर्मण्डितां शोभमानां, अत एव अधिकं प्रेक्षणीयां, द्रष्टुं योग्यां, पुनः किंवि० महार्घा बहुमूल्या, वरे प्रधाने पत्तने वस्त्ररत्नोत्पत्तिस्थाने उद्गता, निष्पन्ना, ततो विशेषणसमासस्तां, पुनः किंवि० श्लक्ष्णं यत्पट्टसूत्रं तन्मयः, भक्तीनां रचनानां शतानि तेन चित्रस्तानको यस्यां सा तथा तां, पुनः किंवि० ईहाः, मृगाः, वृकाः, वृषभाः, तुरगाः, नराः, मकराः, विहंगाः, व्यालकाः सर्पाः, किन्नराः, रुरवो मृगभेदाः, शरभा अष्टापदाः, महाकायाः आटवीपशवः, कुंजरा हस्तिनः, चमर्यो गावः, वनलताः चंपकचूतादयः, पद्मलताः प्रतीताः, एतेषां या भक्तयो रचनाः, ताभिः चित्रां, एवंविधां अभ्यंतरां

यवनिकां रचयति, रचयित्वा भद्रासनं रचयति. ॥ अथ किं विशिष्टं भद्रासनं ? —

विविधजातीयमणिरत्नानां भक्तिभी रचनाभिश्चित्रं, पुनः किंवि० आस्तरकः प्रतीत. मृदुयों मसुरक आस्तरणविशेषस्ताभ्यां अवस्तृतं आच्छादितं, श्वेतेन वस्त्रेण प्रत्यवस्तृतं उपरि आच्छादितं, पुनः किंवि० सुतरां मृदुक अतिकोमलं, पुनः किंवि० अंगस्य सुखः सुखकारी स्पर्शो यस्य स तथा, अत एव विशिष्टं शोभनं त्रिशलायै क्षत्रियाण्यै तद्योग्य इत्यर्थः, इदृशं भद्रासनं रचयति, रचयित्वा च कौटुंबिकपुरुषान् शब्दयति, शब्दयित्वा च एवं अवादीत्, किमित्याह—॥ ६४ ॥

(खिप्पामेव भो देवाणुप्पिआ इति) शीघ्रमेव भो देवानुप्रिया. । सेवका. स्वप्नलक्षणपाठकान् शब्दयत ? अथ किं विशिष्टान् स्वप्नलक्षणपाठकान् ? अष्ट अंगानि यत्र एवंविधं यत् महानिमित्तं निमित्तशास्त्र भाविपदार्थसूचकस्वप्नादिफलव्युत्पादको ग्रंथस्तस्य सूत्रार्थौ धारयति ये ते, तथा तान्, तत्र निमित्तस्य अष्ट अंगानि इमानि—अंगं १ स्वप्नं २ स्वरं ३ चैव । भौमं ४ व्यंजन ५ लक्षणे ६ ॥ उत्पाद ७ मंतरिक्षं च ८ । निमित्तं स्मृतमष्टधा ॥ १ ॥ तत्र पुंसां दक्षिणांगे स्त्रीणां वामांगे स्फु-

रणं सुंदरमित्याद्यंगविद्या १, स्वप्नानां उत्तममध्यमाधमविचारः स्वप्नविद्या २, दुर्गादीनां स्वरपरिज्ञानं स्वरविद्या ३, भौमं भूमिकंपादिविज्ञानं ४, व्यंजनं मषतिलकादि ५, लक्षणं करचरणरेखादि सामुद्रिकोक्तं ६, उत्पात उल्कापातादिः ७, अंतरिक्षं ग्रहाणां उदयास्तादिपरिज्ञानं ८॥ पुनः किंवि० विविधानि यानि शास्त्राणि तत्र कुशलाः, तान् एवंविधान् स्वप्नलक्षणपाठकान् आकारयत ? ॥

ततः ते कौटुंबिकाः पुरुषाः सिद्धार्थेन राज्ञा एवं उक्ताः संतः हृष्टतुष्टाः यावत् हर्षपूर्णहृदयाः, करतलाभ्यां यावत् प्रतिश्रुएवंति, यावत्करणात् " करयल परिग्गहिअं दसनहं सिरसावत्तं मत्थए अंजलिं कट्टु, एवं देवो तहत्ति आणाए विणएणं वयणं पडिसुणंति " इति वाच्यं, आज्ञया विनयेन वचनं प्रतिश्रुएवंति. ॥ ६५ ॥

प्रतिश्रुत्य सिद्धार्थस्य क्षत्रियस्य पार्श्वात् बहिः निस्सरंति, प्रतिनिष्क्रम्य क्षत्रियकुंडग्रामस्य नगरस्य मध्यभागेन यत्रैव स्वप्नलक्षणपाठकानां गृहाणि संति, तत्रैव उपागच्छंति, उपागत्य स्वप्नलक्षणपाठकान् शब्दयंति. ॥ ६६ ॥

ततोऽनंतरं ते स्वप्नलक्षणपाठका: सिद्धार्थस्य क्षत्रियस्य कौटुंबिकपुरुषैः आकारिता: संत: हृष्टाः, तुष्टा, यावत् हर्षपूर्णहृदया:, स्नाताः, पुन: किंवि० कृतं बलिकर्म पूजा यैस्ते, पुनः किंवि० कौतुकानि तिलकादीनि, मंगलानि दधिदूर्वाक्षतादीनि, तान्येव प्रायश्चित्तानि दु:स्वप्नादिविध्वंसकानि कृतानि यैस्ते, तथा पुन: किंवि० शुद्धानि उज्ज्वलानि, प्रवेश्यानि राजसभाप्रवेशयोग्यानि, उत्सवादिमंगल-सूचकानि, एवंविधानि प्रवरवस्त्राणि परिहितानि यैस्ते तथा, पुनः किंवि० अल्पानि स्तोकानि महार्घाणि बहुमूल्यानि एवंविधानि यानि आभरणानि तै अलंकृतं शरीरं येषां ते, तथा पुनः किं-वि० सिद्धार्था: श्वेतसर्षपाः, हरितालिका दूर्वा, तद् उभय कृतं मंगलनिमित्त मूर्धनि यैस्ते तथा, एवंविधाः संतः स्वकेभ्यः स्वकेभ्यो गृहेभ्यो निर्गच्छंति, निर्गत्य च क्षत्रियकुंडस्य ग्रामस्य नगरस्य मध्यमध्येन यत्रैव सिद्धार्थस्य राज्ञ: भवनवरावतंसकप्रतिद्वार, भवनवरेषु भवनश्रेष्ठेषु अवतंसक इव मुकुट इव भवनवरावतंसकस्तस्य प्रतिद्वारं मूलद्वार, तत्रैव उपागच्छंति, उपागत्य च भवनव-रावतंसकप्रतिद्वारे एकत्र मिलिता सम्मतीभवंति, सर्वसम्मतमेकं पुरस्कृत्य, अन्ये तदनुगामिनो

भवंतीति तत्त्वं ॥ यतः—

सर्वेऽपि यत्र नेतारः । सर्वे पंडितमानिनः ॥ सर्वे महत्त्वमिछंति । तद्वृंदमवसीदति ॥१॥ दृष्टांतश्च अत्र पंचशतसुभटानां, तद्यथा-केषांचित्सुभटानां पंचशती परस्परमसंबद्धा सेवानिमित्तं कस्यचिद्राज्ञःपुरो ययौ; राज्ञा च मंत्रिवचसा परीक्षार्थं एकैव शय्या प्रेषिता, ते च सर्वेऽपि अहमिंद्रा लघुवृद्धव्यवहाररहिताः परस्परं विवदमानाः, सर्वैरपि एका शय्या व्यापार्या इति बुद्ध्या शय्यां मध्ये मुक्त्वा तदभिमुखपादाः शयितवंतः, प्रातश्च प्रछन्नमुक्तपुरुषैर्यथावद्व्यतिकरे निवेदिते कथं एते स्थितिरहिताः परस्परं असंबद्धाः युद्धादि करिष्यंतीति राज्ञा निर्भर्त्स्य निष्कासिता इति; ततस्ते स्वप्नपाठका एकत्र मिलित्वा यत्रैव बाह्या उपस्थानशाला, यत्रैव सिद्धार्थः क्षत्रियः, तत्रैव उपागछंति, उपागत्य करतलाभ्यां यावत् अंजलिं कृत्वा सिद्धार्थं क्षत्रियंप्रति जयेन विजयेन कृत्वा, त्वं वर्धस्व इत्याशीर्वादं दत्तवंतः, तच्चैवं—दीर्घायुर्भव वृत्तवान् भव भव श्रीमान् यशस्वी भव । प्रज्ञावान् भव भूरिसत्त्वकरुणादानैकशौंडो भव ॥ भोगाढ्यो भव भाग्यवान् भव महासौभाग्यशाली भव । प्रौढश्रीर्भव की-

र्त्तिमान् भव सदा विश्वोपजीव्यो भव ॥ १ ॥ कल्याणमस्तु शिवमस्तु धनागमोऽस्तु । दीर्घायुरस्तु सुतजन्मसमृद्धिरस्तु ॥ वैरिक्षयोऽस्तु नरनाथ सदा जयोऽस्तु । युष्मत्कुले च सततं जिनभक्तिरस्तु ॥ २ ॥ ६३ ॥

॥ इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्याय
श्रीविनयविजयगणिविरचितायां कल्पसुबोधिकायां
तृतीयः क्षणः समाप्तः ॥ ग्रंथाग्रंथ ( ३०० ) ॥
त्रयाणामपि व्याख्यानानां ग्रंथाग्रंथ
( २१०६ ) श्रीरस्तु ॥

॥ अथ चतुर्थं व्याख्यानं प्रारभ्यते ॥

" तएणं ति " ततस्ते स्वप्नलक्षणपाठकाः सिद्धार्थेन राज्ञा वंदिताः गुणस्तुतिकरणेन, पूजि-

ताः पुष्पादिभिः, सत्कारिताः फलवस्त्रादिदानेन, सन्मानिताः अभ्युत्थानादिभिः, एवंविधाः संतः प्रत्येकं प्रत्येकं पूर्वन्यस्तेषु भद्रासनेषु निषीदंति. ॥ ६८ ॥

ततः सिद्धार्थः क्षत्रियः त्रिशलां क्षत्रियाणीं यवनिकांतरितां स्थापयति, स्थापयित्वा, पुष्पैः प्रतीतैः, फलैर्नालिकेरादिभिः प्रतिपूर्णौ हस्तौ यस्य स तथा, यतः—रिक्तपाणिर्न पश्ये च । राजानं दैवतं गुरुं ॥ निमित्तज्ञं विशेषेण । फलेन फलमादिशेत् ॥ १ ॥ ततः पुष्पफलप्रतिपूर्णहस्तः सन् उत्कृष्टेन विनयेन तान् स्वप्नलक्षणपाठकान् एवमवादीत्, किमित्याह— ॥ ६९ ॥

एवं निश्चयेन भो देवानुप्रियाः ! अद्य त्रिशला क्षत्रियाणी तस्मिन् तादृशे शयनीये यावत् सुप्तजागरा अल्पनिद्रां कुर्वंती इमान् एतद्रूपान् प्रशस्तान् चतुर्दशमहास्वप्नान् दृष्ट्वा जागरिता. ॥७०॥

तद्यथा ' गय वसह ' इति गाथा चात्र वाच्या, तस्मात् एतेषां चतुर्दशानां महास्वप्नानां हे देवानुप्रियाः ! प्रशस्तानां कः ? विचारयामि कल्याणकारी फलवृत्तिविशेषः भविष्यति. ? ॥७१ ॥

ततःते स्वप्नलक्षणपाठकाः सिद्धार्थस्य क्षत्रियस्य पार्श्वे एनं अर्थं श्रुत्वा, निशम्य च हृष्टाः तुष्टाः यावत्

हर्षपूर्णहृदयास्तान् स्वप्नान् सम्यग् हृदि धरंति, हृदि धृत्वा अर्थविचारणां अनुप्रविशंति, अनुप्रविश्य च अन्योऽन्येन परस्परेण सह संचालयति, सवादयति पर्यालोचयंतीत्यर्थः संचाल्य च तेषां स्वप्नानां लब्धोऽर्थो यैस्ते लब्धार्थाः, स्वबुद्ध्यावगतार्थाः, परस्परतो गृहीतार्थाः, संशये सति परस्परं पृष्टार्थाः, तत एव विनिश्चितार्थाः, अत एव अभिगतार्था अवधारितार्थाः संतः सिद्धार्थस्य राज्ञः पुरतः स्वप्नशास्त्राण्युच्चारयतः सिद्धार्थं क्षत्रिय एवमवादिषुः—स्वप्नशास्त्राणि पुनरेवं—

अनुभूत १ श्रुतो २ दृष्टः ३। प्रकृतेश्च विकारजः ४ ॥ स्वभावतः समुद्भूत ५–श्चितासंततिसंभवः ६ ॥ १ ॥ देवताद्युपदेशोत्थो ७। धर्मकर्मप्रभावजः ८ ॥ पापोद्रेकसमुत्थश्च ९। स्वप्नः स्यान्नवधा नृणां ॥ २ ॥ प्रकारैरादिमैः षड्भि—रशुभश्च शुभोऽपिवा ॥ दृष्टो निरर्थकः स्वप्नः। सत्यस्तु त्रिभिरुत्तरैः ॥ ३ ॥ रात्रेश्चतुर्षु यामेषु। दृष्टः स्वप्नः फलप्रदः ॥ मासैर्द्वादशभिः षड्भि—स्त्रिभिरेकेन च क्रमात् ॥ ४ ॥ निशांत्यघटिकायुग्मे। दशाहात्फलति ध्रुवं ॥ दृष्टः सूर्योदये स्वप्नः। सद्यः फलति निश्चितं ॥ ५ ॥ मालास्वप्नोऽह्नि दृष्टश्च। तथाधिव्याधिसंभवः ॥ मलमूत्रादिपीडोत्थः। स्वप्नः सर्वो निरर्थ-

कः ॥ ६ ॥ धर्मरतः समधातु-र्यः स्थिरचित्तो जितेंद्रियः सदयः ॥ प्रायस्तस्य प्रार्थित-मर्थं स्वप्नः
प्रसाधयति ॥ ७ ॥ न श्राव्यः कुस्वप्नो । गुर्वादेस्तदितरः पुनः श्राव्यः ॥ योग्यश्राव्याऽभावे । गोरपि
कर्णे प्रविश्य वदेत् ॥ ८ ॥ इष्टं दृष्ट्वा स्वप्नं । न सुप्यते नाप्यते फलं तस्य ॥ नेया निशापि सुधिया । जिन-
राजस्तवनसंस्तवतः ॥ ९ ॥ स्वप्नमनिष्टं दृष्ट्वा । सुप्यात्पुनरपि निशामवाप्यापि ॥ नैतत्कथ्यं कथमपि
। केषांचित् फलति न स यस्मात् ॥ १० ॥ पूर्वमनिष्टं दृष्ट्वा । स्वप्नं यः प्रेक्षते शुभं पश्चात् ॥ स तु
फलदस्तस्य भवेद् । द्रष्टव्यं तद्वदिष्टेऽपि ॥ ११ ॥ स्वप्ने मानवमृगपति-तुरंगमातंगवृषभसुरभीभिः
॥ युक्तं रथमारूढो । यो गच्छति भूपतिः स भवेत् ॥ १२ ॥ अपहारो हयवारण-यानासनसदननिव-
सनादीनां ॥ नृपशंकाशोककरो । वंधुविरोधार्थहानिकरः ॥ १३ ॥ यत्सूर्यचंद्रमसो-र्बिंबं ग्रसते स-
मग्रमपि पुरुषः ॥ कलयति दीनोऽपि महीं । ससुवर्णां सार्णवां नियतं ॥ १४ ॥ हरणं प्रहरणभूषण-म
णिमौक्तिककनकरूप्यकुप्यानां ॥ धनमानम्लानिकरं । दारुणमरणावहं वहुशः ॥ १५ ॥ आरूढः शु-
भ्रमिभं । नदीतटे शालिभोजनं कुरुते ॥ भुंक्ते भूमीमखिलां । स जातिहीनोऽपि धर्मधनः ॥ १६ ॥

निजजायायां हरणे । वसुनाशः परिजनश्च संक्लेशः ॥ गोवस्त्रीणां तु नृणां । जायेते बंधुवधबंधौ ॥ ॥ १७ ॥ शुभ्रेण दक्षिणस्यां । यः फणिना दश्यते निजभुजायां ॥ आसादयति सहस्रं । कनकस्यत पचरात्रेण ॥ १८ ॥ जायेत यस्य हरणं । निजशयनोपानहां पुनः स्वप्ने ॥ तस्य म्रियते दयिता । निबिडा स्वशरीरपीडा च ॥ १९ ॥ यो मानुषस्य मस्तक–चरणभुजानां च भक्षणं कुरुते ॥ राज्यं कनकसहस्रं । तदर्धमाप्नोत्यसौ क्रमशः ॥ २० ॥ द्वारपरिघस्य शयन–प्रेंखोलनपादुकानिकेतानां ॥ भंजनमपि यः पश्यति । तस्यापि कलत्रनाशः स्यात् ॥ २१ ॥ कमलाकररत्नाकर– जलसंपूर्णापगा सुहृन्मरणं ॥ यः पश्यति लभतेऽसा–वनिमित्तं वित्तमतिविपुलं ॥ २२ ॥ अति ततं पानीयं । सगोमयं गडुलमौषधेन युतं ॥ यः पिबति सोऽपि नियतं । म्रियतेऽतिसाररोगेण ॥ २३ ॥ देवस्य प्रतिमाया । यात्रास्नपनोपहारपूजादीन् ॥ यो विदधाति स्वप्ने । तस्य भवेत् सर्वतो वृद्धिः ॥ २४ ॥ स्वप्ने हृदयसरस्यां । यस्य प्रादुर्भवंति पद्मानि ॥ कुष्ठविनष्टशरीरो । यमवसतिं याति स त्वरितं ॥ २५ ॥ आज्यं प्राज्यं स्वप्ने । यो विंदति वीक्ष्यते यशस्तस्य ॥ तस्याभ्यवहरणं वा । क्षीरान्नेनैव सह शस्तं ॥

॥ २६ ॥ हसने शोचनमचिरात् । प्रवर्त्तने नर्त्तनेऽपि वधबंधाः ॥ पठने कलहश्च नृणा—मेतत् प्राज्ञेन विज्ञेयं ॥ २ ७ ॥ कृष्णं कृत्स्नमशस्तं । मुक्त्वा गोवाजिराजगजदेवान् ॥ सकलं शुक्लं च शुनं । त्य-क्त्वा कर्पासलवणादीन् ॥ २७ ॥ दृष्टा स्वप्ना ये स्वं–प्रति तेऽत्र शुनाशुना नृणां स्वस्य ॥ ये प्रत्यप-रं तस्य । ज्ञेयास्ते स्वस्या नो किंचित् ॥ २ए ॥ डुःस्वप्ने देवगुरून् । पूजयति करोति शक्तितश्च तपः ॥ सततं धर्मरतानां । डुःस्वप्नो नवति सुस्वप्नः ॥ ३० ॥

तथा सिद्धांतेऽपि–इत्थी वा पुरिसो वा सुवणंते एगं महंतं खीरकुंनं वा महुकुंनं वा पासमाणे पासइ, उप्पाडेमाणे उप्पाडेइ, उप्पाडिअं मन्नइ, तरकणमेव बुज्झइ, तेणेव भवग्गहणेणं सिज्झइ, जाव अंतं करेइ ॥ इत्थी वा पुरिसो वा सुमिणंते एगं महंतं हिरणरासिं वा सुवणरासिं वा वयरा-सिं वा पासमाणे पासइ, दुरूहमाणे दुरूहइ, दुरूढमिति अप्पाणं मन्नइ, तरकणमेव बुज्झइ, तेणेव नवग्गहणेणं जाव अंतं करेइ, एवमेयं रयणरासिं, तउअरासिं, तंबरासिं, सीसगरासिंति सूत्राणि वाच्यानि; नवरं दुच्चेणं भवग्गहणेणं सिज्झइ इति वाच्यं ॥ ७१ ॥

एवं निश्चयेन हे देवानुप्रिय ! हे सिद्धार्थराजन् ! अस्माक स्वप्नशास्त्रे द्विचत्वारिंशत् स्वप्नाः सामान्यफलाः, त्रिंशत् महास्वप्नाः उत्तमफलदायकाः, द्वासप्ततिः सर्वे स्वप्ना. कथिताः तत्र च हे देवानुप्रिय ! अर्हन्मातरो वा चक्रवर्तिमातरो वा अर्हति वा चक्रधरे वा गर्भे व्युत्क्रामति प्रविशति सति एतेषां त्रिंशतः महास्वप्नाना मध्ये इमान् चतुर्दश महास्वप्नान् दृष्ट्वा प्रतिबुध्यते जाग्रति. ॥ ७३ ॥ तद्यथा—' गयवसह ' इति गाथा चात्र वाच्या. ॥ ७४ ॥

वासुदेवमातरो वा वासुदेवे गर्भे व्युत्क्रामति सति एतेषां चतुर्दशानां महास्वप्नानां मध्ये अन्यतरा-न् सप्त स्वप्नान् दृष्ट्वा प्रतिबुध्यते ॥ ७५ ॥

बलदेवमातरो वा बलदेवे गर्भे व्युत्क्रामति सति एतेषां चतुर्दशानां महास्वप्नानां मध्ये अन्य-तरान् चतुरः महास्वप्नान् दृष्ट्वा प्रतिबुध्यते ॥ ७६ ॥

मांडलिको देशाधिपतिः, तस्य मातरो वा मांडलिके गर्भे व्युत्क्रामति एतेषां चतुर्दशानां महास्वप्नानां मध्ये अन्यतरं एकं महास्वप्नं दृष्ट्वा प्रतिबुध्यंते ॥ ७७ ॥

इमे च हे देवानुप्रिय ! त्रिशलया क्षत्रियाण्या चतुर्दश महास्वप्नाः दृष्टाः, तस्मात् प्रशस्ताः हे देवानुप्रिय ! त्रिशलया क्षत्रियाण्या स्वप्ना दृष्टाः, यावत् मांगल्यकारकाः हे देवानुप्रिय ! त्रिशलया क्षत्रियाण्या स्वप्ना दृष्टाः, तस्मात् अर्थलाभो भविष्यति, हे देवानुप्रिय ! भोगलाभो हे देवानुप्रिय ! पुत्रलाभो हे देवानुप्रिय ! सुखलाभो हे देवानुप्रिय ! राज्यलाभो हे देवानुप्रिय ! अनेन प्रकारेण निश्चयेन हे देवानुप्रिय ! त्रिशला क्षत्रियाणी नवसु मासेषु बहु प्रतिपूर्णेषु सार्द्धसप्तसु च अहोरात्रेषु व्यतिक्रांतेषु सत्सु युष्माकं कुले केतुसमानं, कुले दीपसमानं, कुले मुकुटसमानं, कुलस्य पर्वतसमानं, कुलस्य तिलकसमानं, कुलस्य कीर्त्तिकारकं, कुलस्य निर्वाहकारकं, कुले सूर्यसमानं, कुलस्याधारं, कुलस्य यशःकारकं, कुले वृक्षसमानं, कुलस्य तंतुसंतानः परंपरा, तस्य विवर्धनकारकं, सुकुमालं पाणिपादं यस्य तं, अहीनानि प्रतिपूर्णानि च पंचेंद्रियाणि यत्र एवंविधं शरीरं यस्य तथा तं, लक्षणव्यंजनानां गुणैरुपपेतं, मानोन्मानप्रमाणैः प्रतिपूर्णानि सुजातानि च सर्वांगानि यत्र एवंविधं सुंदरं अंगं यस्य तथा तं, चंद्रवत् सौम्याकारं, वल्लभं, प्रियं दर्शनं यस्य तथा तं, सुरूपं, एवं विधं

दारकं पुत्रं प्रजनिष्यति ॥ ७७॥

सोऽपि च दारक उन्मुक्तबालभावः, विज्ञानं परिपक्वं यस्य स तथा तं, यौवनावस्थामनुप्राप्तः सन् दानादिषु शूरः, संग्रामे वीरः, परमकलाक्रमणसमर्थः, विस्तीर्णविपुले बलवाहने यस्य स तथा तं, एवंविधश्चक्रवर्ती चतुरंतस्वामी राजा राजस्वामी भविष्यति. जिनो वा त्रैलोक्यनायकोधर्मवरचातुरंतचक्रवर्ती, तत्रजिनत्वे चतुर्दशानां अपि स्वप्नाना पृथक् पृथक् फलानि इमानि-चतुर्दंतहस्तिदर्शनाच्चतुर्धा धर्मं कथयिष्यति १, वृषभदर्शनाद् भरतक्षेत्रे बोधिबीजं वपस्यति २, सिंहदर्शनात् मदनादिदुर्गजभज्यमानं भव्यवनं रक्षिष्यति ३, लक्ष्मीदर्शनाद् वार्षिकदानं दत्वा तीर्थंकरलक्ष्मीभोक्ष्यते ४, दामदर्शनात्त्रिभुवनस्य मस्तकधार्यो भविष्यति ५,चन्द्रदर्शनात् कुवलये मुदं दास्यति ६,सूर्यदर्शनाद्भामंडलभूषितो भविष्यति ७, ध्वजदर्शनाद्धर्मध्वजभूषितो भविष्यति ८, कलशदर्शनात् धर्मप्रासादशिखरे स्थास्यति ९, पद्मसरोदर्शनात् सुरसंचारितकमलस्थापितचरणो भविष्यति १०, रत्नाकरदर्शनात् कैवल्यरत्नस्थानं भविष्यति ११,विमानदर्शनाद् वैमानिकानामपि पूज्यो भविष्यति १२, रत्नराशिदर्शनात्

रत्नप्राकारभूषितो भविष्यति १३, निर्धूमाग्निदर्शनाद् भव्यकनकशुद्धिकारी भविष्यति १४. चतुर्दशानामपि समुदितफलं तु चतुर्दशरज्ज्वात्मकलोकाग्रस्थायी भविष्यति. ॥ ७९ ॥

तस्मात् उदाराः हे देवानुप्रिय ! त्रिशलया क्षत्रियाण्या स्वप्नाः दृष्टाः, यावत् मांगल्यकारकाः हे देवानुप्रिय ! त्रिशलया क्षत्रियाण्या स्वप्नाः दृष्टाः ॥ ८० ॥

ततोऽनंतरं सिद्धार्थो राजा तेषां स्वप्नलक्षणपाठकानां पार्श्वे एतं अर्थं श्रुत्वा निशम्य च हृष्टः तुष्टः यावत् हर्षपूर्णहृदयः करतलाभ्यां यावत् अंजलिं कृत्वा तान् स्वप्नलक्षणपाठकान् एवं अवादीत् ॥ ८१ ॥

एवं एतत् हे देवानुप्रियाः ! तथैवं हे पाठकाः ! यथास्थितं एतत् भो पाठकाः ! वांछितं एतत् भो पाठकाः ! युष्मन्मुखात् पतदेव गृहीतं एतद् भो पाठकाः ! वांछितं सत् पुनः पुनर्वांछितं एतद् भो पाठकाः ! सत्यः एषोऽर्थः, येन प्रकारेण इमं अर्थं यूयं वदथ, इति उक्त्वा तान् स्वप्नान् सम्यक् प्रतिच्छति, तथा कृत्वा तान् स्वप्नलक्षणपाठकान् विपुलेन अशनेन शाल्यादिना, पुष्पैः अग्रथि-

तैजात्यादिपुष्पैः, वस्त्रैः प्रतीतैः, गंधैर्वासचूर्णैः, माल्यैर्ग्रथितपुष्पैः, अलंकारैर्मुकुटादिभिः सत्कारयति सन्मानयति च, विनयवचनप्रतिपत्त्या तत्कार्यं सन्मान्य च विपुलं जीविकार्हं आजन्मनिर्वाहयोग्यं प्रीतिदानं ददाति, प्रीतिदानं दत्वा च प्रतिविसर्जयति ॥ ७२ ॥

ततः सिद्धार्थः क्षत्रियः सिंहासनात् अभ्युत्तिष्ठति, अभ्युत्थाय यत्रैव त्रिशला क्षत्रियाणी यवनिकांतरिता, तत्रैव उपागच्छति, उपागत्य च त्रिशलां क्षत्रियाणीं एवं अवादीत् ॥ ७३ ॥

एवं खलु हे त्रिशले ! स्वप्नशास्त्रे द्विचत्वारिंशत् स्वप्नाः, त्रिंशत् महास्वप्नाः, इत्यत आरभ्य यावत् एकं महास्वप्नं दृष्ट्वा प्रतिबुध्यते, इति पूर्वपाठ उक्तः. ॥ ७४ ॥

इमे च त्वया हे त्रिशले ! चतुर्दश महास्वप्ना दृष्टाः, तस्मात् उदारा त्वया हे त्रिशले ! स्वप्ना दृष्टाः, यावत् तीर्थंकरो वा त्रैलोक्यनायकः, धर्मवरचतुरंतचक्रवर्ती भविष्यति. ॥ ७५ ॥

ततः सा त्रिशला क्षत्रियाणी एतं अर्थं श्रुत्वा निशम्य हृष्टा तुष्टा यावत् हर्षपूर्णहृदया करतलाभ्यां यावत् अञ्जलिं कृत्वा तान् स्वप्नान् सम्यग् प्रतीच्छति, हृदि धत्ते ॥ ७६ ॥

प्रतीष्ठय च सिद्धार्थराज्ञा अभ्यनुज्ञाता सती नानामणिरत्नभक्तिचित्रात् भद्रासनात् अभ्युत्तिष्ठति, अभ्युत्थाय अत्वरिता अत्वरितया अचपलतया यावत् राजहंससदृशया गत्या यत्रैव स्वकं मंदिरं तत्रैव उपागच्छति, उपागत्य स्वकं मंदिरं अनुप्रविष्टा. । ७७ ।

यतः प्रभृति यस्माद्दिनात् आरभ्य श्रमणो भगवान् महावीरः तस्मिन् राजकुले संहृतः, ततः प्रभृति, तस्माद्दिनादारभ्य बहवः, वैश्रमणो धनदः, तस्य कुंभः, आयत्तता, तस्य धारिणः, अर्थात् वैश्रमणायत्ताः तिर्यग्लोकवासिनो जृंभकजातीयाः तिर्यग्जृंभका उच्यंते, एवंविधा देवाः शक्रवचनेन, शक्रेण वैश्रमणाय उक्तं, वैश्रमणेन तिर्यग्जृंभकेभ्य इति भावः, ' सेत्ति ' अथ शब्दार्थे, अथ ते तिर्यग्जृंभका देवा यानि इमानि वक्ष्यमाणस्वरूपाणि पुरा पूर्वं निहितानि, अत एव पुराणानि चिरंतनानि महानिधानानि भवंति, तद्यथा–तानि कीदृशानि ? प्रहीणस्वामिकानि अल्पीभूतस्वामिकानीत्यर्थः, अतएव प्रहीणसेक्तृकानि, सेक्ता हि उपरि धनक्षेप्ता स तु स्वाम्येव भवति, पुनः किंविशेषां महानिधानानां धनिकसंबंधीनि गोत्राणि अगाराणि च प्रहीणानि विरलीभवंति, तानि प्र-

हीणगोत्रागाराणि, उच्छिन्न: सर्वथा अभाव प्राप्त: स्वामी येषां तानि उच्छिन्नस्वामिकानि, उच्छिन्न सेक्तृकाणि, उच्छिन्नगोत्रागाराणि, अथ केषु केषु स्थानेषु तानि वर्त्तंते इत्याह—ग्रामाः करवत:, आकराः लोहाद्युत्पत्तिभूमयः, नगराणि कररहितानि, खेटानि धूलिप्राकारोपेतानि, कर्बटानि कुनगराणि, मडंबानि सर्वतोऽर्धयोजनात्परतोऽवस्थितग्रामाणि, द्रोणमुखानि यत्र जलस्थलपथावुभावपि भवतः, पत्तनानि जलस्थलमार्गयोरन्यतरेण मार्गेण युक्तानि, आश्रमस्तीर्थस्थानानि तापसस्थानानि वा, संवाहा: समभूमौ कृषिं कृत्वा कृषीवला यत्र धान्य रक्षार्थं स्थापयति, सन्निवेशाः सार्थकटकादीनां उत्तरणस्थानानि, एतेषा द्वन्द्व:, तेषु तथा शृंगाटकेषु शृंगाटकफलाकारस्थानेषु वा, त्रिकेषु, मार्गत्रयमिलनस्थानेषु वा, चत्वरेषु, बहुमार्गमिलनस्थानेषु वा, चतुर्मुखेषु देवकुलछत्रिकादिषु वा, महापथेषु राजमार्गेषु वा, तथा ग्रामस्थानानि उद्वसग्रामस्थानानि तेषु वा, उद्वसनगरस्थानानि तेषु वा, ग्रामसंबधीनि निर्धमनानि जलनिर्गमाः ' खाल ' इति प्रसिद्धास्तेषु, एवं नगरनिर्धमनेषु वा, आपणा हट्टास्तेषु, देवकुलानि यक्षाद्यायतनानि तेषु, सभासु जनोपवेशनस्थानेषु, प्रपासु

पानीयशालासु, आरामेषु कदल्यायाच्छादितेषु स्त्रीपुंसयोः क्रीडास्थानेषु,उद्यानेषु पुष्पफलोपेतवृक्षशोभितेषु बहुजनभोग्येषु उद्यानिकास्थानेषु इत्यर्थः, वनेषु एकजातीयवृक्षसमुदायेषु, वनखंडेषु अनेकजातीयोत्तमवृक्षसमुदायेषु, स्मशानं शून्यागारं शून्यगृहं, गिरिकंदरा प्रतीता पर्वतगुहेत्यर्थः, तत्र गृहशब्दः प्रत्येकं योज्यः, शांतिगृहाः शांतिकर्मस्थानानि, शैलगृहाः पर्वतगृहाः, पर्वतं उत्कीर्य कृतगृहा इत्यर्थः, उपस्थानगृहा आस्थानसभाः, भवनगृहाः कुटुंबिवसनस्थानानि, ततः स्मशानादीनां द्वंद्वः, अथ एतेषु ग्रामादिषु शृंगाटकादिषु च यानि महानिधानानि पूर्वं कृपणपुरुषैः संनिक्षिप्तानि तिष्ठंति, तानि तिर्यक्जृंभका देवाः सिद्धार्थराजभवने संहरंति मुंचंतीति योजना ॥ ८८ ॥

'जंरयणिंचणंति' तत्र णमिति वाक्यालंकारे,यस्यां रात्रौ श्रमणो भगवान् महावीरःज्ञातकुले संहृतः, तस्यां रात्रौ, ततः प्रभृति इत्यर्थः, तत् ज्ञातकुलं हिरण्येन रूप्येन अघटितसुवर्णेन वा अवर्द्धत, सुवर्णेन प्रतीतेन अवर्धत, एवं धनेन, गणिम १। धरिम २ मेय ३ परिछेद्य ४ भेदाच्चतुर्विधेन, तदुक्तं— गणिमं जाइ फलपुप्फलाइं १। धरिमं तु कुंकुमगुडाइं २ ॥ मिज्जं चोप्पडलोणाइं ३। रयणवत्थाइ परि-

छिज ४ ॥ १ ॥ धान्येन चतुर्विंशतिभेदेन, तद्यथा—धन्नाइं चउवीसं । जव १ गोहुम २ सालि ३ वीहि ४ सट्ठी य ५ ॥ कुद्दव ६ अणुआ ७ कंगू ८ । रालय ९ तिल १० मुग्ग ११ मासा य १२ ॥ ॥ १ ॥ अयसि १३ हरिमथ १४ तिउडा १५ निप्फाव १६ सिलिंद १७ रायमासा य १८ ॥ उच्छू १९ मसूर २० तुवरी २१ । कुलत्थ २२तह धन्नय २३ कलाया २४ ॥ २ ॥ राज्येन सप्तांगेन, राष्ट्रेण देशेन, बलं चतुरंगसैन्य तेन, वाहनेन ओष्ट्रप्रमुखेण, कोशेन भाण्डागारेण, कोष्ठागारेण धान्यगृहेण, नगरेण, अंतःपुरेण प्रतीतेन, जानपदेन देशवासिलोकेन, यशोवादेन साधुवादेन, च अवर्धत. विपुलं विस्तीर्णं धनं गवादिकं, कनकं घटिताघटितप्रकाराभ्यां द्विविधं, रत्नानि कर्केतनादीनि, मणयश्चंद्रकांताद्याः, मौक्तिकानि प्रतीतानि, शंखा दक्षिणावर्ताः, शिला राजपट्टादिकाः, प्रवालानि विद्रुमाणि, रक्तरत्नानि पद्मरागादीनि, आदिशब्दाद्वस्त्रकंबलादिपरिग्रहस्तेन, तथा सत् विद्यमानं नत्विन्द्रजालादिवत्स्वरूपतोऽविद्यमानं, एवंविध यत् सारस्वापतेय प्रधानद्रव्य, तेन तथा प्रीतिर्मानसी तुष्टिः, सत्कारो वस्त्रादिभिः स्वजनकृता भक्तिस्तत्समुदयेन, तद् ज्ञातकुलं अतीव अतीव अभ्यवर्धत. ततः

श्रमणस्य भगवतो महावीरस्य मातापित्रोः अयं एतद्रूप आत्मविषयः, यावत् संकल्पः समुत्पद्यत, कोऽसौ इत्याह—॥ ८९ ॥

यतः प्रभृति अस्माकं एष दारकः कुक्षौ गर्भतया उत्पन्नः, ततः प्रभृति वयं हिरण्येन वर्धामहे, सुवर्णेन वर्धामहे, धनेन धान्येन यावत् विद्यमानसारस्वापतेयेन प्रीतिसत्कारेण च अतीव अतीव अभिवर्धामहे, तस्माद् यदा अस्माकं एषो दारकः जातो भविष्यति, तदा वयं एतस्य दारकस्य एतदनुरूपं, धनादिवृद्धेरनुरूपं, अत एव गुणेभ्य आगतं, तत एव गुणनिष्पन्नं नामधेयं करिष्यामः, किंतदित्याह—वर्धमान इति. ॥ ९० ॥

ततः श्रमणो भगवान् महावीरः मयि परिस्पंदमाने मातुः कष्टं माभूदिति मातुः अनुकंपनार्थं, मातुर्भक्त्यर्थं, अन्येनापि मातुर्भक्तिरेवं कर्त्तव्या इति दर्शनार्थं च निश्चलः, निष्पंदः, किंचिदपि चलनाऽभावात्, अत एव निरंजनो निष्कंपः, आ इपल्लीनः, अंगगोपनात्, प्रकर्षेण लीनः, उपांगगोपनात्, अतएव गुप्तः, ततः पदत्रयस्य कर्मधारयः, 'यावित्ति' विशेषणसमुच्चये, अभवत्, अ-

त्र कविः—एकांते किमु मोहराजविजये मंत्रं प्रकुर्वन्निव । ध्यानं किंचिदगोचरं विरचयत्येक. परब्रह्मणे ॥ किं कल्याणरसं प्रसाधयति वा देवो विशुध्यात्मकं। रूपं कामविनिग्रहाय जननीकुक्षावसौ व. श्रिये ।२।

ततो भगवतो निश्चलावस्थानानंतरं तस्यास्त्रिशलाक्षत्रियाण्या अय एतद्रूपः यावत् अध्यव-साय. समुत्पन्न., कोऽसौ इत्याह—हृतो मे स गर्भः, अथवा स मे गर्भो मृतः, अथवा स मे गर्भः किं च्युतो ? गर्भस्वभावात् परिभ्रष्टः, अथवा स मे गर्भ. किं गलितः ? द्रवीभूय क्षरितः ? यस्मा-त्कारणात् एष मे गर्भ. पूर्वं एजते, पूर्वं कंपमानोऽभूत, इदानीं नेजते न कंपते, इति कृत्वा इति हेतोः, उपहत. कलुषीभूतो मन.सकल्पो यस्याः सा, तथा चिंता गर्भहरणादिविकल्पसंभवा श्चासि-स्तया, यः शोकः स एव सागर. समुद्रस्तत्र प्रविष्टा ब्रूडिता, अत एव करतले पर्यस्तं स्थापितं मुख यया सा तथा, आर्तध्यानोपगता भूमिगतदृष्टिका ध्यायति, अथ सा त्रिशला तदानीं यद् ध्यायति तल्लिख्यते—

सत्यमिदं यदि भविता । मदीयगर्भस्य कथमपीह तदा ॥ निःपुण्यकजीवाना—मवधिरितिख्या-

तिमत्यभवं ॥ १ ॥ दृष्ट्वा चिंतारत्नं । न हि नंदति भाग्यहीनजनसद्मने ॥ नापि च रत्ननिधानं । दरिद्रगृहसंगती भवति ॥ २ ॥ कल्पतरुर्मरुभूमौ । न प्रादुर्भवति भूम्यभाग्यवशात् ॥ न हि निःपुण्यपिपासित—नृणां पीयूषसामग्री ॥ ३ ॥ हा धिग् धिग् दैवं प्रति । किं चक्रे तेन संततवक्रेण ॥ ॥ यन्मम मनोरथतरु—मूलादुन्मूलितोऽनेन ॥ ४ ॥ आत्तं दत्त्वापि च मे । लोचनयुगलं कलंकविकलमलं ॥ दत्त्वा पुनरुद्दालित—मधमेनानेन निधिरत्नं ॥ ५ ॥ आरोप्य मेरुशिखरं । प्रपातिता पापिनामुनाहमियं ॥ परिवेष्याप्याकृष्टं । भोजनभाजनमलज्जेन ॥ ६ ॥ यद्वा मयापराद्धं । भवांतरेऽस्मिन् भवेऽपि किं धातः ॥ यस्मादेवं कुर्व—न्नुचितानुचितं न चिंतयसि ॥ ७ ॥ अथ किं कुर्वे क्व वा । गच्छामि वदामि कस्य वा पुरतः ॥ दुर्दैवतेन दग्धा । जग्धा मुग्धाधमेन पुनः ॥ ८ ॥ किं राज्येनाप्यमुना । किं वा कृत्रिमसुखैर्विषयजन्यैः ॥ किं वा दुकूलशय्या—शयनोद्भवशर्महर्म्येण ॥ ९ ॥ गजवृषभादिस्वप्नैः । सूचितमुचितं सचित्रजगदर्च्यं ॥ त्रिभुवनजनासंपन्नं । विना जनानंदिसुतरत्नं । १० । युग्मं ॥ धिक् संसारमसारं । धिक् दुःखव्याप्तविषयसुखलेशान् ॥ मधुलिप्तखड्गधा-

रा—खेदनतुखितानहो ललितान् ॥ यद्वा मयका किंचि—त्तथा विध दुःकृतं कृतं कर्म ॥ पूर्वजवे यद् रूपिजि । प्रोक्तमिदं धर्मशास्त्रेषु ॥ १२ ॥ पसुपक्खिमाणुसाण । वाले जो विहुवत्रअए पावो ॥ सो अणवच्चो जायइ । अह जायइ तोवि वज्जिज्जा ॥ १३ ॥ तत् पट्टुका मया किं । त्यक्ता वा त्याजिता अधमबुद्धया ॥ लघुवत्सानां मात्रा । समं वियोग. कृत. किं वा ॥ १४ ॥ तेषां दुग्धापायोऽ—कारि मया कारितोऽथवा लोके ॥ किं वा सवालकोंदुर—बिलानि परिपूरितानि जलैः ॥१५॥ किंवा सारुशिशून्यपि । खगनीडानि प्रपातितानि भुवि ॥ पिकशुककुर्कुटकादे—र्बालवियोगोऽथवा विहित. ॥ १६ ॥ किं वा बालकहत्या—ऽकारि सपत्नीसुताद्युपरि दुष्ट ॥ चिंतितमचिंत्यमपि वा । कृतानि किं कार्मणादीनि ॥ १७ ॥ किंवा गर्भस्तभन—सातनपातनमुख मया चक्रे ॥ तन्मंत्रलेपजान्यपि किं वा मयका प्रयुक्तानि ॥ १८ ॥ अथवा भवांतरे किं । मया कृतं शीलखंडनं बहुश. ॥ यदिदं दु.ख तस्मा—द्धिना न संजवति जीवानां ॥ १९ ॥

यत.—कुरंडरुंडत्तणदुब्भगाइ । वंकत्तनिंदु विसकन्नगाइ ॥ लहृति जम्मंतरजग्गसीला । ना-

ऊण कुब्जा दढसीलभावं ॥ २० ॥ एवं चिंताक्रांता । ध्यायंती म्लानकमलसमवदना ॥ दृष्टा शि-
ष्टेन सखी-जनेन तत्कारणं पृष्टा ॥ २१ ॥ प्रोवाच साश्रुलोचन—रचना निःश्वासकलितवचनेन ॥
किं मंदभागधेया । वदामि यज्जीवितं मेऽगात् ॥ २२ ॥ सख्यो जगुरथ रे सखि । शांतममंगलमशे-
षमन्यदिह ॥ गर्भस्य तेऽस्ति कुशलं । न वेति वद कोविदे सत्यं ॥२३॥ सा प्रोचे गर्भस्य च । कुशले
किमकुशलमस्ति मे सख्यः ॥ इत्याद्युक्त्वामूर्छा—मापन्ना पतति भूपीठे ॥२४॥ शीतलवातप्रभृति-
भि–रुपचारैर्बहुतरैः सखीभिः ॥सा संप्रापितचैत–न्योत्तिष्ठति विलपति च पुनरेवं ॥२५॥गुरुए अणोरपारे
। रयणनिहारे अ सायरेपत्तो॥ छिद्दघडो न भरिज्जइ। ता किं दोसो जलनिहिस्स ॥२६॥ पत्ते वसंतमासे ।
रिद्धिपावंति सयलवणराइ ॥ जं न करिरे पत्तं । ता किं दोसो वसंतस्स ॥ २७ ॥ उत्तुंगो सर-
लतरु । बहुफलभारेण नमिअसव्वंगो ॥ कुब्जो फलं न पावइ । ता किं दोसो तरुवरस्स ॥ २८ ॥
समीहितं यन्न लभामहे वयं । प्रभो न दोषस्तव कर्मणो मम ॥ दिवाप्युलूको यदि नाव-
लोकते । तदा स दोषः कथमंशुमालिनः ॥ २९ ॥ अथ मे मरणं शरणं । किं करणं विफल-

जीवितव्येन ॥ तत् श्रुत्वेति व्यलपत । सख्यादि सकलपरिवारः ॥ ३० ॥ हाकिमुपस्थित-मेतत् । निष्कारणवैरिविधिनियोगेन ॥ हा कुलदेव्यः क गताः । यदुदासीना. स्थिता यूयं ॥ ३१ ॥ अथ तत्र प्रयूहे । विचक्षणा. कारयति कुलवृद्धाः ॥ शांतिकपौष्टिकमंत्रो-पयाचितादीनि कृत्यानि ॥ ३२ ॥ पृच्छंतिच दैवज्ञान् । निषेधयत्यपि च नाटकादीनि ॥ अतिगाढशब्दविरचित-वच-नानि निवारयंत्यपि च ॥ ३३ ॥ राजापि शोककलित. । शोकाकुलितोऽजनिष्टशिष्टमति. ॥ किं कर्त्तव्यविमूढा· । सजाता मन्त्रिण· सर्वे ॥ ३४ ॥

अस्मिन्नवसरे च तास्सद्धार्थराजभवनं यादृश जातं, तत् सूत्रकृत् स्वय आह–तदपि सिद्धार्थरा-जवरभवनं मृदंगो मर्द्दलस्तत्री वीणा, तलताला हस्तताला., यद्वा तला हस्ताः, तालाः कंसिका., नाटकीया नाटकहिता जनाः पात्राणीति भावः, एतेषां यत् मनोज्ञत्वं, तत् उपरतं निवृत्तं यस्मिन्, एवंविध, अतएव दीनं सत् विमनस्कं व्यग्रचेतस्कं विहरति आस्ते ॥ ९२ ॥

तं तथाविधं पूर्वोदितं व्यतिकरं अवधिना अवधार्य भगवान् चिंतयति–किंकुर्मः कस्य वा ब्रूमो।

मोहस्य गतिरीदृशी ॥ दुःषेर्धातोरिवास्माकं । दोषनिष्पत्तये गुणः ॥ १ ॥ मया मातुः प्रमोदाय । कृतं जातं तु खेदकृत् ॥ भाविनः कलिकालस्य । सूचकं लक्षणं ह्यदः ॥ २ ॥ पंचमारे गुणो यस्माद् । भावी दोषकरो नृणां ॥ नालिकेरांभसि न्यस्तः । कर्पूरो मृतये यथा ॥ ३ ॥ इत्येवं प्रकारेण स श्रमणो भगवान् महावीरो मातुरिमं एतद्रूपं आत्मविषयं प्रथितं मनोगतं संकल्पं समुत्पन्नं अवधिना विज्ञाय एकदेशेन अंगुल्यादिना एजते कंपते. ततः सा त्रिशला क्षत्रियाणी हृष्टतुष्टादिविशेषणविशिष्टा यावत् हर्षपूर्णहृदया एवं अवादीत् ॥ ९३ ॥

अथ किं अवादीत् इत्याह—नैव निश्चयेन मे गर्भो हृतोऽस्ति, यावत् नैव गलितः, एषो मे गर्भः पूर्वं न कंपमानोऽभूत्, इदानीं कंपते, इति कृत्वा हृष्टा तुष्टा यावत् हर्षपूर्णहृदया इदृशी सती विहरति; अथ हर्षिता त्रिशला देवी यथाचेष्टत तथा लिख्यते—प्रोल्लसितनयनयुगला । स्मेरकपोला प्रफुल्लमुखकमला ॥ विज्ञातगर्भकुशला । रोमांचितकंचुका त्रिशला ॥ १ ॥ प्रोवाच मधुरवाचा । गर्भो मे विद्यतेऽथ कल्याणं ॥ हा धिक् मयकानुचितं । चिंतितमतिमोहमतिकतया ॥ २ ॥ संत्यथ

मम भाग्यानि । त्रिभुवनमान्या तथा च धन्याहं ॥ श्लाघ्यं च जीवितं मे । कृतार्थतामाप मे जन्म ॥ ३ ॥ श्रीजिनपदाः प्रसेदुः । कृतः प्रसादाश्च गोत्रदेवीभिः ॥ जिनधर्मकल्पवृक्ष—स्त्वाजन्माराधित. फलितः ॥ ४ ॥ एवं सहर्षचित्तां । देवीमालोक्य वृद्धनारीणां ॥ जयजयनंदेत्याद्या—शिषः प्रवृत्ता मुखकजेभ्यः ॥ ५ ॥ हर्षात् प्रवर्तितान्यथ—कुलनारीभिश्च ललितधवलानि ॥ उत्तंभिताः पताका । मुक्तानां स्वस्तिका न्यस्ताः ॥ ६ ॥ आनंदाद्वैतमय । राजकुलं तद्बभूव सकलमपि ॥ आतोद्यगीतनृत्यैः । सुरलोकसम महाशोभं ॥ ७ ॥ वर्धापनागता धन—कोटीर्दत्वन् ददश्च धनकोटीः ॥ सुरतरुरिव सिद्धार्थः । संजातः परमहर्षभरः ॥ ८ ॥

ततः श्रमणो भगवान् महावीरो गर्भस्थ एव, पक्षाधिके मासषट्के व्यतिक्रांते इमं एतद्रूपं अभिग्रहं अभिगृह्णाति, कं इत्याह—खलु निश्चयेन नो मम कल्पते मातापितृषु जीवत्सु मुंडो भूत्वा आगारात् गृहान्निष्क्रम्य अनगारितां साधुतां प्रव्रजितुं दीक्षां गृहीतुं इत्यर्थः ॥ इदं अभिग्रहग्रहणं च उदरस्थेऽपि मयि मातुः ईदृशः स्नेहो वर्तते, तर्हि जाते तु मयि कीदृशो भविष्यतीति धिया,

अन्येषां मातरि बहुमानप्रदर्शनार्थं च, यदुक्तं—आस्तन्यपानाज्जननी पशूना–मादारलाभाच्च नराधमानां ॥ आगेहकृत्याच्च विमध्यमानां । आजीवितं तीर्थमिवोत्तमानां ॥ १ ॥ ९४ ॥

ततः सा त्रिशला क्षत्रियाणी स्नाता, कृतं बलिकर्म पूजा यया सा, तथा कृतानि कौतुकमंगलान्येव प्रायश्चित्तानि यया सा, तथा सर्वालंकारैः विभूषिता सती तं गर्भं नातिशीतैः, नात्युष्णैः, नातितिक्तैः, नातिकटुकैः, नातिकषायैः, नात्याम्लैः नातिमधुरैः, नातिस्निग्धैः, नातिरुक्षैः, नातिआर्द्रैः, नातिशुष्कैः, सर्वर्तुषु ऋतौ ऋतौ भुज्यमाना सेव्यमाना ये सुखहेतवो गुणकारिणस्तैः, तदुक्तं—वर्षासु लवणममृतं । शरदि जलं गोपयश्च हेमंते ॥ शिशिरे चामलकरसो । घृतं वसंते गुरुश्चांते ॥ १ ॥ एवंविधैः भोजनाच्छादनगंधमाल्यैस्तत्र भोजनं प्रतीतं, आच्छादनं वस्त्रं, गंधाः पुटवासादयः, माल्यानि पुष्पमालास्तैर्गर्भं पोषयतीतिशेषः, तत्र नातिशीतलादय एव आहारादयो गर्भस्य हिताः, न तु अति शीतलादयस्ते हि केचिद्वातिकाः, केचित् पित्तिकाः, केचित् श्लेष्मकराश्च, ते च अहिताः, यदुक्तं वाग्भट्टे—वातलैश्च भवेद् गर्भः । कुब्जांधजडवामनः ॥ पित्तलैः स्खलति

पिंग—श्वित्री पांडु कफात्मजिः ॥ १ ॥ तथा, अतिलवणं नेत्रहरं । अतिशीतं मारुतं प्रकोपयति ॥ अत्युष्ण हरति बल । अतिकामं जीवितं हरति ॥ २ ॥ अन्यच्च—मैथुन १ यात २ वाहन ३ मार्गगमना ४ प्रस्खलन ५ प्रपतन ६ प्रपीडन ७ प्रधावना ८ ऽभिघात ९ विषमशयन १० विसमासनो ११ पवास १२ वेग १३ विघाता १४ ऽतिरूक्षा १५ ऽतितिक्ता १६ ऽतिकटु १७ अति भोजना १८ ऽतिरोगा १९ ऽतिशोका २० ऽतिक्षारसेवा २१ ऽतिसार २२ वमन २३ विरेचन २४ प्रेंखोलना २५ ऽजीर्ण २६ प्रभृतिभिर्गर्भो बंधनान्मुच्यते, ततो नातिशीतलाद्यैराहाराद्यैस्त गर्भं सा पोषयतीति युक्त ॥

अथ सा त्रिशला कथं भूता ? रोगा ज्वराद्या', शोक इष्टवियोगादिजनितः, मोहो मूर्छा, भयं भीति., परिश्रमो व्यायाम एते व्यपगता यस्याः, सा तथा, रोगादिरहिता इति भावः ॥ यत एते गर्भस्य अहितकारिणस्तदुक्त सुश्रुते—दिवा स्वापत्याः स्त्रिया स्वापशीलो गर्भः, अंजनादंधः, रोदनाद्विकृतदृष्टि', स्नानानुलेपनाद्दुःशील., तैलाभ्यंगात् कुष्टी, नखापकर्तनात् कुनखी, प्रधावनाच्चंचलः, हसनात् श्यामदंतौष्टतालुजिह्वः, अतिकथनाच्च प्रलापी, अतिशब्दश्रवणाद्बधिर., अवलेखनात् स्ख-

लतिः, व्यंजनक्षेपनादिमारुतायाससेवनाडुन्मत्तः स्यात्, तथा च कुलवृद्धास्त्रिशलां शिक्षयंति—
मंदं संचर मंदमेव निगद व्यामुंच कोपक्रमं। पथ्यं भुंक्ष्व वधान नीविमनघां मामाट्टहासं कृथाः ॥
॥ आकाशे भव मा सुशेष्व शयने नीचैर्बहिर्गच्छ मा। देवी गर्भभरालसा निजसखीवर्गेण सा शि-
क्ष्यते ॥ १ ॥ अथ सा त्रिशला पुनः किंकुर्वंती? यत्तस्य गर्भस्य हितं तदपि मितं, न तु न्यूनं अधिकं वा,
पथ्यं आरोग्यकारणं, अत एव गर्भपोषकं तदपि देशे उचितस्थाने, न तु आकाशादौ, तदपि का-
ले भोजनसमये, न तु अकाले, आहारं आहारयंती, विविक्तानि दोषरहितानि, मृदुकानि कोम-
लानि यानि शयनासनानि, तैः, तथा प्रतिरिक्ता अन्यजनापेक्षया निर्जना, अत एव सुखा सुख-
कारिणी तथा मनोऽनुकूलया मनःप्रमोददायिन्या, एवंविधया विहारभूम्या चंक्रमणासनादिभूम्या
कृत्वा, अथ सा त्रिशला किंविशिष्टा सती तं गर्भं परिवहति? प्रशस्ता दोहदा गर्भप्रभावोद्भूता म-
नोरथा यस्याः सा तथा, ते चैवं—

जानात्यमारिपटहं पटु घोषयामि। दानं ददामि सुगुरून् परिपूजयामि ॥ तीर्थेश्वरार्चनमहं

रचयामि संघे । वात्सल्यमुत्सवजृतं बहुधा करोमि ॥ १ ॥ सिंहासने समुपविश्य वरातपत्रा । संवीज्यमानकरणासितचामराभ्यां ॥ आज्ञेश्वरत्वमुदितानुजवामि सम्यग् । भूपालमौलिमणिलालितपादपीठा ॥ २ ॥ आरुह्य कुंजरशिर' प्रचलत्पताका । वादित्रनादपरिपूरितदिग्विजागा ॥ लोकैः स्तुता जय जयेतिरवैः प्रमोदा—द्रुद्यानकेलिमनघां कलयामि जाने ॥ ३ ॥ इत्यादि, पुनः सा किंवि० संपूर्णदोहदा, सिद्धार्थराजेन सर्वमनोरथपूरणात्, अत एव सन्मानितदोहदा, पूर्णीकृत्य तेषां निवर्त्तितत्वात्, तत एव अविमानितदोहदा, कस्यापि दोहदस्य अवगणनाऽजावात्, पुनः किंवि० व्युछिन्नदोहदा पूर्णवांछितत्वात्, अत एव व्यपनीतदोहदा, सर्वथा असदोहदा सुखं सुखेन, गर्जानावाधया आश्रयति, आश्रयणीय स्तंजादिकं अवलंबते, शेते, निद्रां करोति, तिष्ठति, ऊर्ध्वं निषीदति, आसने उपविशति न्यग् वर्त्तयति, निद्रा विना शय्यायां शेते इत्यर्थः, विहरति, कुट्टिमतले विचरति, अनेन प्रकारेण सुख सुखेन तं गर्जं परिवहतीति जाव. ॥ ए५ ॥

तस्मिन् काले तस्मिन् समये श्रमणो जगवान् महावीरः, योऽसौ उष्णकालस्य प्रथमो मासः,

द्वितीयः पक्षः, चैत्रमासस्य शुक्लपक्षः, तस्य चैत्रशुद्धस्य त्रयोदशीदिवसे, नवसु मासेषु बहुप्रतिपूर्णेषु अर्धाष्टमरात्रिदिवाधिकेषु सार्धसप्तदिवसाधिकेषु नवसु मासेषु व्यतिक्रांतेषु, इति भावः, तदुक्तं–दुक्खं वरमहिलाणं । गब्भे वसिऊण गब्भसुकुमालो ॥ नवमासे पडिपुण्णे । सत्त य दिवस समइरेगे ॥ १ ॥ इदं च गर्भस्थितिमानं न सर्वेषां तुल्यं, तथा चोक्तं–उ १ च उब्ब २ नवम ३ बारस ४ । तेरस ५ पन्नरस ६ सेस १७ गब्भठिइ ॥ मासा अह नव तदुवरि । उसहाई कमेणिमे दिवसा ॥ १ ॥ चउ १ पणवीसं २ छद्दिण ३ । अडवीसं ४ छच्च ५ छब्बि ६ गुणवीसं ७ ॥ सग ८ छवीसं ९ छ १० छय ११ । वीसी १२ गवीसं १३ छ १४ छवीसं १५ ॥ २ ॥ छ १६ प्पण १७ अड १८ सत्त १९ ट्ठय २० । अड २१ ट्ठय २२ छ २३ सत्त २४ होंति गब्भदिणत्ति ॥ सप्ततिशतस्थानके श्रीसोमतिलकसूरिकृते ॥

तदानीं ग्रहेषु उच्चस्थानस्थितेषु, ग्रहाणां उच्चत्वं चैवं–अर्काद्युच्चान्यज १ वृष २ । मृग ३ कन्या ४ कर्क ५ मीन ६ वणिजों ७ शैः ॥ दिग् १० दहना ३ ष्टाविंशति २८ । तिथि १५ षु ५ नक्षत्र २७ विंशतिभिः २० ॥ ॥ १ ॥ अयं भावः—मेषादिराशिस्थाः सूर्यादय उच्चास्तत्रापि दशादीनंशान् यावत् परमोच्चाः, एषां

फलं तु—सुखी १ भोगी २ धनी ३ नेता ४। जायते मण्डलाधिपः ५ ॥ नृपति ६ श्चक्रवर्ती च ७ क्रमाडुच्चग्रहे फलं ॥ १ ॥ तिहिं उच्चेहिं नरिंदो। पंचहिं तह होइ अद्धचक्की अ ॥ छहिं होइ चक्कवट्टी। सत्तहिं तित्थकरो होइ ॥ २ ॥

प्रथमे प्रधाने चंद्रयोगे सति सौम्यासु रजोवृष्ट्यादिरहितासु दिक्षु वर्त्तमानासु, पुनः किं विशिष्टासु दिक्षु ? अंधकाररहितासु, जगवज्जन्मसमये सर्वत्र उद्योतसद्भावात्, पुनः किंवि० विशुद्धासु, दिग्दाहाद्यजावात्, सर्वेषु काकोलूकडुर्गादिषु जयिकेषु जयकारकेषु सत्सु, प्रदक्षिणे, प्रदक्षिणाव र्त्तत्वात्, अनुकूले शीतत्वात्, सुखप्रदे मृदुत्वात् भूमिसर्पिणि, अचनो हि वायुः उच्चैः सर्पति, एवंविधे मारुते वायौ प्रवातुं आरब्धे सति निष्पन्ना, कोऽर्थः—निष्पन्नसर्वशस्या मेदिनी यत्र एवंविधे काले सति, प्रमुदितेषु सुभिक्षादिना, प्रक्रीडितेषु प्रक्रीडितुं आरब्धेषु वसंतोत्सवादिना, एवंविधेषु जनपदेषु जनपदवासिषु लोकेषु सत्सु पूर्वरात्रापररात्रकालसमये, उत्तराफाल्गुनीभिः समं योगं उपागते चंद्रे सति आरोग्या आबाधारहिता सा त्रिशला आरोग्य आबाधारहितं दारकं पुत्रं प्रजा-

ता सुषुवे इतिजावः. ॥ ५६ ॥

॥ इतिमहोपाध्यायश्रीकीर्तिविजयगणिशिष्यमुजिष्योपाध्याय
श्रीविनयविजयगणिविरचितायां कल्पसुबोधिकायां
चतुर्थः क्षणः समाप्तः ॥ ग्रं० ४६ए
चतुर्णामपि व्याख्यानानां
ग्रं० १५३६. श्रीरस्तु ॥



॥ अथ पंचमं व्याख्यानं प्रारच्यते ॥



यस्यां च रात्रौ श्रमणो भगवान् महावीरः जातः, सा रजनी बहुभिर्देवैः शक्रादिभिर्बह्वीभिर्दे-
वीभिः दिक्कुमार्यादिभिश्च अवपतद्भिर्जन्मोत्सवार्थं स्वर्गाद्भुवमागच्छद्भिः उत्पतद्भिरूर्ध्वं गच्छद्भिर्मेरुशि-

खरगननाय' तैः कृत्वा भृशं आकुला इव हर्षाट्टहासादिना कहकहकृतेन, अव्यक्तवर्णकोलाहलमयीव एवंविधा सा रात्रिः अजनत्. अनेन च सूत्रेण सुरकृत सविस्तरो जन्मोत्सवः सूचितः॥

सचाय—अचेतना अपि दिशः । प्रसेदुर्मुदिता इव ॥ वायवोऽपि सुखस्पर्शा । मंदं मंदं ववुस्तदा ॥ १ ॥ उद्योतस्त्रिजगत्यासी—द्दध्वान दिवि दुंदुभिः ॥ नारका अप्यमोदंत । भूरप्युच्छ्वासमासदत् ॥ २ ॥ तत्र तीर्थकृतां जन्मनः सूतिकर्मणि प्रथमतः षट्पंचाशद्दिक्कुमार्यः समागत्य शाश्वतिकं स्वाचारं कुर्वंति ॥ तद्यथा—दिक्कुमार्योऽष्टाधोलोक—वासिन्यः कंपितासनाः ॥ अर्हज्जन्मावधेर्ज्ञात्वा—ऽभ्येयुस्तत्सूतिवेश्मनि ॥ ३ ॥ भोगकरा १ भोगवती २ । सुभोगा ३ भोगमालिनी ४ ॥ सुवत्सा ५ वत्समित्रा च ६ । पुष्पमाला ७ त्वनिंदिता ८ ॥ ४ ॥ नत्वा प्रभुं तदंबां चे—शाने सूतिगृहं व्यधुः ॥ संवर्त्तेनाऽशोधयन् क्ष्मा—मायोजनमितो गृहात् ॥ ५ ॥ मेघकरा १ मेघवती २ । सुमेघा ३ मेघमालिनी ४ ॥ तोयधारा ५ विचित्रा च ६ । वारिषेणा ७ बलाहका ८ ॥ ६ ॥ अष्टोर्ध्वलोकादेत्यैता । नत्वार्हंतं समातृकं ॥ तत्र गंधांबुपुष्पौघ—वर्षं हर्षाद्वितेनिरे ॥ ७ ॥ अथ नंदो १ त-

रानंदे २। आनंदा ३ नंदिवर्धने ४ ॥ विजया ५ वैजयंती च ६। जयंती ७ चापराजिता ८ ॥ ८ ॥ एताः पूर्वरुचकादेत्य विलोकनार्थं दर्पणं अग्रे धरंति ॥ समाहारा १, सुप्रदत्ता २। सुप्रबुद्धा ३ यशोधरा ४ ॥ लक्ष्मीवती ५ शेषवती ६। चित्रगुप्ता ७ वसुंधरा ८ ॥ ९ ॥ एता दक्षिणरुचकादेत्य स्नानार्थं करे पूर्णकलशान् धृत्वा गीतगानं विदधति ॥

इलादेवी १ सुरादेवी २। पृथिवी ३ पद्मवत्यपि ४ ॥ एकनासा ५ नवमिका ६। भद्रा ७ शीतेति ८ नामतः ॥ १० ॥ एताः पश्चिमरुचकादेत्य वातार्थं व्यजनपाणयोऽग्रे तिष्ठंति ॥ अलंबुसा १ मितकेशी २। पुंडरीका च ३ वारुणी ४ ॥ हासा ५ सर्वप्रभा ६ श्री ७ ह्रीं ८। रष्टोदगुरुचकाद्रितः ॥ ११ ॥ एता उत्तररुचकादेत्य चामराणि वीजयंति ॥ चित्रा च १ चित्रकनका २। शतोरा ३ वसुदामिनी ४ ॥ दीपहस्ता विदिक्ष्वेत्या—स्थुर्विदिगुरुचकाद्रितः ॥ १२ ॥ रुचकद्वीपतोऽभ्येयु—श्चतस्रो दिक्कुमारिकाः ॥ रूपा १ रूपास्तिका २ चापि। सुरूपा ३ रूपकावती ॥ १३ ॥ चतुरंगुलतो नालं। छित्वा खातोदरेऽक्षिपन् ॥ समापूर्य च वैडूर्यै—स्तस्योर्ध्वं पीठमादधुः ॥ १४ ॥ बध्ध्वा तदूर्वया

जन्म—गेहाद्गजाग्रहेऽथ ॥ ताः पूर्वस्या दक्षिणस्या—मुत्तरस्या व्यधुस्तत ॥ १५ ॥ याम्यरंभागृहे नीत्वा । ऽभ्यग तेनुस्तु तास्तयो ॥ स्नानचर्चाशुकालंका—रादि पूर्वगृहे तत. ॥ १६ ॥ उत्तरेऽरणि-काष्ठाभ्या-मुत्पाद्याग्निं सुचदनैः ॥ होमं कृत्वा बबंधुस्ता । रक्षापोट्टलिका द्वयोः ॥ १७ ॥ पर्वतायु-र्भवेत्युक्त्वा—स्फालयत्योऽश्मगोलको ॥ जन्मस्थाने च तौ नीत्वा । स्वस्वदिक्षु स्थिता जगु ॥ १८ ॥ एताश्च—सामानिकानां प्रत्येक । चत्वारिंशच्छतैर्युताः ॥ महत्तराभि प्रत्येक । तथा चतसृभिर्युताः ॥ १९ ॥ अगरक्षैः षोडशभि. । सहस्रैः सप्तभिस्तथा ॥ कटकैस्तदधीशैश्च । सुरैश्चान्यैर्महर्द्धिभि. ॥ २० ॥ आभियोगिकदेवकृतैर्योजनप्रमाणैर्विमानै. अत्रायातीति दिक्कुमारिकामहोत्सवः ॥

तत. सिंहासन शाक्र । चचालाचलनिश्चल ॥ प्रयुज्यायावधिं ज्ञात्वा । जन्मांतिमजिनेशितुः ॥ १ ॥ एकयोजनां घटां । सुघोषां नैगमेषिणा ॥ अवादयत्ततो घटा । रेणुः सर्वविमानगाः ॥ ॥ २ ॥ शक्रादेशं तत. सोच्चैः । सुरेभ्योऽज्ञापयत्स्वय ॥ तेन प्रमुदिता देवा—श्चलनोपक्रमं व्यधुः ॥३॥ पालकाख्यामरकृतं । लक्षयोजनसमित ॥ विमानं पालकं नामा—ऽध्यारोहत् त्रिदशेश्वरः ॥ ४ ॥ पा-

लकविमाने च इंद्रसिंहासनस्य अग्रे अग्रमहिषीणां अष्टौ भद्रासनानि, वामतश्चतुरशीतिसहस्रसामानिकसुराणां तावंति भद्रासनानि, दक्षिणतो द्वादशसहस्राभ्यंतरपार्षदानां तावंति भद्रासनानि, चतुर्दशसहस्रमध्यमपार्षदानां तावंत्येव भद्रासनानि. एवं षोडश सहस्र बाह्यपार्षदानामपि षोडशसहस्रभद्रासनानि, पृष्ठतः सप्तानीकाधिपतीनां सप्त भद्रासनानि, चतसृषु दिक्षु प्रत्येकं चतुरशीतिसहस्रात्मरक्षकदेवानां चतुरशीतिसहस्रभद्रासनानि, तथा—अन्यैरपि घनैर्देवै—र्वृतः सिंहासनस्थितः ॥ गीयमानगुणोऽचाली—दपरेऽपि सुरास्ततः ॥ ५ ॥ देवेंद्रशासनात् केचित् । केचिन्मित्रानुवर्त्तनात् ॥ पत्नीभिः प्रेरिताः केचित् । केचिदात्मीयभावतः ॥ ६ ॥ केऽपि कौतुकतः केऽपि । विस्मयात् केऽपि भक्तितः ॥ चेलुरेवं सुराः सर्वे । विविधैर्वाहनैर्युताः ॥ ७ ॥ विविधैस्तूर्यनिर्घोषै—र्घंटानां क्वणितैरपि ॥ कोलाहलेन देवानां । शब्दाद्वैतं तदाऽजनि ॥ ८ ॥ सिंहस्थो वक्ति हस्तिस्थं । दूरे स्वीयं गजं कुरु ॥ हनिष्यत्यन्यथा नूनं । दुर्द्धरो मम केसरी ॥ ९ ॥ वाजिस्थं कासरारूढो । गरुडस्थो हि सर्पगं ॥ छागस्थं चित्रकस्थोऽथ । वदत्येवं तदादरात् ॥ १० ॥ सुराणां कोटिकोटी-

भि–र्विमानैर्वाहनैर्घनैः ॥ विस्तीर्णोऽपि नभोमार्गो–ऽतिसंकीर्णोऽभवत्तदा ॥ ११ ॥ मित्रं केऽपि परि-
त्यज्य । दक्षत्वेनाग्रतो ययुः ॥ प्रतीक्षस्व क्षणं भ्रात–र्मामन्नेत्यपरोऽवदत् ॥ १२ ॥ केचिद्वदंति भो
देवाः । संकीर्णा पर्ववासराः ॥ भवंत्येवंविधा नून । तस्मान्मौनं विधत्त भोः ॥ १३ ॥ नभस्यागच्छतां
तेषां । शीर्षे चंद्रकरैः स्थितैः ॥ स्वेदबिंदुसमा देहे । सुराणां तारका बभुः ॥ १५ ॥ नंदीश्वरे वि-
मानानि । संक्षिप्यागात् सुराधिपः ॥ जिनेंद्रं च जिनांबां च । त्रिःप्रादक्षिणयत्ततः ॥ १६ ॥ वंदित्वा
च नमस्थित्वे–त्येवं देवेश्वरोऽवदत् ॥ नमोऽस्तु ते रत्नकुक्षि–धारके विश्वदीपिके ॥ १७ ॥ अहं श-
क्रोऽस्मि देवेंद्रः । कल्याणाद्यादिहागमं ॥ प्रभोरंतिमदेवस्य । करिष्ये जननोत्सवं ॥ १८ ॥

॥ भेतव्य देवि तन्नैवे–त्युक्त्वाऽवस्वापिनीं ददौ ॥ कृत्वा जिनप्रतिबिंबं । जिनांबासन्निधौ न्य-
धात् ॥ १९ ॥ भगवंतं तीर्थंकर । गृहीत्वा करसंपुटे ॥ विचक्रे पंचधारूपं । सर्वश्रेयोऽर्थिकः स्वय
॥ २० ॥ एको गृहीततीर्थेश । पार्श्वे द्वौ चात्तचामरौ ॥ एको गृहीतातपत्र–एको वज्रधरः पुनः
॥ २१ ॥ अग्रगः पृष्ठगं स्तौति । पृष्ठस्थोऽप्यग्रगं पुन. ॥ नेत्रे पश्चात् समीहंते । केचनाग्रेतनाः सुराः

॥ २२ ॥ शक्रः सुमेरुशृंगस्थं । गत्वाथो पांडुकं वनं ॥ मेरुचूलादक्षिणेना-तिपांडुकंबलासने ॥२३॥ कृत्वोत्संगे जिनं पूर्वा-भिमुखोऽसौ निषीदति ॥ समस्ता अपि देवेंद्राः । स्वामिपादांतमैयरुः ॥२४॥ दश वैमानिकाः, विंशतिर्भवनपतयः, द्वात्रिंशद्व्यंतराः, द्वौ ज्योतिष्कौ इति चतुःषष्टिरिंद्राणां ॥ सौवर्णा राजता रत्नाः । स्वर्णरूप्यमया अपि ॥ स्वर्णरत्नमयाश्चापि । रूप्यरत्नमया अपि ॥ २५ ॥ स्वर्णरूप्यरत्नमया । अपि मृत्स्नामया अपि ॥ कुंभाः प्रत्येकमष्टाढ्य । सहस्रं योजनाननाः ॥ २६ ॥ यतः—पणवीसजोअणतुंगो । बारसजोअणाइं वित्थारो ॥ जोअणमेगं नालुअ । इगकोडिअसट्ठिल-क्खाइं ॥ २७ ॥ एवं भृंगारदर्पणरत्नकरंडकसुप्रतिष्ठकस्थालपात्रिका पुष्पचंगेरिकादिपूजोपकरणानि कुंभवदष्टप्रकाराणि प्रत्येकमष्टोत्तरसहस्रमानानि, तथा मागधादितीर्थानां मृदं, जलं च गंगादीनां, पद्मानि च जलं च पद्महृदादीनां, क्षुल्लहिमवद्वर्षधरवैताढ्यविजयवक्षस्कारादिपर्वतेभ्यः सिद्धार्थपु-ष्पगंधान् सर्वौषधीश्च आभियोगिकसुरैरच्युतेंद्र आनाययत्, क्षीरनीरघटैर्वक्रः—स्थलस्थैस्त्रिदशा बभुः ॥ संसारौघं तरीतुं द्राग् । धृतकुंभा इव स्फुटं ॥ २८ ॥ सिंचंत इव चारित्रं । क्षिपंतो वा निजं मलं


॥ १६६ ॥

॥ कलशं स्थापयंतो वा । धर्मचैत्ये सुरा बभुः ॥ २९ ॥ संशय त्रिदशेशस्य । मत्वा वीरोऽमराचलं ॥ वामांगुष्ठांगसंपर्कात् । समंतादप्यचीचलत् ॥ ३० ॥ कंपमाने गिरौ तत्र । चकपेऽथ वसुंधरा ॥ शृंगाणि सर्वतः पेतु–श्चुक्षुभुः सागरा अपि ॥ ३१ ॥ ब्रह्मांडस्फोटसदृशे । शब्दाद्वैते प्रसर्पति ॥ रुष्टः शक्रोऽवधेर्ज्ञात्वा । क्षमयामास तीर्थपं ॥ ३२ ॥ संख्यातीतार्हतां मध्ये । स्पृष्टः केनापि नांह्रिणा ॥ मेरुः कंपमिषादित्था–नंदादिव ननर्त स. ॥ ३३ ॥ शैलेषु राजता मेऽभूत् । स्नात्रनीराभिषेकतः ॥ तेनामी निर्जराहाराः । स्वर्णपीठो जिनस्तथा ॥ ३४ ॥ तत्र पूर्वमच्युतेंद्रो । विदधात्यभिषेचनं ॥ ततोऽनु परिपाटीतो । यावच्चंद्रार्यमादयः ॥ ३५ ॥ जलस्नात्रे कविघटना—

श्वेतछत्रायमाणं शिरसि मुखशशिन्यश्रुपूरायमाणं । कंठे हारायमाणं वपुषि च निखिले चीन-चोलायमानं ॥ श्रीमज्जन्माभिषेकप्रगुणहरिगणोदस्तकुंभौघगर्जाद् । भ्रश्यद्दुग्धाब्धिपाथश्चरमजिन-पतेरंगसंगि श्रिये वः ॥ ३६ ॥ चतुर्वृषभरूपाणि । शक्रः कृत्वा ततः स्वयं ॥ शृंगाष्टकक्षरत्क्षीरै—रकरोदभिषेचनं ॥ ३७ ॥ सत्यं ते विबुधा देवाः । यैरतिमजिनेशितुः ॥ सृजद्भिः सलिलैः स्नानं ।

स्वयं नैर्मल्यमाददे ॥ ३७ ॥ समंगलप्रदीपं ते । विधायारात्रिकं पुनः ॥ सनृत्यगीतवाद्यादि । व्यधुर्विविधमुत्सवं ॥ ३९ ॥ उन्मृज्य गंधकाषाय्या–दिव्ययांगं हरिर्विभोः ॥ विलिप्य चंदनाद्यैश्च । पुष्पाद्यैस्तमपूजयत् ॥ ४० ॥ दर्पणो १ वर्धमानश्च २ । कलशो ३ मीनयोर्युगं ४ ॥ श्रीवत्स ५ स्वस्तिके ६ नंद्या–वर्त्त ७ भद्रासने ८ इति ॥ ४१ ॥ शक्रः स्वामिपुरो रत्न–पट्टके रूप्यतंदुलैः ॥ आलिख्य मंगलान्यष्टा–विति स्तोतुं प्रचक्रमे ॥ ४२ ॥ शक्रोऽथ जिनमानीय । विमुच्यांबांतिके ततः ॥ संजहार प्रतिबिंबा–ऽवस्वापिन्यौ स्वशक्तितः ॥ ४३ ॥ कुंडलक्षौमयुग्मं चो–च्छीर्षे मुक्त्वा हरिर्व्यधात् ॥ श्रीदामरत्नदामाद्य–मुल्लोचे स्वर्णकंदुकं ॥ ४४ ॥ द्वात्रिंशद्रत्नरैरूप्य–कोटिवृष्टिं विरच्य सः ॥ वाढमाघोषयामासे–ति सुरैराभियोगिकैः ॥ ४५ ॥ स्वामिनः स्वामिमातुश्च । करिष्यत्यशुभं मनः ॥ सप्तधार्यमंजरीव । शिरस्तस्य स्फुटिष्यति ॥ ४६ ॥ स्वाम्यंगुष्ठेऽमृतं न्यस्ये–त्यर्हज्जन्मोत्सवं सुराः ॥ नंदीश्वरेऽष्टाह्निकां च । कृत्वा जग्मुर्यथाक्रमं ॥ ४७ ॥ इति देवकृतः श्रीमहावीरजन्मोत्सवः ॥

अस्मिन्नवसरे राज्ञे । दासी नाम्ना प्रियंवदा ॥ तं पुत्रजननोदंतं । गत्वा शीघ्रं न्यवेदयत् ॥१॥

सिद्धार्थोऽपि तदाकर्ण्य । प्रमोदभरमेदुरः ॥ हर्षगद्गदगीरोमा–द्गमदंतुरभूघनः ॥ २ ॥ विना किरीटं तस्यै स्वां–सर्वांगालंकृतिं ददौ ॥ तां धौतमस्तकां चक्रे । दासत्वापगमाय सः ॥ ३ ॥

यस्यां च रजन्यां श्रमणो भगवान् महावीरः जातः, तस्यां रजन्यां बहवः वैश्रमणस्य आज्ञाधारिणः, एवं विधाः तिर्यग्जृंभका देवाः सिद्धार्थराजमंदिरे रूप्यवृष्टिं च, सुवर्णवृष्टिं च, वज्राणि हीरकाः, तेषां वृष्टिं च, वस्त्राणां वृष्टिं च, आभरणवृष्टिं च, पत्राणि नागवल्लीप्रमुखाणां, तेषां वृष्टिं च, पुष्पाणां वृष्टिं च, फलानि नालिकेरादीनि, तेषां वृष्टिं च, बीजानि शाल्यादीनि, तेषां वृष्टिं च, माल्यानां वृष्टिं च, गंधाः कोष्टपुटादयस्तेषां वृष्टिं च, चूर्णानि वासयोगास्तेषां वृष्टिं च, वर्णाः हिंगुलादयस्तेषां वृष्टिं च, वसुधारा निरंतरा द्रव्यश्रेणिस्तस्या वृष्टिं च अवर्षयन् ॥ ९८ ॥

ततोऽनंतरं स सिद्धार्थः क्षत्रियः भवनपतयः, व्यंतराः, ज्योतिष्काः, वैमानिकाः, ततः समास्तैः एवंविधैः देवैः तीर्थंकरस्य यो जन्माभिषेकस्तस्य महिम्नि उत्सवे कृते सति प्रभातकालसमये नगरगोप्तृकान् आरक्षकान् शब्दयति आकारयतीत्यर्थः. शब्दयित्वा च एवं अवादीत्. ॥ ९९ ॥

क्षिप्रमेव भो देवानुप्रियाः! क्षत्रियकुंडग्रामे नगरे चारकशब्देन कारागारं उच्यते, तस्य शोधनं शुद्धिं कुरुत, वंदिमोचनं कुरुत इत्यर्थः ॥ यत उक्तं—युवराजाभिषेके च । परराष्ट्रापमर्दने ॥ पुत्रजन्मनि वा मोक्षो । बद्धानां प्रविधीयते ॥ १ ॥ किंच–तत्र मानं रसधान्यविषयं, उन्मानं तुलारूपं तयोर्वर्द्धनं कुरुत? कृत्वा च अभ्यंतरे बहिश्च यथोक्तविशेषणविशिष्टं कुंडपुरनगरं कुरुत? कारयत, अथ किंविशिष्टं? आसिक्तं सुगंधजलछटादानेन, संमार्जितं कचवरापनयनेन, उपलिप्तं छगणादिना, ततः कर्मधारयः, पुनः किं वि० शृंगाटकं त्रिकोणं स्थानं, त्रिकं मार्गत्रयसंगमः; चतुष्कं मार्गचतुष्टयसंगमः, चत्वरं अनेकमार्गसंगमः, चतुर्मुखं देवकुलादि, महापंथा राजमार्गाः, पंथानः सामान्यमार्गाः, एतेषु स्थानेषु सिक्तानि जलेन, अत एव शुचीनि पवित्राणि, संमृष्टानि कचवरापनयनेन समीकृतानि, रथ्यांतराणि मार्गमध्यानि, तथा आपणवीथयश्च हट्टमार्गा यस्मिन्, तत्तथा, पुनः किंवि० मंचा महोत्सवविलोककजनानां उपवेशननिमित्तं मालकाः, अतिमंचकास्तेषां अपि उपरिकृता मालकास्तैः कलितं, पुनः किंवि० नानाविधै रागैर्विभूषिता ये ध्वजाः सिंहादिरू-

पोपलक्षिता बृहत्पट्टाः, पताकाश्च तच्छयस्ताभिर्मण्डितं, पुन. किंवि० छगणादिना भूमौ लेपनं सेढि कादिना भित्त्यादौ धवलीकरणं, ताभ्यां महितं इव पूजितं इव, पुनः किंवि० गोशीर्ष चदनविशेषः, तथा सरसं यत् रक्तचदन, तथा दर्दरनामपर्वतजातचदनं, तैर्दत्ताः पंचांगुलितला हस्तकाः कुड्यादिषु यत्र तत्तथा, पुनः किंवि० गृहांतश्चतुष्केषु स्थापिताः चंदनकलशा यत्र तत्तथा, चदनघटै. सुकृतानि रमणीयानि तोरणानि च प्रतिद्वारदेशभागं, द्वारस्य द्वारस्य देशभागे यस्मिन् तत्तथा, पुनः किंवि० आसक्तो भूमिलग्न उत्सक्तश्च उपरिलग्नो विपुलो विस्तीर्णो वर्तुलः प्रलंबितो माल्यदामकलापः पुष्पमालासमूहो यस्मिन् तत्तथा, पुनः किंवि० पचवर्णा. सरसाः सुरभयो ये मुक्ता. पुष्पपुंजास्तैर्य उपचारो भूमेः पूजा, तया कलितं, पुन. किंवि० दह्यमाना ये कृष्णागुरुप्रवरकुन्दुरुक्कतुरुक्कधूपा., तेषां मघमघायमानो यो गंधः, तेन 'उद्धुयाभिरामति' अत्यंतमनोहरं, पुन' किंवि० सुगंधवराश्चूर्णानि तेषां गधो यत्र तत्तथा तं, पुनः किंवि० गधवृत्तिभूतं, गधद्रव्यगुटिकासमानं, पुनः किंवि० नटा नाटयितारः, नर्त्तका. स्वय नृत्यकर्त्तार., जल्ला वरत्राखेलकाः, मल्लाः प्रतीताः, मौष्टिका

ये मुष्टिभिः प्रहरंति ते मल्लजातीयाः, विडंबका विदूषका जनानां हास्यकारिणः, ये स्वमुखविकारमुत्प्लुतयंति ते वा, प्लवका ये उत्प्लवंते गर्त्तादिकमुल्लंघयंति, नद्यादिकं वा तरंति, सरसकथावक्तारः, सूक्तादीनां पाठकाः, लासका ये रासकान् ददति, आरक्षकास्तलवराः, लंखा वंशाग्रखेलकाः; मंखाश्चित्रफलकहस्ता भिक्षुकाः, गौरीपुत्रा इति प्रसिद्धाः, तुणाभिधानवादित्रवादका भिक्षुविशेषाः, तुंबवीणिका वीणावादकाः, तथा अनेके ये तालाचरास्तालादानेन प्रेक्षाकारिणस्तालान् कुट्टयंतो वा ये कथां कथयंति, तैः अनुचरितं संयुक्तं, एवंविधं क्षत्रियकुंडग्रामं नगरं कुरुत स्वयं, कारयत अन्यैः, कृत्वा कारयित्वा च यूपा युगानि तेषां सहस्रं, तथा मुशलानि प्रतीतानि तेषां सहस्रं ऊर्ध्वीकुरुत? युगमुशलोर्ध्वीकरणेन च तत्रोत्सवे प्रवर्त्तमाने शकटखेटनखंडनादिनिषेधः प्रतीयते इति वृद्धाः. तथा कृत्वा च मम एतां आज्ञां प्रत्यर्पयत? कार्यं कृत्वा कृतं इति मम कथयतेत्यर्थः ॥ १०० ॥

ततस्ते कौटुंबिकपुरुषाः सिद्धार्थेन राज्ञा एवं उक्ताः संतः हृष्टास्तुष्टा यावत् हर्षपूर्णहृदयाः

करतलाभ्यां यावत् अजलिं कृत्वा, प्रतिश्रुत्य अंगीकृत्य शीघ्रमेव क्षत्रियकुण्डग्रामे नगरे बंदिग्रहशो धनं बंदिमोचनं यावत् मुशलसहस्र चोर्ध्वीकृत्य यत्रैव सिद्धार्थः क्षत्रियः, तत्रैव उपागच्छति उपागत्य च सिद्धार्थस्य क्षत्रियस्य तां आज्ञां प्रत्यर्पयति, कृत्वा निवेदयंति ॥ १०१ ॥

ततोऽनंतरं सिद्धार्थो राजा यत्रैव अट्टनशाला, परिश्रमणस्थानं तत्रैव उपागच्छति, उपागत्य अत्र यावत् शब्दात् 'सव्वड्ढीए, सव्वजुइए, सव्वबलेणं, सव्ववाहणेणं, सव्वसमुदएणं' इत्येतानि वाच्यानि, तेषां चायमर्थः—'सव्वड्ढीएत्ति' सर्वया ऋद्ध्या युक्त इति गम्य, एवं सर्वेष्वपि विशेषणेषु वाच्य, सर्वया युक्त्या उचितवस्तुसंयोगेन, सर्वेण बलेन सैन्येन, सर्वेण वाहनेन शिबिकातुरगादिना, सर्वेण समुदयेन परिवारादिसमूहेन, एवं यावत्शब्दसूचितं अभिधाय, ततः 'सव्वोरोहेणं' इत्यादि वाच्य। तत्र 'सव्वोरोहेणत्ति' सर्वावरोधेन सर्वेण अंतःपुरेणेत्यर्थः ॥ सर्वया पुष्पगंधवस्त्रमालालंकाराणां विभूषया युक्तः, सर्ववादित्राणि तेषां शब्दो निनादः प्रतिरवश्च, तेन युक्तः, महत्या ऋद्ध्या छत्रादिरूपया युक्तः, महत्या युक्त्या, उचिताडंबरेण युक्तः, महता बलेन चतुरंगसैन्येन

युक्तः, महता वाहनेन, शिबिकादिना युक्तः, महता समुदयेन, स्वकीयपरिवारादिसमूहेन युक्तः, महत् विस्तीर्णं यत् वराणां प्रधानानां त्रुटितानां वादित्राणां जमगसमग युगपत् प्रवादितः शब्दस्तेन, तथा शंखः प्रतीतः, पणवो मृत्पटहः, भेरी ढक्का, झल्लरी प्रतीता, खरमुखीहुडुक्कमुरजमृदंगादिवादित्रभेदाः, दुंदुभिः देववाद्यं, एतेषां यो निर्घोषो महाशब्दो, नादितं च प्रतिशब्दस्तद्रूपो यो रवस्तेन, एवं रूपया सकलसामग्र्या युक्तः सिद्धार्थो राजा दशदिवसान् यावत् स्थितिपतितां कुलमर्यादां महोत्सवरूपां करोतीति योजना ॥ अथ किं विशिष्टां स्थितिपतितामित्याह—

उत्शुल्कां, शुल्कं विक्रेतव्यक्रयाणकंप्रति मंरूपिकायां राजदेयं ग्राह्यं 'दाण' इति लोके, तेन रहितां, पुनः किंवि० उत्करां करो गवादीन्प्रति प्रतिवर्षं राजग्राह्यं द्रव्यं, तेन रहितां, अत एव उत्कृष्टां सर्वेषां हर्षहेतुत्वात्, पुनः किंवि० अदेयां, यत् यस्य युज्यते तत्सर्वं तेन हट्टतः ग्राह्यं, न तु मूल्यं देयं, मूल्यं तु तस्य राजा ददातीति भावः, अत एव अमेयां अमितानेकवस्तुयोगात्, अथवा अदेयां विक्रयनिषेधात्, अमेयां क्रयविक्रयनिषेधात्, पुनः किंवि० नास्ति कस्यापि गृहे राजा-

देशदापनार्थं जटानां राजपुरुषाणां प्रवेशो यत्र, सा तथा तां, पुनः किंवि० दंमो यथाऽपराद्धराज-ग्राह्य धनं, कुदमो महत्यपराधे अल्पं राजग्राह्यं धनं, ताभ्यां रहितां, पुनः किंवि० धरिमं ऋणं तेन रहितां, ऋणस्य राज्ञा दत्तत्वात्, पुन० किंवि० गणिकावरै० नाटकीयैः नाटकप्रतिबद्धैः पात्रै० कलितां, पुनः किंवि० अनेकैस्तालाचरैः प्रेक्षाकारिभिः अनुचरितां सेवितां, पुनः किंवि० अनुध्धूता वादकै० अपरित्यक्ता मृदंगा यस्यां सा तथा तां, पुन० किंवि० प्रमुदिताः प्रमोदवंत०, अत एव प्र-क्रीडितुं आरब्धा० पुरजनसहिता जानपदा देशलोका यत्र सा तथा तां, दशदिवसान् यावत्, एवंविधा स्थितिपतितां उत्सवरूपां कुलमर्यादां करोति ॥ १०२ ॥

ततः स सिद्धार्थो राजा दशाहिकायां दशदिवसप्रमाणायां स्थितिपतितायां वर्तमानायां शत-परिमाणान्, सहस्रपरिमाणान्, लक्षप्रमाणान्, यागान् अर्हत्प्रतिमापूजाः, जगवन्मातापित्रो० श्री-पार्श्वनाथसतानीयश्रावकत्वात्, यज् धातोश्च देवपूजार्थत्वात् यागशब्देन प्रतिमापूजा एव ग्राह्या, अन्यस्य यज्ञस्य असंभवात्, श्रीपार्श्वनाथसतानीयश्रावकत्वं चानयोश्चाचारांगे प्रतिपादितं. दायान्

पूर्वदिवसादौ दानानि, लब्धद्रव्यविभागान् मानितद्रव्यांशान्, ददत् स्वयं, दापयन् सेवकैः, शत-प्रमाणान् सहस्रप्रमाणान् लक्षप्रमाणान्, एवंविधान् लाभान् 'वधामणा' इति लोके, प्रतीच्छन् स्वयं गृह्णन्, प्रतिग्राहयन् सेवकादिभिः, अनेन प्रकारेण च विहरति आस्ते ॥ १०२ ॥

ततः श्रमणस्य भगवतो महावीरस्य मातापितरौ प्रथमे दिवसे स्थितिपतितां कुरुतः, तृतीये दिवसे चंद्रसूर्यदर्शनिकां उत्सवविशेषं कुरुतः, तद्विधिश्चायं—जन्मदिनाद्दिनद्वयातिक्रमे गृहस्थगुरुरर्हत्प्रतिमाग्रे रूप्यमयीं चंद्रमूर्त्तिं प्रतिष्ठाप्य अर्चित्वा विधिना स्थापयेत्, ततः स्नातां सुवस्त्राभरणां सपुत्रां मातरं चंद्रोदये प्रत्यक्षं चंद्रसन्मुखं नीत्वा 'ॐ अर्हं चंद्रोऽसि, निशाकरोऽसि, नक्षत्रपतिरसि, सुधाकरोऽसि, औषधीगर्भोऽसि, अस्य कुलस्य वृद्धिं कुरु कुरु स्वाहा' इत्यादि चंद्रमंत्रमुच्चारयंश्चंद्रं दर्शयेत्, सपुत्रमाता च गुरुं प्रणमति. गुरुश्चाशीर्वादं दत्ते, सचायं—सर्वौषधीमिश्रमरीचिराजिः । सर्वापदां संहरणप्रवीणः ॥ करोतु वृद्धिं सकलेऽपि वंशे । युष्माकमिंदुः सततं प्रसन्नः ॥ १ ॥ एवं सूर्यस्यापि दर्शनं, नवरं मूर्त्तिः स्वर्णमयी ताम्रमयी वा, मंत्रश्च—'ॐ अर्हं सूर्योऽसि, दिनकरोऽसि,

तमोपहोऽसि, सहस्रकिरणोऽसि, जगच्चक्षुरसि प्रसीद' ॥ आशीर्वादश्चाय–सर्वसुरासुरवंद्यः । कारयिता पूर्वसर्वकार्याणां ॥ भुयात् त्रिजगच्चक्षु–र्मंगलदस्ते सपुत्राया ॥२॥ इति चंद्रसूर्यदर्शनविधि., सांप्रतं च तत्स्थाने शिशोर्दर्पणो दर्श्यते. ॥

ततः षष्ठे दिवसे 'धम्मजागरियति'. धर्मेण कुलधर्मेण षष्ठ्यां रात्रौ जागरणं धर्मजागरिकां जाग्रत', षष्ठे दिने जागरणमहोत्सवं कुरुत इति भावः, एवं च एकादशे दिवसे व्यतिक्रांते सति अशुचीनां जन्मकर्मणा नालछेदादीना करणे निर्वर्तिते समापिते सति, द्वादशे च दिवसे संप्राते सति भगवन्मातापितरौ विपुलं बहु अशनं, पानं, खादिमं, स्वादिमं च उपस्कारयतः प्रगुणीकारयतः. उपस्कारयित्वा च मित्राणि सुहृदादय., ज्ञातयः सजातीया., निजकाः स्वकीयाः पुत्रादयः, स्वजनाः पितृव्यादयः, सबंधिनः पुत्रपुत्रीणां श्वसुरादयः, परिजनो दासीदासादिः, ज्ञातक्षत्रियाः श्रीऋषभदेवसजातीयास्तान् आमंत्रयति, आमंत्र्य च ततः पश्चात् स्नातौ, कृता पूजा याभ्यां तथा तौ, कृतानि कौतुकमंगलानि, तान्यव प्रायश्चित्तानि याभ्यां तथा तौ, शुद्धानि श्वेतानि, सभाप्र-

वेशयोग्यानि, मांगल्यानि उत्सवसूचकानि, प्रवराणि श्रेष्टानि वस्त्राणि परिहितौ, अल्पानि स्तोकानि बहुमूल्यानि यानि आभरणानि, तैः अलंकृतं शोभितं शरीरं याभ्यां तथा तौ, एवंविधौ भगवन्मातापितरौ भोजनवेलायां भोजनमंडपे सुखासनवराणि गतौ सुखासिनौ इत्यर्थः, तेन मित्रज्ञातिनिजकस्वजनसंबंधिपरिजनेन, ज्ञातजातीयैः क्षत्रियैः सार्द्धं तं विपुलं अशनं, पानं, खादिमं, स्वादिमं आ इषत् स्वादयंतौ बहु त्यजंतौ ईक्ष्वादेरिव, विशेषेण स्वादयंतौ अल्पं त्यजंतौ, खर्जुरादेरिव, सर्वमपि भुंजानौ, अल्पं अपि अत्यजंतौ भोज्यादेरिव, परिभाजयंतौ परस्परं यच्छंतौ, अनेन प्रकारेण भुंजानौ तिष्टत इति भावः ॥ १०४ ॥

ततः जिमितौ भुक्त्युत्तरं भोजनानंतरं आगतौ, उपवेशनस्थाने समागतौ, अपि च निश्चयेन एवंविधौ संतौ आचांतौ शुद्धोदकेन कृताचमनौ सित्काद्यपनयनेन चोक्षौ, अत एव परमपवित्रीभूतौ संतौ तं मित्रज्ञातिनिजकस्वजनसंबंधिपरिजनं ज्ञातजातीयांश्च क्षत्रियान् विपुलेन पुष्पवस्त्रगंधमालालंकारादिना सत्कारयतः सन्मानयतः, सत्कार्य सन्मान्य च तस्यैव मित्रज्ञातिनिजकस्वज-

नसवधिपरिजनस्य ज्ञातजातीयानां च पुरत एवं अवादीष्टां ॥ १०५ ॥

पूर्वमपि भो देवानुप्रिया ! भो स्वजनाः ! अस्माकं एतस्मिन् दारके गर्भे उत्पन्ने सति अयं ए-तद्रूप आत्मविषयो यावत् सकल्प समुत्पन्नोऽभूत्, कोऽसौ इत्याह–यतः प्रभृति अस्माक एषो दा-रक· कुक्षौ गर्भतया उत्पन्नः, तत् प्रभृति वय हिरण्येन रूप्येण वर्धामहे, सुवर्णेन वर्धामहे, धनेन, धान्येन, राज्येन, यावत् स्वापतेयेन द्रव्येण प्रीतिसत्कारेण अतीव अतीव अभिवर्धामहे, स्वदेश-समीपवर्त्तिन राजनः 'सीमान्ता राजा' इति च वश्यं आयत्तत्वं आगताः ॥ १०६ ॥

तस्मात् यदा अस्माकं एषो दारको जातो भविष्यति तदा वय एतस्य दारकस्य इमं एतदनु-रूपं गुणेभ्य आगतं गुणैर्निष्पन्न एवं विधं अभिधानं करिष्यामः 'वर्द्धमान' इति. 'ता' इति सा पूर्वोत्पन्ना अस्माकं अद्य मनोरथस्य संपत्ति· जाता, तस्मात् भवतु अस्माक कुमारः 'वर्द्धमानः' नाम्ना कृत्वा ॥ १०७ ॥

श्रमणो भगवान् महावीरः काश्यप इति नामकं गोत्रं यस्य स तथा, तस्य भगवतः त्रीणि

अभिधानानि एवं आख्यायंते, तद्यथा—मातापितृसत्कं मातापितृदत्तं 'वर्द्धमान' इति प्रथमं नाम ॥ १ ॥ सह समुदिता सहभाविनी तपःकरणादिशक्तिः, तया श्रमण इति द्वितीयं नाम ॥ २ ॥ भयभैरवयोर्विषये अचलो निष्प्रकंपः, तत्र भयं अकस्माद्भयं विद्युदादिजातं, भैरवं तु सिंहादिकं, तथा परीषहाः क्षुत्पिपासादयो द्वाविंशतिः, ( २२ ), उपसर्गाश्चत्वारः, सप्रभेदास्तु षोडश ( १६ ), तेषां क्षांत्या क्षमया क्षमते, न त्वसमर्थतया यः स क्षांतिक्षमः, प्रतिमानां भद्रादीनां एकरात्रिक्यादीनां वा अभिग्रहविशेषाणां पालकः, धीमान् ज्ञानत्रयाभिरामत्वात्, अरतिरती सहते, न तु तत्र हर्षविषादौ कुरुते इति भावः, द्रव्यं तत्तद्गुणानां भाजनं, रागद्वेषरहित इतिवृद्धाः. वीर्यं पराक्रमस्तेन संपन्नः, यतो भगवान् एवंविधस्ततो देवैः से इति तस्य भगवतो नाम कृतं श्रमणो भगवान् महावीर इति तृतीयं ॥ १०७ ॥

तदिदं नाम देवैः कृतं, कथं कृतं इत्यत्र वृद्धसंप्रदायः—अथैवं पूर्वोक्तयुक्त्या सुरासुरनरेश्वरैः कृतजन्मोत्सवो भगवान् द्वितीयाशशीव मंदारांकुर इव वृद्धिं प्राप्नुवन् क्रमेण एवंविधो जातः—

द्विजराजमुखो गजराजगतिः । अरुणोष्ठपुटः सितदंततति: ॥ शितिकेशभरोऽम्बुजमंजुकरः । सुरनि
श्वसित. प्रनयोल्लसित ॥ १ ॥ मतिमान् श्रुतवान् प्रथितावधियुक् । पृथुपूर्वभवस्मरणो गतरुक् ॥
मतिकातिधृतिप्रभृतिस्वगुणै-र्जगतोऽप्यधिको जगतीतिलक. ॥ २ ॥ स चैकदा कौतुकरहितोऽपि
तेषां उपरोधात् समानवयोभिः कुमारैः सह क्रीडां कुर्वाण आमलकीक्रीडानिमित्तं पुराद् बहिर्ज
गाम, तत्र च कुमारा वृक्षारोहणादिप्रकारेण क्रीडन्ति स्म, अत्रान्तरे सौधर्मेन्द्रः सभायां श्रीवीरस्य
धैर्यगुणं वर्णयन्नास्ते, यदुत पश्यत, भो देवा ! सांप्रत मनुष्यलोके श्रीवर्द्धमानकुमारो बालोऽप्यबाल
पराक्रमः शक्रादिभिर्देवैरपि भापयितुं अशक्यः, कष्ट रे बालस्यापि धैर्यं, तदाकर्ण्य च कश्चित्
मिथ्यादृग् देवश्चिंतयामास, अहो शक्रस्य प्रभुत्वाभिमाने निरङ्कुशा निर्विचारा पुम्बेकपातेन नगरा-
क्रमणमिवाऽश्रद्धेया च वचनचातुरी, यदिमं मनुष्यकीटपरमाणुं अपि इयत् प्रकर्षं प्रापयति, तद-
द्यैव तत्र गत्वा तं भीषयित्वा शक्रवचनं वृथा करोमि, इति विचिंत्य मर्त्यलोकमागत्य शिंशपामुश-
लस्थूलेन लोलजिह्वायुगलेन भयंकरफूत्कारेण क्रूरतराकारेण प्रसरत्कोपेन पृथुफटाटोपेन दीप्रमणिना

महाफणिना तं क्रीडातरुं आवेष्टितवान्, तद्दर्शनाच्च पलायितेषु सर्वेषु बालेषु मनागप्यभीतमनाः श्रीवर्द्धमानकुमारः स्वयं तत्र गत्वा तं फणिनं करेण गृहीत्वा दूरं निक्षिप्तवान्; ततः पुनः कुमारैः कंदुकक्रीडारसे प्रस्तुते सति स देवोऽपि कुमाररूपं विकुर्व्य तां क्रीडां कर्त्तुं प्रवृत्ते, तत्र चायं पणः, पराजितेन स्कंधे आरोपणीय इति, क्षणाच्च पराजितं मया जितं वर्धमानेनेति वदन् श्रीवीरं स्कंधे समारोप्य भगवद्भापनाय सप्ततालप्रमाणशरीरः संजातो, भगवानपि तत्स्वरूपं विज्ञाय वज्रकठिनया मुष्ट्या तत्पृष्टं जघान, सोऽपि तत्प्रहारवेदनापीडितो मशक इव संकोचं प्राप ॥ ततश्च शक्रवचनं सत्यं मन्यमानः प्रकटितस्वरूपः सर्वं पूर्वव्यतिकरं निवेद्य भूयो भूयो निजं अपराधं क्षमयित्वा स्वस्थानं जगाम स देवः, तदा च संतुष्टचित्तेन शक्रेण 'श्रीवीर' इति भगवतो नाम कृतं, यदुक्तं—बालत्तणे वि सूरो । पयइए गुरुपरक्कमो भयवं ॥ वीरुत्ति कयं नाम । सक्केणं तुट्ठचित्तेणं ॥१॥ इत्यामलकीक्रीडा ॥

अथ तं मातापितरौ । विज्ञौ ज्ञात्वाष्टवर्षमतिमोहात् ॥ वरममितालंकारै-रुपनयतो लेखशा-

लायां ॥ १ ॥ लग्नदिवसव्यवस्थिति–पुरस्सर परमहर्षसंपन्नौ ॥ श्रीढोत्सवान्महार्घान् । वितेनतुर्धन-
धनव्ययत ॥ २ ॥ तथाहि–गजतुरगसमूहैः स्फारकेयूरहारैः । कनकघटितमुद्राकुण्डलैः कङ्कणाद्यैः
॥ रुचिरतरदुकूलैः पंचवर्णैस्तदानीं । स्वजनमुखनरेन्द्रा सत्क्रियतेस्म भक्त्या ॥ ३ ॥ तथा–पण्डित-
योग्यं नाना–वस्त्रालंकारनालिकेरादि ॥ अथ लेखशालिकानां । दानार्थमनेकवस्तूनि ॥ ४ ॥ तथा-
हि–पूगीफलशृंगाटक–खर्जूरसितोपलास्तथा खण्डा ॥ चारुकुली चारुबीजा–द्राक्षादिसुखाशिका-
वृंदं ॥ ५ ॥ सौवर्णरजतराजत–मिश्राणि च पुस्तकोपकरणानि ॥ कमनीयमषीभाजन–लेखनिकापट्टि-
कादीनि ॥ ६ ॥ वाग्देवीप्रतिमार्चा–कृतये सौवर्णरूपणं भव्य ॥ नव्य बहुरत्नखचितं । छात्राणां
विविधवस्त्राणि ॥ ७ ॥ इत्यादिसमग्रपठनसामग्रीसहितः, कुलवृद्धाभिस्तीर्थोदकैः स्नपितः, परिहित-
प्रचुरालंकारभासुरः शिरोधृतमेघाडम्बरछत्रश्चतुश्चामरवीजितांगश्चतुरंगसैन्यपरिवृतो वाद्यमानाऽनेक-
वादित्रः पण्डितगेहं उपाजगाम. पण्डितोऽपि भूपालपुत्रपाठनोचितां पर्वपरिधेयक्षीरोदकधौतिकहेम-
मय यज्ञोपवीतकेसरतिलकादिसामग्रीं यावत् करोति, तावत् पिप्पलपर्णवत्, गजकर्णवत्, कपटिध्या-

नवत्. नृपतिमानवत् चलाचलसिंहासनः शक्रोऽवधिना ज्ञाततत्स्वरूपो देवान् इत्थं अवादीत्. अहो! महच्चित्रं! यज्जगद्गुरोरपि लेखशालायां मोचनं, यतः—साम्रे चंदनमालिका स मधुरीकारः सुधायाः न च । ब्राह्मयाः पाठविधिः स शुद्धिमगुणारोपः सुधादीधितौ ॥ कल्याणे कनकछटाप्रकटनं पावित्र्यसंपत्तये । शास्त्राध्यापनमर्हतोऽपि यदिदं यल्लेखशालाकृते ॥ १ ॥ मातुः पुरो मातुलवर्णनं तत् । लंकानगर्यां लहरीयकं तत् ॥ तस्यानृतं लावणमंबुराशेः । प्रभोः पुरो यद्वचसां विलासः ॥ २ ॥ यतः—अनध्ययनविद्वांसो । निर्द्रव्यपरमेश्वराः ॥ अनलंकारसुभगाः । पांतु युष्मान् जिनेश्वराः ॥ १ ॥ इत्यादि वदन् कृतब्राह्मणरूपस्त्वरितं यत्र भगवान् तिष्ठति तत्र पंडितगेहे समाजगाम, आगत्य पंडितयोग्ये आसने भगवंतं उपवेश्य पंडितमनोगतान् संदेहान् पप्रच्छ. श्रीवीरोऽपि बालोऽयं किं वक्ष्यतीत्युत्कर्णेषु सकललोकेषु सर्वाणि उत्तराणि ददौ. ततो जैनेंद्रं व्याकरणं जज्ञे; यतः—सक्को अ तस्स सक्खं । भगवंतं आसणे निवेसित्ता ॥ सद्दस्स लक्खणं पुच्छे । वागरणं अवयवाइंदं ॥ १ ॥ सर्वे जना विस्मयं प्रापुः, अहो बालेनापि वर्द्धमानकुमारेण एतावती विद्या कुतोऽधीता ?

पंडितोऽपि चिंतयामास–आबालकालादपि मामकीनान् । यान् संशयान् कोऽपि निरासयन्न ॥ विभेद तांस्तान्निखिलान् स एष । बालोऽपि भोः पश्यत चित्रमेतत् ॥ १ ॥ किंच–अहो ईदृशस्य विद्याविशारदस्यापि ईदृशं गांभीर्यं, अथवा युक्तमेवेदं ईदृशस्य महात्मनः ॥

यतः—गर्जंति शरदि न वर्षति । वर्षंति वर्षासु निःस्वनो मेघः ॥ नीचो वदति न कुरुते । न वदति साधुः करोत्येव ॥ १ ॥ तथा–असारस्य पदार्थस्य । प्रायेणाडंबरो महान् ॥ न हि स्वर्णे ध्वनिस्तादृग् । यादृक् कांस्ये प्रजायते ॥ २ ॥ इत्यादि चिंतयतं पंडितं शक्रः प्रोवाच–मनुष्यमात्रं शिशुरेष विप्र । न शंकनीयो भवता स्वचित्ते ॥ विश्वत्रयीनायक एष वीरो । जिनेश्वरो वाङ्मयपारदृश्वा ॥ ३ ॥ इत्यादि श्रीवर्धमानस्तुतिं निर्माय शक्र स्वस्थानं जगाम, भगवानपि सकलज्ञातक्षत्रियपरिकलितः स्वगृहमागात्, इतिश्रीलेखशालाकरणं ॥ एवं बाल्यावस्थानिवृत्तौ संप्राप्तयौवनो भोगसमर्थो भगवान् मातापितृभ्यां शुभे मुहूर्ते समरवीरनृपपुत्रीं यशोदां परिणायितः, तया च सह सुखमनुभवतो भगवतः पुत्री जाता, सापि प्रवरनरपतिसुतस्य स्वभागिनेयस्य जमालेः परिणा-

यिता, तस्या अपि च शेषवती नाम्नी पुत्री, सा च भगवतो 'नत्तु' इति दौहीत्रीत्यर्थः

श्रमणस्य भगवतो महावीरस्य पिता कीदृशः? काश्यपः गोत्रेण कृत्वा, तस्य त्रीणि नामधेयानि एवं आख्यायंते, तद्यथा—सिद्धार्थ इति वा, श्रेयांस इति वा, यशस्वी इति वा; श्रमणस्य भगवतो महावीरस्य माता वाशिष्ठा गोत्रेण, तस्यास्त्रीणि नामधेयानि एवं आख्यायंते, तद्यथा—त्रिशला इति वा, विदेहदिन्ना इति वा, प्रीतिकारिणी इति वा, श्रमणस्य भगवतो महावीरस्य पितृव्यः 'काको' इति सुपार्श्वः, ज्येष्ठो भ्राता नंदिवर्धनः, भगिनी सुदर्शना, भार्या यशोदा, सा कीदृशी? कौण्डिन्या गोत्रेण, श्रमणस्य भगवतो महावीरस्य पुत्री काश्यपा गोत्रेण, तस्याः द्वे नामधेये एवं आख्येते, तद्यथा—अणोज्जा इति वा प्रियदर्शना इति वा, श्रमणस्य भगवतो महावीरस्य पुत्र्याः पुत्री दौहित्री काश्यपगोत्रेण, तस्या द्वे नामधेये एवं आख्यायेते, तद्यथा—शेषवती इति वा, यशःवती इति वा. ॥ १०९ ॥

श्रमणो भगवान् महावीरो दक्षः सकलकलाकुशलः, दक्षा निपुणा प्रतिज्ञा यस्य सः, तथा स-

मीचीनां एव प्रतिज्ञां करोति, तां च सम्यग् निर्वहतीति भावः. प्रतिरूपः सुंदररूपवान्, आलीनः सर्वगुणैरालिंगितः, भद्रकः सरलः, विनीतो विनयवान्, ज्ञातः प्रख्यातः, ज्ञातः सिद्धार्थस्तस्य पुत्रः, न केवलं पुत्रमात्रः किंतु ज्ञातकुले चंद्र इव, वज्रऋषभनाराचसंहननसमचतुरस्रसंस्थानमनोहरत्वात् विशिष्टो देहो यस्य स विदेहः, विदेहदिन्ना त्रिशला, तस्या अपत्यं वैदेहदिन्नः, विदेहा त्रिशला तस्यां जातं अर्चा शरीरं यस्य स तथा, विदेहशब्देन अत्र गृहवास उच्यते, तत्र सुकुमालः, दीक्षायां तु परीषहादिसहने अतिकठोरत्वात्, त्रिंशद् वर्षाणि गृहवासे कृत्वा, 'त्रिंशद्वर्षाणि गृहस्थभावे स्थित्वेत्यर्थः, मातापित्रोर्देवत्वं गतयोः, गुरुमहत्तरैर्नंदिवर्धनादिभिरभ्यनुज्ञातः, समाप्तप्रतिज्ञश्च, मातापित्रोर्जीवतोर्नाहं प्रव्रजिष्यामीति गर्भगृहीतायाः प्रतिज्ञायाः पूरणात्, स व्यतिकरस्त्वेवं—

अष्टाविंशतिवर्षातिक्रमे भगवतो मातापितरौ, आवश्यकाभिप्रायेण तुर्यं स्वर्गं, आचारांगाभिप्रायेण तु अनशनेन अच्युतं गतौ, ततो भगवता ज्येष्ठभ्राता पृष्टः, राजन् ममाभिग्रहः संपूर्णोऽस्ति, ततोऽहं प्रव्रजिष्यामि, ततो नंदिवर्धनः प्रोवाच, भ्रातर् मम मातापितृविरहदुःखितस्य

अनया वार्तया किं कृते क्षारं क्षिपसि? ततो भगवता प्रोक्तं—पिअमाइभाइभइणी। भज्जापुत्तत्तणेण सव्वेवि ॥ जीवा जाया बहुसो। जीवस्स उ एगमेगस्स ॥ १ ॥ ततः कुत्र कुत्र प्रतिबंधः क्रियते? इति निशम्य नंदिवर्धनोऽवोचत्, भ्रातरहं अपि इदं जानामि, किंतु प्राणतोऽपि प्रियस्य तव विरहो मां अतितमां पीडयति, ततो मदुपरोधाद्वर्षद्वयं गृहे तिष्ठ? भगवानपि एवं भवतु, किंतु राजन्! मदर्थं न कोऽपि आरंभः कार्यः, प्रासुकाशनपानेनाहं स्थास्यामि इत्यवोचत्, राज्ञापि तथा प्रतिपन्ने समधिकं वर्षद्वयं वस्त्रालंकारविभूषितोऽपि प्रासुकैषणीयाहारः सच्चित्तजलं अपिबन् भगवान् गृहे स्थितः, ततः प्रभृति भगवता अचित्तजलेनापि सर्वस्नानं न कृतं, ब्रह्मचर्यं च यावज्जीवं पालितं, दीक्षोत्सवे तु सचित्तोदकेनापि स्नानं कृतं, तथा कल्पत्वात्, एवं भगवंतं वैरंगिकं विलोक्य चतुर्दशस्वप्नसूचितत्वाच्चक्रवर्त्तिधिया सेवमानाः श्रेणिकचंद्रप्रद्योतादयो राजकुमाराः स्वं स्वं स्थानं जग्मुः ॥

पुनरपि इति विशेषद्योतने एकं तावत् समाप्तप्रतिज्ञः स्वयमेव भगवान् वर्त्तते, पुनरपि लोकां-

तिकैर्देवैर्बोधित इति विशेषो द्योत्यते, लोकांते ससारांते भवा॰ लोकांतिका एकावतारत्वात्, अन्यथा ब्रह्मलोकवासिनां तेषां लोकांते भवत्वं विरुध्यते, ते च नवविधाः, यदुक्त—सारस्सय १ माइचा २ । वन्ही ३ वरुणा य ४ गद्दतोया य ५ ॥ तुसिआ ६ अव्वाबाहा ७ । अग्गिचा ८ चेव रिठाय ए ॥ १ ॥ एए देवनिकाया । भयवं बोहिंति जिणवरिंदं तु ॥ सवजगजीवहियं । भयवं तित्थं पवत्तेहि ॥ २ ॥ यद्यपि स्वयंबुद्धो भगवांस्तदुपदेशं नापेक्षते, तथापि तेषां अय आचारो वर्त्तते, तदेवाह—जीतेन अवश्यंभावेन कल्प आचारो जीतकल्पः, सोऽस्ति येषां ते जीतकल्पिकास्तैः, एवंविधा देवाः विनक्तिपरावर्त्तत्वात् ते देवाः, ताभि॰ इष्टाभिः यावत् शब्दात् 'कंताहिं मणुन्नाहिं' इत्यादि पूर्वोक्त॰ पाठो वाच्यः, एवं विधाभिर्वाग्भिः निरंतरं भगवंतं अभिनंदयतः समृद्धिमंतं आचक्षाणा' अभिष्टुवंत॰ स्तुतिं कुर्वंत॰ सत एवं अवादिषु॰ ॥ ११० ॥

जय नंदस्व? जय नंदस्व? संभ्रमे द्विर्वचनं, नंदति समृद्धो भवतीति' नंदस्तस्य'संबोधनं हे नंदा! दीर्घत्वं प्राकृतत्वात्, एवं जय जय भद्र कल्याणवत्! ते तव भद्रं भवतु;' जय जय क्षत्रि॰

यवरवृषभ! बुध्यस्व भगवन् लोकनाथ! सकलजगज्जीवहितं प्रवर्तय धर्मतीर्थं, यत इदं हितं हितकारकं, सुखं शर्म, निःश्रेयसं मोक्षस्तत्करं, सर्वलोके सर्वजीवानां भविष्यतीति कृत्वा इत्युक्त्वा जय जय शब्दं प्रयुंजंति ॥ १११ ॥

इदं पदं 'गिहत्थधम्माओ' इत्यस्मादग्रे योज्यं; श्रमणस्य भगवतो महावीरस्य मनुष्ययोग्यात् एवंविधात् गृहस्थधर्मात् गृहव्यवहारात् पूर्वमपि अनुपमं आभोग उपभोगः स प्रजोजनं यस्य तत् आभोगिकं, अप्रतिपाति आकेवलोत्पत्तेः स्थिरं एवंविधं ज्ञानदर्शनं अवधिज्ञानं अवधिदर्शनं च अभूत्, ततः श्रमणो भगवान् महावीरः तेन अनुत्तरेण आभोगिकेन ज्ञानदर्शनेन आत्मनो दीक्षाकालं आभोगयति विलोकयति, आभोग्य च त्यक्त्वा हिरण्यं रूप्यं, त्यक्त्वा सुवर्णं, त्यक्त्वा धनं, त्यक्त्वा राज्यं, त्यक्त्वा राष्ट्रं देशं, एवं सैन्यं, वाहनं, कोशं, कोष्टागारं, त्यक्त्वा नगरं, त्यक्त्वा अंतःपुरं, त्यक्त्वा जानपदं देशवासिलोकं, त्यक्त्वा विपुलधनकनकरत्नमणिमौक्तिकशंखशिलाप्रवालरक्तरत्नप्रमुखं संतसारस्वापतेयं, एतत् सर्वं त्यक्त्वा, पुनः किं कृत्वा? विछय विशेषेण त्यक्त्वा, पुनः

किं कृत्वा? विगोप्य तदेव गुप्त सदानातिशयात् प्रकटीकृत्येति भाव., अथवा विगोप्य कुत्सनीयमे-तदस्थिरत्वादित्युक्त्वा, पुन. किं कृत्वा? दीयते इति दानं धन, तत् दायाय दानार्थं पयंति आगच्छंतीति दायारा याचकास्तेभ्यः परिभाज्य विभागैर्दत्वा, यद्वा परिभाव्य आलोच्य, इदं अमुकस्य देय, इदं अमुकस्येवं विचार्येत्यर्थं, पुनः किं कृत्वा? दानं धनं दायिका गोत्रिकास्तेभ्यः परिभाज्य विभागशो दत्वेत्यर्थः, अनेन सूत्रेण च वार्षिकदानं सूचितं, तच्चैव–भगवान् दिक्षादिवसात् प्राग्वर्षेऽवशिष्यमाणे प्राप्तकाले वार्षिकं दान दातु प्रवर्त्तते, सूर्योदयादारभ्य कल्पवर्त्तवेलापर्यंतं अष्टलक्षाधिका एका कोटिं सौवर्णिकानां प्रतिदिन ददाति, वृणुत वर, वृणुत वर इत्युद्घोषणापूर्वकं यो यन्मार्गयति तस्मै तद्दीयते, तत्र सर्वे देवा. शक्रादेशेन पूरयति, एवं च वर्षेण यद्धनं दत्तं तदुच्यते—

तिन्नेव य कोडिसया। अट्ठासीई च हुति कोडीओ॥ असीइं च सयसहस्सं। एयं संवच्छरे दिन्नं॥१॥ तथा च कवयः–तत्तद्वार्षिकदानवर्षविरमद्दारिद्र्यदावानलाः। सद्यः सज्जितवाजिराजिव-

स्तनोलंकारदुर्लक्ष्यत्ताः ॥ संप्राप्ताः स्वगृहेऽर्थिनः सशपथं प्रत्याययंतोऽगनाः । स्वामिन् षड्जिजनैर्निरुरूढहसितैः के यूयमित्यूचिरे ॥ १ ॥ एवं च दानं दत्वा पुनर्जगवता नंदिवर्धनः पृष्टः, राजंस्तव संकेतोऽपि अवधिः पूर्णस्तदहं दीक्षां गृह्णामि, ततो नंदिनापि ध्वजहट्टालंकारतोरणादिजिः कुंरूपुरं सुरलोकसमं कृतं, ततो नंदिराजः शक्रादयश्च कनकमयान् १ रूप्यमयान् २ मणिमयान् ३ कनकरूप्यमयान् ४ कनकमणिमयान् ५ रूप्यमणिमयान् ६ कनकरूप्यमणिमयान् ७ मृन्मयांश्च ८ प्रत्येकं अष्टोत्तरसहस्रं कलशान्, यावत् अन्यामपि च सकलां सामग्रीं कारयतिः ततोऽच्युतेंद्राद्यैश्चतुःषष्ट्या सुरेंद्रैरजिषेके कृते सुरकृताः कलशा दिव्यानुजावेन नृपकारितकलशेषु प्रविष्टास्ततस्तेऽत्यंतं शोजितवंतः, ततः श्रीनंदिराजः स्वामिनं पूर्वाजिमुखं निवेश्य सुरानीतक्षीरोदनीरैः सर्वतीर्थमृत्तिकाजिः, सर्वकषायैश्चाजिषेकं करोति, इंद्राश्च सर्वेऽपि भृंगारादर्शादिहस्ता जयशब्दं प्रयुंजानाः पुरतस्तिष्ठंति, ततश्च भगवान् स्नातो गंधकाषाय्यारुक्षितांगः सुरचंदनानुलिप्तगात्रः कल्पतरुपुष्पमालामनोहरकंठपीठः कनकखचितां चलत्स्वत्तोज्ज्वलवदमूल्यसदशश्वेतवस्त्रावृतशरीरो हारविराज-

रूक्षस्थल, केयूरकटकमंडितभुजः, कुण्डलललितगल्लतल., श्रीनंदिराजकारितां पञ्चाशद्धनुरायतां पञ्चविंशतिधनुर्विस्तीर्णां, षट्त्रिंशद्धनुरुच्चां, बहुस्तम्भशतनिविष्टां, मणिकनकविचित्रां, दिव्यानुभावतः सुरकृतताहक्शिबिकामनुप्रविष्टां चन्द्रप्रभाभिधां शिबिकां आरूढो दिक्षाग्रहणार्थं प्रतस्थे, शेषं सूत्रकृत् स्वयं वक्ष्यति ॥ ११२ ॥

तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरः, योऽसौ शीतकालस्य प्रथमो मासः प्रथम पक्ष., मार्गशिरमासस्य कृष्णपक्ष, तस्य मार्गशिरबहुलस्य दशमीदिवसे पूर्वदिग्गामिन्यां छायायां, पौरुष्यां पाश्चात्यपौरुष्यां अभिनिवृत्तायां जातायां प्रमाणप्राप्तायां, नतु न्यूनाधिकायां, सुव्रताख्ये दिवसे, विजयाख्ये मुहूर्त्ते, चंद्रप्रभायां पूर्वोक्तायां शिबिकायां कृतषष्ठतपाः विशुध्यमानलेश्याकः पूर्वाभिमुख. सिंहासने निषीदति, शिबिकारूढस्य च प्रभोर्दक्षिणतः कुलमहत्तरिका हंसलक्षण पटशाटकमादाय, वामपार्श्वे च प्रभोरंबधात्री दीक्षोपकरणमादाय, पृष्ठे चैका तरुणी स्फारशृंगारा धवलच्छत्रहस्ता, ईशानकोणे चैका पूर्णकलशहस्ता अग्निकोणे चैका मणिमयतालवृन्तहस्ता भद्रासने

निषीदति, ततः श्रीनंदिनृपादिष्टाः पुरुषा यावत् शिबिकामुत्पाटयंति, तावत् शक्रो दाक्षिणात्यां उपरितनां बाहां, ईशानेंद्र औत्तराहां उपरितनीं बाहां, चमरेंद्रो दाक्षिणात्यां अधस्तनीं बाहां, बलींद्र औत्तराहां अधस्तनीं बाहां, शेषाश्च भवनपतिव्यंतरज्योतिष्कवैमानिकेंद्राश्चंचलकुंडलाद्याभरणकिरणरमणीयाः पंचवर्णपुष्पवृष्टिं कुर्वंतो, दुंदुभीस्ताडयंतो यथार्हं शिबिकां उत्पाटयंति, ततः शक्रेशानौ तां बाहां त्यक्त्वा भगवतश्चामराणि वीजयतः, तदा च भगवति शिबिकारूढे प्रस्थिते सति शरदि पद्मसर इव, पुष्पितं अतसीवनमिव, कर्णिकारवनमिव, चंपकवनमिव, तिलकवनमिव रमणीयं गगनतलं सुरवरैरभूत्, किंच निरंतरं वाद्यमानभंभाभेरीमृदंगदुंदुभिशंखाद्यनेकवाद्यध्वनिर्गगनतले भूतले च प्रससार; तन्नादेन च नगरवासिन्यस्त्यक्तस्वकार्या नार्यः समागच्छंत्यो विविधचेष्टाभिर्जनान् विस्मापयंतिस्म ॥

यतः—तिन्निवि थीअं वल्लहां । कलिकज्जलसिंदूर ॥ ए पुण अतिहि वल्लहां । दूध जमाइ तूर ॥ १ ॥ चेष्टाश्चेमाः—स्वगल्लयोः कावन कज्जलांकं । कस्तूरिकाभिर्नयनांजनं च ॥ गले चलन्नूपु-

रमंह्रिपीठे । ग्रैवेयकं चारु चकार वाला ॥ १ ॥ कटीतटे कापि बबंध हारं । काचित् कणर्त्किकि-
णिका च कंठे ॥ गोशीर्षपंकेन ररज पादा-वलक्तपंकेन वपुर्लिलेप ॥ २ ॥ अर्धस्नाता काचन वाला
। विगलत्सलिला विश्लथवाला ॥ तत्र प्रथममुपेता श्रास । व्यधित न केषां ज्ञाता हासं ॥ ३ ॥
कापि परिच्युतविश्लथवसना । मूढा करधृतकेवलरसना ॥ चित्र तत्र गता न ललज्जे । सर्वजने
जिनवीक्षणसज्जे ॥ ४ ॥ संत्यज्य काचित्तरुणी रुदंत । स्वपोतमोतुं च करे विधृत्य ॥ निवेश्य कट्यां
त्वरया व्रजती । हासावकाशं न चकार केषां ॥ ५ ॥ अहो महारूपमहो महोजः-सौभाग्यमेतत्
कटरे शरीरे ॥ पश्यामि तु खानि करस्य धातु-र्यदीदृगीदृग् वदतिस्म काचित् ॥ ६ ॥ काचिन्मदेला
विकसत्कपोला । श्रीवीरवक्त्रेक्षणगाढलोला ॥ विसृस्य दूरं पतितानि तानि । नाज्ञासिषु: कांचनभू-
षणानि ॥ ७ ॥ हस्तांबुजाभ्यां शुचिमौक्तिकौघै-रवाकिरन् काश्चन चन्नलाक्ष्यः ॥ काश्चिज्जगुर्मंजुल-
मंगलानि । प्रमोदपूर्णा ननृतुश्च काश्चित् ॥ ८ ॥ इत्थं नागरनागरीनिरीक्ष्यमाणविचित्रप्रकर्षस्य
भगवतः पुरतः प्रथमतो रत्नमयान्यष्टौ मंगलानि क्रमेण प्रस्थितानि, तद्यथा-स्वस्तिक १ श्रीवत्सो

२ नंद्यावर्त्तो ३ वर्द्धमानकं ४ भद्रासनं ५ कलशो ६ मत्स्ययुग्मं ७ दर्पणश्च ८ ॥ ततः क्रमेण पूर्णकलशभृंगारचामराणि, ततो महती वैजयंती, ततश्छत्रं, ततो मणिस्वर्णमयं सपादपीठं सिंहासनं, ततोऽष्टशतं आरोहरहितानां वरकुंजरतुरगाणां, ततस्तावंतो घंटापताकाभिरामाः शस्त्रपूर्णा रथाः, ततस्तावंतो वरपुरुषाः, ततः क्रमेण हय १ गज २ रथ ३ पदात्यनिकानि ४, ततो लघुपताकासहस्रपरिमंडितः सहस्रयोजनोच्चो महेंद्रध्वजः, ततः खड्गग्राहाः, कुंतग्राहाः, पीठफलकग्राहाः, ततो हासकारकाः, नर्त्तकारकाः, कांदर्पिका जयजय शब्दं प्रयुंजानास्तदनंतरं बहव उग्रा भोगा राजन्याः क्षत्रियास्तलवरा माडंबिकाः कौटुंबिकाः श्रेष्ठिनः, सार्थवाहाः, देवा देव्यश्च स्वामिनः पुरतः प्रस्थिताः, तदनंतरं देवमनुजाऽसुरसहितया स्वर्गमर्त्यपातालवासिन्या पर्षदा सम्यग् अनुगम्यमानं, अग्रतः शंखिकाः शंखवादकाः, चाक्रिकाश्चक्रप्रहरणधारिणः, लांगलिका गलावलंबितसुवर्णादिमयलांगलाकारधारिणो भट्टविशेषाः, मुखे प्रियवक्तारश्चाटुकारिण इत्यर्थः, वर्द्धमानाः स्कंधारोपितपुरुषाः पुरुषाः, पुष्पमाणवा मागधाः, घंटया चरंतीति घांटिका 'राउलिआ' इति लोके प्रसिद्धाः,

एतेषां गणैः परिवृतं च भगवंतं प्रक्रमात् कुलमहत्तरादयः स्वजनाः ताभिरिष्टादिविशेषणविशिष्टाभि-र्वाग्भिः अभिनंदतोऽभिष्टुवंतश्च एवं अवादिषुः ॥ ११३ ॥

जय जयनान् भव, हे समृद्धिमन्! जय जयवान् भव, हे भद्र भद्रकारक ते तुभ्यं भद्रं अ-स्तु, किंच अभग्नैर्निरतिचारैर्ज्ञानदर्शनचारित्रैः अजितानि इंद्रियाणि जय वशीकुरु ? जितं च स्व-शीकृतं पालय श्रमणधर्मं, जितविघ्नोऽपि च हे देव! प्रभो! त्वं वस, कुत्र ?सिद्धिमध्ये; अत्र सिद्धिशब्दे-नश्रमणधर्मस्य वशीकारस्तस्य मध्य लक्षणया प्रकर्षस्तत्र त्व निरंतराय तिष्ठेत्यर्थः. रागद्वेषमल्लौ निज-हि निगृहाण, तयोर्निग्रहं कुरु इत्यर्थः, केन तपसा, बाह्याभ्यंतरेण तथा धृतौ संतोषे धैर्ये वा अत्यंतं बद्ध-कक्षः सन् अष्टकर्मशत्रून् मर्दय ? परं केनेत्याह-ध्यानेन उत्तमेन शुक्लेनेत्यर्थः, तथा हे वीर! अप्रमत्तः सन् त्रैलोक्य एव यो रंगो मल्लयुद्धमंडपस्तस्य मध्ये आराधनपताका आहृर गृहाण ? यथा कश्चिन्मल्लः प्रतिमल्लं विजित्य जयपताका गृह्णाति, तथा त्वं कर्मशत्रून् विजित्य आराधनपताकां गृहाण इति भावः. प्राप्नुहि च वितिमिरं तिमिररहितं अनुत्तरं अनुपमं केवलवरज्ञानं? गच्छ च मोक्ष परमं पदं, केन? जिनव-

रोपदिष्टेन अकुटिलेन मार्गेण, अथ किं कृत्वेत्याह—

हत्वा, कां? परीषहसेनां, जय जय क्षत्रियवरवृषभ! बहून् दिवसान्, बहून् पक्षान्, बहून् मासान्, बहून् ऋतून् मासद्वयप्रमितान्, बहून् अयनानि, षण्मासिकानि दक्षिणोत्तरायणलक्षणानि, बहून् संवत्सरान् यावत्, परीषहोपसर्गेभ्योऽभीतः सन्, भयभैरवाणां विद्युत्सिंहादिकानां क्षान्त्या क्षमो, न त्वसामर्थ्यादिना, एवंविधः सन् त्वं जय? अपरं च ते तव धर्मे अविघ्नं विघ्नाऽभावोऽस्तु, इति कृत्वा इत्युक्त्वा जयजयशब्दं प्रयुंजंति ॥ ११४ ॥

ततः श्रमणो भगवान् महावीरः क्षत्रियकुंडग्रामनगरमध्येन भूत्वा यत्र ज्ञातखंडवनं, यत्राऽशोकपादपस्तत्र उपागच्छतीति योजना, अथ किंविशिष्टः सन्? नयनमालासहस्रैः प्रेक्ष्यमाणः प्रेक्ष्यमाणः, पुनः पुनः विलोक्यमानसौंदर्यः, पुनः किंवि० वदनमालासहस्रैः श्रेणिस्थितलोकानां मुखपंक्तिसहस्रैः पुनः पुनः अभिष्टूयमानः, पुनः किंवि० हृदयमालासहस्रैः उन्नंद्यमानो, जयतु जीवतु इत्यादिध्यानेन समृद्धिं प्राप्यमाणः, पुनः किंवि० मनोरथमालासहस्रैः विशेषेण स्पृश्यमानः, वयं

एतस्य सेवका अपि जवामस्तदापि वरं, इति चिंत्यमानः, पुनः किंवि० कांतिरूपगुणैः प्रार्थ्यमानः प्रार्थ्यमानः, स्वामित्वेन भर्तृत्वेन वांछ्यमान इत्यर्थः, पुनः किंवि० अंगुलिमालासहस्रैः दर्श्यमानो दर्श्यमानः, पुनः किंवि० दक्षिणहस्तेन बहूनां नरनारीसहस्राणां अजलिमालासहस्राणि नमस्कारान् प्रतीछन् गृह्णन्, पुनः किंवि० भवनपंक्तिसहस्राणि समतिक्रामन् समतिक्रामन्, पुनः किंवि० तंत्री वीणा,तलताला हस्ततालाः,त्रुटितानि वादित्राणि,गीतं गीतं, वादितं वादनं, तेषां रवेण शब्देन, पुनः कीदृशेन ? मधुरेण च मनोहरेण, पुनः कीदृशेन ? जयजयशब्दस्य यो घोष उद्घोषणं, तेन मिश्रितेन, पुनः कीदृशेन ? मंजुमंजुना घोषेण च, अतिकोमलेन जनस्वरेण सावधानीभवन् सावधानीभवन् सर्वर्द्ध्या समस्तच्छत्रादिराजचिन्हरूपया, सर्वद्युत्या आभरणादिसंबंधिन्या कान्त्या, सर्वबलेन हस्तितुरगादिरूपकटकेन, सर्ववाहनेन करभवेसरशिबिकादिरूपेण, सर्वसमुदयेन महाजनमेलापकेन, सर्वादरेण सर्वौचित्यकरणेन, सर्वविभूत्या सर्वसंपदा, सर्वविभूषया समस्तशोभया, सर्वसंभ्रमेण प्रमोदजनितौत्सुक्येन, सर्वसंगमेन सर्वस्वजनमेलापकेन, सर्वप्रकृतिभिः, अष्टादशभि-

र्निगमादिभिर्नगरवास्तव्यप्रजाभिः, सर्वनाटकैः, सर्वतालाचरैः, सर्वावरोधेन सर्वांतःपुरेण, सर्वपुष्पगंधमाल्यालंकारविभूषया प्रतीतया, सर्वत्रुटितशब्दानां सर्ववाद्यशब्दानां यः शब्दः संनिनादश्च प्रतिरवस्तेन, सर्वत्वं च स्तोकानां समुदाये स्तोकैरपि स्यात्तत आह, महत्या ऋद्ध्या, महत्या द्युत्या, महता बलेन, महता वाहनेन, महता समुदयेन, महता उच्चैस्तरेण प्रधानवादित्राणि, तेषां जमगसमगं समकालं प्रवादनं यत्र एवंविधेन, शंखः प्रतीतः, पणवः मृत्पटहः, पटहः काष्टपटहः, भेरी ढक्का, झल्लरी प्रतीता, खरमुखी काहला, हुरुकः त्रिवलितुल्यवाद्यविशेषः, दुंदुभिर्देववाद्यं, तेषां निर्घोषः, तस्य नादितः प्रतिशब्दः, तद्रूपेण रवेण शब्देन युक्तं, एवं रूपया ऋद्ध्या वृताय व्रजंतं भगवंतं पृष्टतश्चतुरंगसैन्यपरिकलितो ललितछत्रचामरविराजितो नंदिवर्धननृपो गछति ॥ पूर्वोक्ताडंबरेण युक्तो भगवान् क्षत्रियकुंडनगरस्य मध्यभागेन निर्गछति, निर्गत्य यत्रैव ज्ञातवनखंडवनं इति नामकं उद्यानं अस्ति, यत्रैव अशोकनामा वरपादपः श्रेष्टवृक्षः, तत्रैव उपागछति ॥१५॥

उपागत्य अशोकवरपादपस्य अधस्तात् शिबिकां स्थापयति, स्थापयित्वा शिबिकातः प्रत्यवतरति,

प्रत्यवतीर्य स्वयमेव आभरणमाल्यालंकारान् उत्तारयति, उत्तार्य, तचैवं अंगुलीन्यश्च मुद्रावलिं पाणितो। वीरवलय भुजाभ्यां कटिल्यंगदे ॥ हारमथ कण्ठ कर्णतः कुंडले। मस्तकान्मुकुटमुन्मुचति श्रीजिनः॥१॥ तानि चाभरणानि कुलमहत्तरिका हंसलक्षणपटशाटकेन गृह्णाति, गृहीत्वा च भगवंतं एवं अवादीत्,' इक्खागकुलसमुप्पन्नेसिणं तुमं जाया, कासवगुत्तेसिणं तुमं जाया, उदितोदितनायकुलनहयलमिअंक सिद्धत्थजच्चखत्तिअसुजेसिण तुमं जाया, जच्चखत्तिआणीए तिसलाए सुएसिणं तुमं जाया, देविंदनरिंदपहिअकित्तीसिणं तुमं जाया, एत्थ सिग्घं च कमिअव्वं गुरुअं आलंबेअव्वं असिधारमहव्वय चरिअव्वं जाया, परिक्कमिअव्वं जाया, अस्सिं च णं अट्ठे नो पमाइअव्वं,' इत्यादि वंदित्वा नमस्कृत्य एकतोऽपक्रामति ॥

ततश्च भगवान् एकया मुष्ट्या कूर्चं, चतसृभिश्च ताभिः शिरोजान्, एवं स्वयमेव पंचमौष्टिकं लोच करोति, तथा कृत्वा च षष्ठेन भक्तेन अपानकेन, उत्तराफाल्गुन्यां चन्द्रयोगे सति शक्रेण वामस्कंधे स्थापितं एकं देवदूष्यं आदाय, एको रागद्वेषसहायविरहात्, अद्वितीयः, तथाहि--ऋषभश्च-

तुःसहस्या राज्ञां, मल्लिपार्श्वौ त्रिभिस्त्रिभिः शतैर्वासुपूज्यः षट्शत्या, शेषाश्च सहस्रेण सह प्रव्रजितास्तथा भगवान् न केनापि सहेत्यतोऽद्धितीयः, द्रव्यतः शिरःकूर्चलोचनेन, भावतः क्रोधाद्यपनयनेन मुंडो भूत्वा, आगारात् गृहात् निष्क्रम्य अनगारितां साधुतां प्रव्रजितः प्रतिपन्नः, तद्विधिश्चायं —एवं पूर्वोक्तप्रकारेण कृतपंचमौष्टिकलोचो भगवान् यदा सामायिकं उच्चरितुं वांछति, तदा शक्रः सकलमपि वाद्यकोलाहलं निवारयति, ततः प्रभुः 'नमो सिद्धाणं' इति कथनपूर्वकं 'करेमि सामाइअं सव्वं सावज्जं जोगं पच्चक्खामी' त्यादि उच्चरति, न तु 'भंतेत्ति' भणति, तथा कल्पत्वात्, एवं च चारित्रग्रहणानंतरमेव भगवतश्चतुर्थं ज्ञानं उत्पद्यते, ततः शक्रादयो देवा भगवंतं वंदित्वा नंदिश्वरयात्रां कृत्वा स्वं स्वं स्थानं जग्मुः ॥

॥ इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्री ॥
विनयविजयगणिविरचितायां कल्पसुबोधिकायां
पंचमः क्षणः समाप्तः, ग्रं० ( ६५० ) ग्रं० ( ३२२५ ) ॥ श्रीरस्तु ॥

॥ अथ षष्ठ व्याख्यान प्रारभ्यते ॥



ततश्चतुर्ज्ञानो भगवान् बंधुवर्गं आपृछ्य च विहारार्थं प्रस्थितो, बंधुवर्गोऽपि दृष्टिविषय याव-
त् तत्र स्थित्वा, त्वया विना वीर कथं व्रजामो । गृहेऽधुना शून्यवनोपमाने ॥ गोष्ठीसुखं केन सहा-
चरामो । भोक्ष्यामहे केन सहाथ बंधो ॥१॥ सर्वेषु कार्येषु च वीर वीरे-त्यामंत्रणादर्शनतस्तवार्यं ॥ प्रेमप्र-
कर्षाद्भजाम हर्षं । निराश्रयाश्चाथ कमाश्रयाम. ॥२॥ अतिप्रियं बांधव दर्शनं ते । सुधांजनं भावि
कदास्मदक्ष्णोः ॥ नीरागचित्तोऽपि कदाचिदस्मान् । स्मरिष्यसि प्रौढगुणाभिराम ॥ ३ ॥ इत्यादि
वदन् कष्टेन निवृत्य साश्रुलोचन. स्वगृहं जगाम, किंच प्रभुर्दीक्षामहोत्सवे यद्देवैर्गोशीर्षचंदनादिना पुष्पैश्च
पूजितोऽभूत्, साधिकमासचतुष्क यावत् तदवस्थेन च गंधेन आकृष्टा भ्रमरा आगत्य गाढं त्वचं दंशंति,
युवानश्च गंधपुटीं याचते, मौनवति च भगवति रुष्टास्ते दुष्टान् उपसर्गान् कुर्वंति, स्त्रियोऽपि भग-
वंतं अद्भुतरूप तथा सुगंधशरीरं च निरीक्ष्य कामपरवशा अनुकूलान् उपसर्गान् कुर्वंति. भगवांस्तु

मेरुरिव निष्प्रकंपः सर्वं सहमानो विहरति. तस्मिन् दिने च मुहूर्त्तावशेषे कुमारग्रामं प्राप्तस्तत्र रात्रौ कायोत्सर्गेण स्थितः. इतश्च तत्र कश्चिद् गोपः सर्वदिनं हले वृषान् वाहयित्वा संध्यायां तान् प्रभुपार्श्वे मुक्त्वा गोदोहाय गृहं गतः, वृषभास्तु वने चरितुं गताः, स चागत्य प्रभुं पृष्टवान्, देवार्य क्व मे वृषाः, अजल्पति च प्रभौ अयं न वेत्तीति वने विलोकितुं लग्नः, वृषास्तु रात्रिशेषे स्वयमेव प्रभुपार्श्वे आगताः, गोपोऽपि तत्रागतस्तान् दृष्ट्वा अहो! जानतापि अनेन समग्रां रात्रिं अहं भ्रामितः, इति कोपात् सेल्हकमुत्पाट्य प्रहर्तुं धावितः, इतश्च शक्रस्तं वृत्तांतं अवधिना ज्ञात्वा गोपं शिक्षितवान् ॥

अथ तत्र शक्रः प्रभुं विज्ञपयामास, प्रभो तवोपसर्गा भूयांसः संति, ततो द्वादशवर्षं यावत् वैयावृत्यनिमित्तं तवांतिके तिष्ठामि, ततः प्रभुरवादीद्देवेंद्र! कदाप्येतन्न भूतं, न भवति, न भविष्यति च, यत् कस्यचिद्देवेंद्रस्य वा साहाय्येन तीर्थंकराः केवलज्ञानं उत्पादयंति, किंतु स्वपराक्रमेणैव केवलज्ञानं उत्पादयंति; ततः शक्रोऽपि मरणांतोपसर्गवारणाय प्रभोर्मातृस्वस्रेयं व्यंतरं वैयावृत्यकरं स्था-

पयित्वा त्रिदिवं जग्मिवान्॥ ततः प्रभुः प्रातः कोल्लाकसन्निवेशे बहुलब्राह्मणगृहे मया सपात्रो धर्मः प्र-
ज्ञापनीय इति प्रथमपारणं गृहस्थपात्रे परमान्नेन चकार, तदा च चेलोत्क्षेपः (१) गंधोदकवृष्टिः (२)
दुंदुभिनादो(३)अहो दानमहो दानमित्युद्घोषणा(४)वसुधारावृष्टि(५)श्चेति पंच दिव्यानि प्रादुर्भूतानि.
एषु वसुधारास्वरूपं चेदं, "अद्धत्तेरसकोडी । उक्कोसा तह होइ वसुहारा ॥ अद्धत्तेरसलक्खा । जहन्निआ
होइ वसुहारा ॥ १ ॥ " ततः प्रभुर्विहरन् मोराकसन्निवेशे दुइज्जंततापसाश्रमे गतस्तत्र सिद्धार्थभू-
पमित्रं कुलपतिः प्रभुं उपस्थितः, प्रभुणापि पूर्वाभ्यासान्मिलनाय बाहू प्रसारितौ,तस्य प्रार्थनया च
एकां रात्रिं तत्र स्थित्वा नीरागचित्तोऽपि तत्प्राग्रहेण तत्र चतुर्मासावस्थानं अंगीकृत्य अन्यतो विज-
हार. अष्टौ मासान् विहृत्य पुनर्वर्षार्थं तत्रागतः,आगत्य च कुलपतिसमर्पिते तृणकुटीरके तस्थौ,तत्र च
बहिस्तृणानाप्त्या क्षुधिता गावोऽन्यैस्तापसैः स्वस्वकुटीरकान्निवारिताः सत्यः प्रभुभूषितं कुटीरं निःशंकं
खादति, ततः कुटीरस्वामिना कुलपतेः पुरतो रावा कृता, कुलपतिरप्यागत्य भगवंतं उवाच, हे वर्ध-
मान! पक्षिणोऽपि स्वनीडरक्षणे दक्षा भवंति,त्वं तावत् राजपुत्रोऽपि स्व आश्रयं रक्षितुं अशक्तोऽसि,ततः

 



प्रभुर्मयि सति एषां अप्रीतिरिति विचिंत्याषाढशुक्लपूर्णिमाया आरभ्य पक्षे अतिक्रांते वर्षायां एव इमान् पंच अभिग्रहान् अभिगृह्य अस्थिकग्रामंप्रति प्रस्थितः,अभिग्रहाश्चेमे–नाऽप्रीतिमद्गृहे वासः १ । स्थेयं प्रतिमया सदा २ ॥ न गेहिविनयः कार्यो ३ । मौनं ४ पाणौ च भोजनं ५ ॥ १ ॥

श्रमणो भगवान् महावीरः साधिकं मासाधिकसंवत्सरं यावत् चीवरधारी अभूत्,तेन परं तत ऊर्ध्वं साधिकमासाधिकवर्षादूर्ध्वं च अचेलकः,पाणिपतद्गृहः करपात्रश्चाभवत्,तत्र अचेलकभवनं चैवं–साधिकमासाधिकसंवत्सरादूर्ध्वं विहरन् दक्षिणवाचालपुरासन्नसुवर्णवालुकानदीतटे कंटके विलग्य देवदूष्यार्धे पतिते सति भगवान् सिंहावलोकनेन तदद्राक्षीत्, ममत्वेनेति केचित्, स्थंडिलेऽस्थंडिले वा पतितमिति विलोकनायेत्यन्ये, असमत्संततेर्वस्त्रपात्रं सुलभं दुर्लभं वा भावीति विलोकनार्थं इति अपरे, वृद्धास्तु कंटके वस्त्रविलगनात् स्वशासनं कंटकबहुलं भविष्यतीति विज्ञाय निर्लोभत्वात् तद्वस्त्रार्धं न जग्राहेति. ततः पितुर्मित्रेण ब्राह्मणेन गृहीतं; अर्धं तु तस्यैव पूर्वं प्रभुणा दत्तं अभूत्; तच्चैवं–स हि पूर्वं दरिद्रो भगवतो वार्षिकदानावसरे परदेशं गतो

ऽभूत्, तत्रापि निर्भाग्यत्वात् किंचिदप्राप्य गृहमागतो भार्यया तर्जितो रे अभाग्यशेखर ! यदा भगवता श्रीवर्धमानेन सुवर्णमेघायितं तदा त्वं परदेशे गतः, अधुना पुनर्निर्धनः समागतो, याहि दूरं? मुखं मा दर्शय? अथवा सांप्रतं अपि तमेव जंगमं कल्पतरुं यावस्व,यथा तव दारिद्र्यं हरति. यतः—येः प्राग्दत्तानि दानानि । पुनर्दातुं हि ते क्षमाः ॥ शुष्कोऽपि हि नदीमार्गः । खन्यते सलिलार्थिभिः ॥ १ ॥ इत्यादिवाक्यैर्भार्याप्रेरितो भगवत्पार्श्वमागत्य विज्ञपयामास ॥

प्रभो त्वं जगदुपकारी, विश्वस्यापि त्वया दारिद्र्यं निर्मूलितं, अहं तु निर्भाग्यस्तस्मिन्नवसरेऽत्र नाभूवं, तत्रापि—किं किं न कय को को न पुच्छिओ । कह कह न नामिअं सीसं ॥ दुब्भरउअरस्स कए । किं न कय किं न कायव्वं ॥ १ ॥ तथापि भ्रमता मया न किंचित् प्राप्तं, ततोऽहं निःपुण्यो निराश्रयो निर्धनस्त्वामेव जगद्वांछितदायकं शरणायोपेतोऽस्मि, तव च विश्वदारिद्र्यहरस्य मद्दारिद्र्यहरणं कियन्मात्रं, यतः—संपूरिताऽशेषमहीतलस्य । पयोधरस्याद्भुतशक्तिभाजः ॥ किं तुंबपात्रप्रतिपूरणाय । भवेत्प्रयासस्य कणोऽपि नूनं ॥ १ ॥ एवं च याचमानाय विप्राय करुणापरेण भग-

वता देवदूष्यवस्त्रस्य अर्द्धं दत्तं, इदं च तादृक्दानदायिनोऽपि भगवतो निःप्रयोजनस्यापि वस्त्रस्य यदर्द्धदानं तत् संततेर्वस्त्रपात्रेषु मूर्छा सूचयति, इति केचित्, विप्रकुलोत्पन्नत्वं सूचयतीत्यपरे। ब्राह्मणस्तु तदर्द्धं गृहीत्वा दशांचलकृते तुन्नवायस्याऽदर्शयत्,सोऽप्युवाच,याहि भो ब्राह्मण! तमेव प्रभुं अनुगच्छ, स हि निर्ममः करुणांभोधिर्द्वितीयं अपि अर्द्धं दास्यति, ततस्तदर्धद्वयं अहं तथा संयोजयिष्यामि यथा अक्षतस्येव तस्य दीनारलक्षं मूल्यं भविष्यति, तेन च अर्धमर्धविभक्तेन द्वयोरप्यावयोर्दारिद्र्यं यास्यति, इति तत्प्रेरितो विप्रोऽपि पुनः प्रभुपार्श्वमागतो लज्जया प्रार्थयितुं अशक्तो वर्षं यावत् पृष्ठे बभ्राम,ततश्च स्वयं पतितं तदर्धं गृहीत्वा जगाम; तदेवं भगवता सवस्त्रधर्मप्ररूपणाय साधिकमासाधिकं वर्षं यावद्वस्त्रं स्वीकृतं, सपात्रधर्मस्थापनाय च प्रथमां पारणां पात्रेण कृतवान्, ततः परं तु यावज्जीवं अचेलकः पाणिपात्रश्चाऽभूत्, एवं च विहरतो भगवतः कदाचिद् गंगातटे सूक्ष्ममृत्तिकाकर्दमप्रतिबिंबितासु पदपंक्तिषु चक्रध्वजांकुशादीनि लक्षणानि निरीक्ष्य पुष्पनामा सामुद्रिकश्चिंतयामास ॥

यदय एकाकी कोऽपि चक्रवर्ती गच्छति, तद् गत्वाऽस्य सेवा करोमि, यथा मम महानुदयो भवतीति त्वरितं पदानुसारेण भगवत्पार्श्वमागतो भगवंतं निरीक्ष्य दध्यौ, अहो मया वृथैव महता कष्टेन सामुद्रिकं अधीतं, यदि इहगुलक्षणलक्षितोऽपि श्रमणो भूत्वा व्रतकष्टं समाचरति तदा सामुद्रिकपुस्तकं तु जले क्षेप्यमेव, इतश्च दत्तोपयोगः शक्रः शीघ्रं तत्रागत्य भगवंतं अभिवंद्य पुष्पं उवाच, भो भो सामुद्रिक! मा विषीद, ? सत्यमेवैतत्तव शास्त्रं, यदयं अनेन लक्षणेन जगत्त्रयस्यापि पूज्यः सुराऽसुराणामपि स्वामी सर्वोत्तमसंपदाश्रयस्तीर्थेश्वरो भविष्यति, किंच—कायः स्वेदमलामय–विवर्जितः श्वासवायुरपि सुरभिः ॥ रुधिरामिषमपि धवलं । गोदुग्धसहोदरं नेतुः ॥ १ ॥ इत्यादीन्यपरिमितानि अस्य बाह्याभ्यतराणि लक्षणानि केन गणयितुं शक्यानि ? इत्यादि वदन् पुष्पं मणिकनकादिभिः समृद्धिपात्रं विधाय शक्रः स्वस्थानं ययौ, सामुद्रिकोऽपि प्रमुदितः स्वदेशं गतः, प्रभुरप्यन्यत्र विजहार ॥

श्रमणो भगवान् महावीरः सातिरेकाणि द्वादश वर्षाणि यावत् नित्यं दीक्षाग्रहणादनु याव-

जीवं व्युत्सृष्टकायः परिकर्मणावर्जनात्, त्यक्तदेहः परीषहसहनात्, एवंविधः सन् प्रभुः ये केचित् उपसर्गा उत्पद्यंते,तद्यथा दिव्या देवकृताः,मानुष्या मनुष्यकृताः,तैर्यग्योनिकाः तिर्यक्कृताः,अनुकूला भोगार्थं प्रार्थनादिकाः, प्रतिकूलाः प्रतिलोमास्ताडनादिकाः, तान् उत्पन्नान् सम्यक् सहते भयाऽभावेन, क्षमते क्रोधाऽभावेन, तितिक्षते दैन्याऽकरणेन, अध्यासयति निश्चलतया. ॥ ११७ ॥ तत्र देवादिकृतोपसर्गसहनं यथा—स्वामी प्रथमचतुर्मासकं मोराकसन्निवेशादागत्य शूलपाणियक्षचैत्ये स्थितः, स च यक्षः पूर्वभवे धनदेववणिजो वृषभ आसीत्,तस्य च नदीं उत्तरत उत्तरतः शकटपंचशती पंके निमग्ना, तदा च उल्लसितवीर्येण एकेन वृषभेण वामधुरीणेन भूत्वा, यदि ममैव खंडद्वयं विधायोभयोः पार्श्वयोर्योजयति तदाऽहं एक एव सर्वाणि उत्तारयामीति चिंतयता सर्वाणि शकटानि निर्व्यूढानि,स तथाविधेन पराक्रमेण त्रुटितसंधिरशक्तशरीरो जातः,तदा च अशक्तं तं निरीक्ष्य धनदेवेन वर्धमानग्रामे गत्वा ग्राममुख्यानां तृणजलनिमित्तं द्रव्यं दत्वा स तत्र मुक्तः,ग्राममुख्यैश्च न काचिच्चिंता कृता,स च क्षुत्तृड्बाधितः शुभाध्यवसायान्मृत्वा व्यंतरो जातस्तेन प्राग्भवव्यतिकरस्मरणाज्जात-

कोपेन तत्र मारीकरणेन अनेके जना मारिताः, कियतां च संस्कारो जवतीति तथैव मुक्तानां मृतकानां अस्थिनिकरैः स ग्रामः अस्थिकग्राम इति प्रसिद्धो बजूव. ततश्च अवशिष्टलोकाराधितेन तेन प्रत्यक्षीजूय स्वप्रासादः स्वप्रतिमा च कारिता, तत्र जनाः प्रत्यहं पूजां कुर्वंति, भगवांस्तु तत्प्रतिबोधनाय तत्र चैत्ये समागतः, दुष्टोऽयं रात्रौ स्वचैत्ये स्थितं व्यापादयतीति जनैर्वार्यमाणोऽपि तत्रैव रात्रौ स्थितः ॥

तेन च जगवतः क्षोजाय जूमेर्जेदकरोऽट्टहासः कृतः, ततो हस्तिरूपं,ततः सर्परूपं,ततः पिशाचरूपं विकृत्य दुस्सहा उपसर्गाः कृताः, जगवांस्तु मनागपि न क्षुजितः, तत एकैकापि या अन्यजीवितापहा तथाविधाः शिरः १ कर्ण २ नासिका ३ चक्षु ४ दंत ५ पृष्ठ ६ नख ७ लक्षणेष्वंगेषु विविधा वेदनाः प्रारब्धाः, तथापि अकंपितचित्तं भगवंतं निरीक्ष्य स प्रतिबुद्धः,अस्मिन्नवसरे च सिद्धार्थः समागत्योवाच,जो निर्जाग्य! दुर्लक्षण शूलपाणे! किमिदमाचरितं,यत्सुरपूज्यस्य भगवत आशातना कृता, यदि शक्रो ज्ञास्यति तदा तव स्थानं स्फोटयिष्यति, ततः पुनर्जीतः सन्नधिकं भगवंतं

पूजयामास, भगवतोऽग्रे गायति नृत्यति च, तदाकर्ण्य च लोकाश्चिंतितवंतो यदनेन स देवार्यो हतस्ततो गायति नृत्यति च, तत्र च देशोनान् रात्रेश्चतुरोऽपि यामान् अत्यंतं वेदनां सोढवान् इति प्रभाते स क्षणं निद्रां लेभे, तत्र च प्रभुरूर्ध्वस्थ एव दश स्वप्नान् दृष्ट्वा जागरितः ॥ प्रभाते लोको मिलितः, उत्पलेंद्रशर्माणौ अपि अधीताष्टांगनिमित्तौ तत्रागतौ, ते भगवंतं दिव्यगंधचूर्णपुष्पपूजितं निरीक्ष्य प्रमुदिताः प्रणमंति, तत उत्पलोऽवोचत् हे भगवन्! यत्त्वया निशाशेषे दश स्वप्ना दृष्टास्तेषां फलं त्वया तु ज्ञायते एव तथापि मया कथ्यते, यत्त्वया तालपिशाचो हतस्तेन त्वं अचिरेण मोहनीयं कर्म हनिष्यसि १, यच्च सेव्यमानः सितः पक्षी दृष्टस्तेन त्वं शुक्लध्यानं ध्यायसि २, यच्च चित्रकोकिलः सेवमानो दृष्टस्ततस्त्वं द्वादशांगीं प्रथयिष्यसि ३, यच्च गोवर्गः सेवमानो दृष्टस्तेन साधुसाध्वीश्रावकश्राविकारूपश्चतुर्विधः संघस्त्वां सेविष्यते ४, यश्च त्वया समुद्रस्तीर्णस्ततस्त्वं संसारं तरिष्यसि ५, यश्चोद्गच्छन् सूर्यो दृष्टस्तेन तव अचिरात् केवलज्ञानं उत्पत्स्यते ६, यच्च त्वया अंत्रैर्मानुषोत्तरो वेष्टितस्तेन त्रिभुवने तव कीर्तिर्भविष्यति ७, यच्च त्वं मंदरचूलां आरूढस्तेन त्वं सिंहा-

सने उपविश्य देवमनुजपर्षदि धर्मं प्ररूपयिष्यसि ७, यच्च त्वया विबुधालंकृतं पद्मसरो दृष्टं, तेन चतुर्निकायजा देवास्त्वां सेविष्यति ८,यत्त्वया मालायुग्मं दृष्ट,तदर्थं तु नाहं जानामि,तदा भगवता प्रोक्त हे उत्पल! यन्मया दामयुग्मं दृष्टं, तेन अहं द्विविध धर्मं कथयिष्यामि, साधुधर्मं श्रावकधर्मं च ॥

तत उत्पलो वंदित्वा गत., तत्र स्वामी अष्टभिः अर्द्धमासक्षपणैस्तां प्रथमां चतुर्मासीमतिक्रम्य ततः स्वामी मोराकसन्निवेश गतस्तत्र प्रतिमास्थितस्य वीरस्य सत्कारार्थं सिद्धार्थो भगवद्देहं अधिष्ठाय निमित्तानि कथयति, भगवतो महिमा जायते स्म, भगवन्महिमानं दृष्ट्वा प्रद्विष्टेन अच्छंदकेन तृणछेदविषये प्रश्ने कृते सिद्धार्थो जनानां चौरोऽयमित्यवदत्, तत. कथमिति जनेषु पृच्छत्सु सिद्धार्थो जगौ, अनेन कर्मकरवीरघोषस्य दशपलप्रमितं वट्टलकं गृहीत्वा खर्जूरीवृक्षाध. स्थापितं, द्वितीय इन्द्रशर्मणः उरणको भक्षितस्तदस्थीनि सत्यवदर्या अधः स्थापितानि सति, तृतीयं तु अवाच्यं, अस्य भार्यैव कथयिष्यति, ततो जनैर्गत्वा भार्या पृष्टा, सापि तद्दिने तेन सह कृतकलहको-

पाडुवाच भो भो जना अदृष्टव्यमुखोऽयं पापात्मा, यदयं स्वभगिनीमपि भुंक्ते, ततः स नृशं लज्जितो विजने समागत्य स्वामिनं विज्ञपयामास, स्वामिन्त्वं विश्वपूज्यः सर्वत्र पूज्यसे, अहं तु अत्रैवं जीवामीति, ततः प्रभुस्तस्याऽप्रीतिं विज्ञाय ततो विहरन् श्वेतांव्यां गछन् जनैर्वार्यमाणोऽपि कनकखलतापसाश्रमे चंडकोशिकप्रतिबोधायागतः ॥ स च प्राग्भवे महातपस्वी साधुः, पारणके विहरणार्थं गमने जातां मंडूकीविराधनां इर्यापथिकीप्रतिक्रमणे गोचरचर्याप्रतिक्रमणे सायंप्रतिक्रमणे च त्रिशः क्षुल्लकेन स्मारितः सन् क्रुद्धस्तं शैक्षं हंतु धावितः, स्तंभेनास्फाल्य मृत्वा ज्योतिष्के देवो जातस्ततश्च्युतस्तत्राश्रमे पंचशततापसाधिपतिश्चंडकौशिकाख्यो बभूव, तत्रापि राजकुमारान् स्वाश्रमफलानि गृह्णतो विलोक्य क्रुद्धस्तान्निहंतुमुद्यतः, परशुहस्तो धावन् स कूपे पतितः, सक्रोधो मृत्वा तत्रैवाश्रमे पूर्वभवनाम्ना दृष्टिविषोऽहिर्बभूव, स च प्रभुं प्रतिमास्थं विलोक्य क्रुधा ज्वलन् सूर्यं दृष्ट्वा दृष्ट्वा दृष्टिज्वालामुमोच, मुक्त्वा च मा पतन्नयं मां आक्रामतु इत्यपसरति. ततो नृशं क्रुद्धो ददंश, तथापि भगवंतं अव्याकुलमेव दृष्ट्वा भगवद्रुधिरं च क्षीरसहोदरं दृष्ट्वा "बुज्झबुज्झ चंडकोशिआ" इति भगवद्वचनं समाकर्ण्य जातजाति-

स्मृतिः प्रभु त्रिःप्रदक्षिणीकृत्य अहो अहं करुणासमुद्रेण भगवता दुर्गतिकूपादुद्धृत इत्यादि मनसा चिंतयन् प्रपन्नानशनः पक्ष यावद्बिले तुंड प्रक्षिप्य स्थितो घृतादिविक्रेत्रीभिः पूजितो घृतगंधागतपिपीलिकाभिः भृशं पीड्यमान प्रभुदृष्टिसुधावृष्ट्या सिक्तो मृत्वा सहस्रारे सुरो बभूव, प्रभुरपि अन्यत्र विजहार ॥

उत्तरवाचालायां नागसेन स्वामिनं क्षीरेण प्रतिलंभितवान्, पंच दिव्यानि जातानि, ततः श्वेतांब्या प्रदेशी राजा स्वामिनो महिमानं कृतवान्, ततः सुरभिपुरं गच्छंतं स्वामिनं पंचभी रथैर्नैयका गोत्रिणो राजानो वंदितवंत, तत. सुरभिपुरं गतस्त गंगानद्युत्तारे सिद्धयात्रो नाविको लोकान् नावमारोहयति, भगवानपि तां नावमारूढस्तस्मिन्नवसरे च कौशिकारटितं श्रुत्वा नैमित्तिकः क्षेमिलो जगौ, अद्यास्माक मरणांतं कष्टं आपतिष्यति, परं „अस्य महात्मनः प्रभावात् संकट विलय यास्यति, एवं च गंगां उत्तरतः प्रभोस्त्रिपृष्ठभवविदारितसिंहजीवसुदंष्ट्रदेवकृतं नौमज्जनादिकं विघ्नं कंबलशबलनामानौ नागकुमारौ आगत्य निवारितवंतौ, तयोश्चोत्पत्तिरेवं—मथुरायां साधुदासीजिनदासौ दंपती, परमश्रावकौ, पंचमव्रते सर्वथा चतुष्पदप्रत्याख्यानं चक्रतुः, तत्र चैका आभीरी स्वकीय

गोरसं आनीय साधुदास्यै ददाति, सा च यथोचितं मूल्यं ददाति, एवं च कालेन तयोः अत्यंतं प्रीति-
र्जाता, एकदा तया आभीर्या विवाहे निमंत्रितौ तौ दंपती जगदतुः, यदुत नो आवाभ्यां आगंतुं न शक्य-
ते, परं यद् भवतां विवाहे युज्यते तदस्मद्गृहाद् ग्राह्यं, ततो व्यवहारिदत्तैश्चंद्रोदयाद्युपकरणैर्वस्त्राभ-
रणधूपादिभिश्च स आभीरविवाहोऽत्यंतं उत्कृष्टो जातस्तेन प्रमुदिताभ्यां आभीराभीरीभ्यां अ-
तिमनोहरौ समानवयसौ बालवृषभौ आनीय तयोर्दत्तौ, तौ नेच्छतः, बलाद् गृहे बध्वा तौ स्वगृहं
गतौ, व्यवहारिणा चिंतितं, यदि इमौ प्रेषयिष्येते तदा षंढीकरणभारोद्वहनादिभिर्दुःखिनौ भविष्य-
तः, इत्यादि विचिंत्य प्रासुकतृणजलादिभिस्तौ पोष्यमाणौ वाहनादिश्रमविवर्जितौ सुखं तिष्ठतः; अ-
न्यदा च अष्टम्यादिषु कृतपौषधेन तेन श्रावकेण पुस्तकादि वाच्यमानं निशम्य तौ भद्रकौ जातौ,
यस्मिन् दिने स श्रावक उपवासं करोति, तस्मिन् दिने तौ अपि तृणादि न भक्षयतः, एवं च तस्य
श्रावकस्यापि साधर्मिकत्वेन अत्यंतं प्रियौ जातौ; एकदा तस्य जिनदासस्य मित्रेण तौ अतिबलिष्ठौ
सुंदरौ वृषौ विज्ञाय तं श्रेष्ठिनं अनापृच्छ्यैव भंडीरवनयक्षयात्रायै अदृष्टधुरौ अपि तथा वाहितौ

यथा त्रुटितौ, आनीय तस्य गृहे बद्धौ, श्रेष्ठी च तौ तदवस्थौ विज्ञाय साश्रुलोचनो भक्तप्रत्याख्या-पननमस्कारदानादिभिर्निर्यामितवान्, ततस्तौ मृत्वा नागकुमारौ देवौ जातौ, तयोश्च नवीनोत्पन्नयो-र्दत्तोपयोगयोरेकतरेण नौ रक्षिता, अन्येन च प्रभु उपसर्गयन् सुदंष्ट्रसुरः प्रतिहतः, ततस्तं निर्जित्य भगवतः सत्त्वं रूपं च गायतौ नृत्यंतौ समहोत्सव सुरभिजलपुष्पवृष्टिं कृत्वा तौ स्वस्थानं गतौ ॥

भगवानपि राजगृहे नालंदायां तंतुवायशालैकदेशे अनुज्ञाप्य आद्यं मासक्षपणं उपपद्य तस्थौ, तत्र च मंखलिनाममंखपुत्रः सुभद्रांगजो बहुलद्विजगोशालायां जातत्वात् गोशालनामा मंखकिशोर उपाययौ,स च स्वामिनं मासक्षपणपारणके विजयश्रेष्ठिना कूरादिविपुलभोजनविधिना प्रतिलंभितं तत्र पंचदिव्यादिमहिमानं च निरीक्ष्य अहं त्वच्छिष्योऽस्मीति स्वामिन उवाच,ततो द्वितीयपारणायां नंदेन पक्वान्नादिना, ततस्तृतीयायां सुनंदेन परमान्नादिना स्वामी प्रतिलंभितः, चतुर्थमासक्षपणे कोल्लाग-सन्निवेशे भगवानागतस्तत्र बहुलनामा द्विजः पायसेन प्रतिलंभितवान्, पंच दिव्यानि च. गोशालश्च तस्यां ततुवायशालायां स्वामिनं अनिरीक्ष्य समग्रे राजगृहनगरे गवेषयन् स्वोपकरणं द्विजेभ्यो दत्वा

मुखं शिरश्च मुंडयित्वा, कोल्लाके भगवंतं दृष्ट्वा त्वत्प्रव्रज्या मम भवतु इत्युक्तवान्, ततस्तेन शिष्येण सह स्वामी सुवर्णखलग्रामं प्रति प्रस्थितो, मार्गे च गोपैर्महास्थाल्यां पायसं पच्यमानं निरीक्ष्य गोशालः स्वमिनं जगौ, अत्र भुक्त्वा गम्यते, सिद्धार्थेन च तद्भंगकथने गोपैर्यत्नेन रक्षितापि सा स्थाली भग्ना,ततो गोशालेन यद्भाव्यं तद्भवत्येवेति नियतिः स्वीकृता,ततः स्वामी ब्राह्मणग्राममगात्,तत्र नंदोपनंदभ्रातृद्वयसंबंधिनौ द्वौ पाटकौ,स्वामी नंदपाटके प्रविष्टः,प्रतिलाभितश्च नंदेन,गोशालस्तु उपनंदगृहे पर्युषितान्नदानेन रुष्टो,यद्यस्ति मे धर्माचार्यस्य तपस्तेजस्तदास्य गृहं दह्यतां, इति शशाप, तदनु तद्गृहं आसन्नदेवता ददाह, पश्चात्प्रभुश्चंपायां उपागतस्तत्र द्विमासक्षपणेन चतुर्मासीं अवसत्, चरमद्विमासपारणां च चंपाया बहिः कृत्वा कालासंनिवेशं गतः, स्थितश्च शून्यगृहे कायोत्सर्गेण, गोशालेन तु तत्रैव शून्यगृहे सीहो ग्रामणीपुत्रो विद्युन्मत्या दास्या सह क्रीडन् हसितः, कुट्टितश्च तेन, स्वामिनं प्राह, अहं एकाक्येव कुट्टितो यूयं किं न वारयत ? सिद्धार्थः प्राह; मैवं पुनः कुर्याः, ततः पात्रालके गतस्तत्स्थितवांश्च शून्यागारे, तत्र स्कंदः स्वदास्या स्कंदिलया सह क्रीडन् हसित-

स्तथैव तेन कुट्टितश्च, ततः स्वामी कुमारक सन्निवेशं गत्वा चंपारमणीयोद्याने कायोत्सर्गेण तस्थौ.

इतश्च श्रीपार्श्वनाथशिष्यो बहुशिष्यपरिवृतो मुनिचंद्रमुनिस्तत्र कुंभकारशालायां तस्थौ; तत्साधून् निरीक्ष्य गोशालः प्राह—के यूय, तैरुक्तं वय निर्ग्रंथाः, पुनः प्राह क्व यूय, क्व च मम धर्माचार्य', तैरूचे यादृशस्त्वं तादृशस्तव धर्माचार्योऽपि भविष्यति, ततो रुष्टेन गोशालेनोचे, मम धर्माचार्यतपसा दह्यतां युष्मदाश्रय',तैरूचे नेयं भीतिरस्माकं, पश्चात् स आगत्य सर्वं उवाच, सिद्धार्थो जगौ, नैते साधवो दह्यंते, रात्रौ जिनकल्पतुलनां कुर्वाणो मुनिचंद्रः कायोत्सर्गस्थो मत्तेन कुंभकारेण चौरभ्रांत्या व्यापादित', उत्पन्नावधिश्च स्वर्गं जगाम, सुरैर्महिमार्थं उद्योते कृते गोशालो जगौ, अहो तेषां उपाश्रयो दह्यते, तदा सिद्धार्थेन यथास्थिते कथिते स तत्र गत्वा तच्छिष्यान् निर्भर्त्स्यागत', ततः स्वामी चौरायां गतः, तत्र "चारिको हेरिको इति कृत्वा" रक्षका अगडे क्षिपंति, प्रथमं गोशाल· क्षिप्तः, प्रभुस्तु नाद्यापि, तावता तत्र सोमाजयंतीनाम्न्यौ उत्पलभगिन्यौ संयमाऽक्षमे प्रव्राजिकीभूते प्रभुं वीक्ष्य च ततः कष्टान्मोचयामासतुः, ततः प्रभुः पृष्ठचंपां प्राप्त', तत्र वर्षाश्चतुर्मासक्ष-

पयेनातिवाह्य बहिः पारयित्वा कायंगलसन्निवेशं गत्वा श्रावस्त्यां गतस्तत्र बहिः प्रतिमया स्थितस्तत्र सिद्धार्थेन गोशालाय प्रोक्तं, यत् अद्य त्वं मनुष्यमांसं भोक्ष्यसे, ततः सोऽपि तन्निवारणाय वणिग्गेहेषु भिक्षार्थं बभ्राम; तत्र च पितृदत्तो वणिक् तस्य भार्या च मृतापत्यप्रसूरस्ति, तस्याश्च नैमित्तिकशिवदत्तेनोक्तोऽपत्यजीवनोपायो यत् तस्य मृतबालकस्य मांसं पायसेन विमिश्रं कस्यचिद्भिक्षोर्देयं, तया च तेनैव विधिना गोशालाय दत्तं, गृहज्वालनभयाच्च गृहद्वारं परावर्तितं,गोशालोऽपि अज्ञातस्वरूपस्तद्भक्षयित्वा भगवत्समीपमागतः, सिद्धार्थेन यथास्थिते उक्ते वमनेन कृतनिर्णयश्च तद्गृहज्वालनाय आगतस्तद्गृहं अलब्ध्वा तं पाटकं एव भगवन्नाम्ना ज्वालितवान्, ततः स्वामी बहिर्दरिद्रसन्निवेशात् हरिद्रवृक्षस्य अधः प्रतिमया तस्थौ,पथिकप्रज्ज्वालिताग्निना अनपसरणात् प्रभोः पदौ दग्धौ,गोशालो नष्टः, ततः स्वामी मंगलाग्रामे वासुदेवगृहे प्रतिमया स्थितस्तत्र गोशालो डिंभभापनाय अक्षिविक्रियां कुर्वन् तत्पित्रादिभिः कुट्टितो मुनिपिशाच इत्युपेक्षितः ॥

ततः स्वामी आवर्त्तग्रामे बलदेवगृहे प्रतिमया स्थितः, तत्र गोशालेन बालभापनाय मुखत्रासो

विहितस्ततस्तत्पिलादयो ग्रथिलोऽयं किमनेन हतेन, अस्य गुरुरेव हन्यते इति भगवंतं हंतुं उद्यता-
स्तांश्च बलदेवमूर्तिरेव बाहुना लांगलं उत्पाट्य न्यवारयत्, ततः सर्वेऽपि स्वामिनं नतवंतः, ततः प्र-
भुः चोराकसन्निवेशं जगाम,तत्र मंडपे भोज्य पच्यमानं दृष्ट्वा गोशालः पुनः पुनः न्यग्भूय वेला वि-
लोकयतिस्म, ततस्तैश्चौरशंकया ताडितः, अनेनापि रुष्टेन स्वामिनाम्ना स मंडपो ज्वालितः, ततः
प्रभुः कलंबुकासन्निवेशं गतस्तत्र मेघकालहस्तिनामानौ द्वौ भ्रातरौ, तत्र कालहस्तिना उपसर्गितो
मेघेनोपलक्ष्य क्षमितः,ततः स्वामी क्लिष्टकर्मनिर्जरानिमित्तं लाटविषयं प्राप,तत्र हीलनादयो बहवो
घोरा उपसर्गा अध्यासिताः,ततः पूर्णकलशाख्येऽनार्यग्रामे गच्छतः स्वामिनो मार्गे द्वौ चौरौ अपशकु-
नधिया असिं उत्पाट्य हंतुं धावितौ, दत्तोपयोगेन शक्रेण च वज्रेण हतौ, ततः स्वामी भद्रिकापु-
र्यां वर्षाश्चतुर्मासीक्षपणपारणां बहिः कृत्वा कमालंबालग्रामं गतस्तत्र पार्श्वसंतानीयो बहुशिष्यपरि-
वृतो नंदिषेणनामाचार्यः प्रतिमास्थितश्चौरभ्रांत्या आरक्षकपुत्रेण भल्लाहतो जातावधिः स्वर्जगाम,शे-
षं गोशालवचनादि मुनिचंद्रवत्, ततः स्वामी कूपिकसन्निवेशं गतस्तत्र चारिकशंकया गृहीतः, पा-

श्रंतेवासिनीभ्यां प्रव्राजिकीभूताभ्यां विजयाप्रगल्लाभ्यां मोचितः, ततो गोशालः स्वामितः पृथग्भूतोऽन्यस्मिन् मार्गे गच्छन् पंचशतचौरैर्मातुल इति कृत्वा स्कंधोपरि आरुह्य वाहितः, खिन्नोऽचिंतयत्, स्वामिनैव सार्द्धं वरं, इति स्वामिनं मार्गयितुं लग्नः, स्वाम्यपि वैशाल्यां गत्वाऽयस्कारशालायां प्रतिमया स्थितस्तत्र एकोऽयस्कारः षण्मासीं यावद्रोगी भूत्वा नीरोगः सन्नुपकरणान्यादाय शालायां आगतः, स्वामिनं निरीक्ष्य अमंगलमिति बुद्ध्या घनेन हंतुमुद्यतोऽवधिना ज्ञात्वा आगत्य शक्रेण तेनैव घनेन हतः ॥

ततः स्वामी ग्रामाकसन्निवेशं गतस्तत्रोद्याने बिभेलकयक्षो महिमानं चक्रे, ततः शालिशीर्षे ग्रामे उद्याने प्रतिमास्थस्य स्वामिनो माघमासे त्रिपृष्ठभवापमानिता अंतःपुरी मृत्वा व्यंतरीभूता तापसीरूपं कृत्वा जलभृतजटाभिर्दुस्सहं शीतोपसर्गं चक्रे, प्रभुं च निश्चलं विलोक्य उपशांता स्तुतिं चकार, प्रभोश्च तं सहमानस्य षष्ठेन तपसा विशुध्यमानस्य लोकावधिरुत्पन्नः, ततः स्वामी भद्रिकायां षष्ठवर्षासु चतुर्मासतपो विविधानभिग्रहांश्च अकरोत्, तत्र पुनः षण्मासांते गोशालो मिलितः, ततः

स्वामी बहिः पारयित्वा कतुबन्धे मगधावनौ निरुपसर्गो विहृतवान्, तत आलंभिकायां सप्तमवर्षासु चतुर्मासिक्षपणेन स्थित्वा, बहिः पारयित्वा च कुंडगसन्निवेशे वासुदेवचैत्ये स्वामी प्रतिमया स्थितः, गोशालोऽपि वासुदेवप्रतिमायाः पराङ्मुखोऽधिष्ठान मुखे कृत्वा तस्थौ, कुट्टितश्च लोकैः, ततो मर्द्दन-ग्रामे बलदेवचैत्ये स्वामी प्रतिमया स्थितः, गोशालो बलदेवमुखे मेहनं कृत्वा तस्थौ, ततो लोकैः कुट्टितश्च, द्वयोरपि स्थानयोर्मुनिरिति कृत्वा मुक्तः, ततः क्रमात्प्रभुः उन्नागसंनिवेशे गतः, तत्र मार्गे संमुखागच्छद्दंतुरवधूवरौ मंखलिना हसितौ, यथा—तत्तिलो विहि राया । जणे वि दूरे वि जो जहिं वसइ ॥ ज जस्स होइ जुग्गं । तं तस्स विइज्जय देइ ॥ १ ॥ ततस्तैः कुट्टयित्वा वंशजाल्यां प्र-क्षिप्तः, स्वामिछत्रधरत्वात् मुक्तश्च, ततः स्वामी गोभूमिं ययौ, ततो राजगृहेऽष्टमं वर्षारात्रं अकरोत्, चतुर्मासिकतपश्च, अपरमपि मासद्वयं तत्रैव विहृतवान्, वसत्यभावाच्च नवमं वर्षारात्रं अनियतं अकार्षीत्, ततः कूर्मग्रामं गच्छन् मार्गे तिलस्तंबं दृष्ट्वा अयं निष्पत्स्यते न वेति गोशालः पप्रच्छ, ततः प्रभुणा सप्तापि तिलपुष्पजीवा मृत्वा एकस्यां शंबायां तिला भविष्यतीति प्रोक्ते तद्वचनं अन्यथा

कर्तुं तं स्तंबं उत्पाट्य एकांते मुमोच, ततः सन्निहितव्यंतरैर्मा प्रजुवचोऽन्यथा जवत्विति वृष्टिश्चक्रे, गोखुरेण च आर्द्रजूमौ स तिलस्तंबः स्थिरी बजूव. ततः प्रजुः कूर्मग्रामे गतस्तत्र च वैश्यायनतापसस्य आतापनागृहणाय मुत्कलमुक्तजटामध्ये यूकाबाहुल्यदर्शनात् गोशालो यूकाशय्यातर इति तं वारंवारं हसितवान्, ततस्तेन क्रुद्धेन तेजोलेश्या मुक्ता, तां च कृपारसांजोधिर्जगवान् शीतलेश्यया निवार्य गोशालं रक्षितवान् ॥

ततो मंखलिसूस्तस्य तापसस्य तेजोलेश्यां विलोक्य कथमियमुत्पद्यते इति जगवंतं पृष्टवान्, जगवानपि अवश्यं जावितया जुजंगस्य पयःपानमिव तादृगनर्थकारणंअपि तेजोलेश्याविधिं शिक्षितवान्, यथा आतापनापरस्य सदा षष्ठतपसः सनखकुल्माषपिंडिकया एकेन च उष्णोदकचुलुकेन पारणां कुर्वतः षण्मास्यंते तेजोलेश्योत्पद्यते इति, ततः सिद्धार्थपुरे व्रजन् गोशालेन स तिलस्तंबो न निष्पन्न इत्युक्ते, स एष तिलस्तंबो निष्पन्न इति प्रजुः प्रत्याह, गोशालोऽश्रद्दधत्तां तिलशंबां विदार्य सप्त तिलान् दृष्ट्वा, त एव प्राणिनस्तस्मिन्नेव शरीरे पुनःपरावृत्त्य समुत्पद्यंते इति मतिनियतिं च

गाढीकृतवान्, ततः प्रभोः पृथग्भूय श्रावस्त्यां कुंभकारशालास्थितो भगवदुक्तोपायेन तेजोलेश्यां साधयित्वा त्यक्तव्रतः श्रीपार्श्वनाथशिष्यात् अष्टांगनिमित्तं,चाधीत्याहङ्कारेण सर्वज्ञोऽहं इति ख्यापयतिस्म. यच्चोक्तं किरणावलीकारेण गोशालाय तेजोलेश्योपायः सिद्धार्थेनोक्त इति, तच्चिन्त्यं, आवश्यकवृत्तिवीरचरित्रादौ भगवतोक्त इत्यभिधानात्. ततः स्वामी श्रावस्त्यां दशमं वर्षारात्रं विचित्रं तपश्चाऽकरोदित्याद्यनुक्रमेण स्वामी बहुम्लेच्छां दृढभूमिं गतस्तस्यां बहिः पेढालग्रामात् पोलासचैत्येऽष्टमभक्तेन एकरात्रिकीं प्रतिमां तस्थिवान्, इतश्च सभागतः शक्रस्त्रैलोक्यजना अपि वीरचेतश्चालयितुं असमर्था इति प्रभोः प्रशंसां कृतवान्, तत् श्रुत्वा च अमर्षेण सामानिकः संगमाख्यः सुरः क्षणांतं चालयामीति शक्रसमक्षं कृतप्रतिज्ञः शीघ्रं प्रभुसमीप आगत्य प्रथमं धूलिवृष्टिं चकार,यया पूर्णाक्षिकर्णादिविवरः स्वामी निरुच्छ्वासोऽभूत् ॥ १ ॥ ततो वज्रतुंडपिपीलिकाभिश्चालनीतुल्यश्चक्रे, ताश्चैकतः प्रविशंति, अन्यतो निर्याति. (२) तथा वज्रतुण्डा उद्दंशाः, (३) तीक्ष्णतुण्डा घृतेलिकाः, (४) वृश्चिकाः, (५) नकुलाः, (६) सर्पाः, (७) मूषकाश्च (८) भक्षणादिना, तथा हस्तिनः (९)

हस्तिन्यश्च ( १० ) शुंडाघातचरणमर्दनादिना, पिशाचो ( ११ ) ऽट्टहासादिना, व्याघ्रो दंष्ट्रानखविदारणादिना, ( १२ ) ततः सिद्धार्थत्रिशले करुणाविलापादिना ( १३ ) उपसर्गयति, ततः स्कंधावारविकुर्वणा, तत्र च जनाः प्रभुचरणयोर्मध्येऽग्निं प्रज्ज्वाल्य स्थालीमुपस्थाप्य पचंति, ( १४ ) ततश्चंडालास्तीक्ष्णतुंडशकुनिपंजराणि प्रभोः कर्णबाहुमूलादिषु लंबयंति, ते च मुखैर्नक्षयंति, ( १५ ) ततः खरवातः पर्वतानपि कंपयन् प्रभुं उत्क्षिप्य पातयति, ( १६ ) ततः कलिकावातश्चक्रवद्भ्रामयति, ( १७) ततो येन मुक्तेन मेरुचूलापि चूर्णीस्यात्तादृशं सहस्रभारप्रमाणं चक्रं मुक्तं, तेन प्रभुराजानु भूमौ निमग्नः, ( १८ ) ततः प्रभातं विकृत्य वक्ति, देवार्य! अद्यापि किं तिष्ठसि, स्वामी ज्ञानेन रात्रिं वेत्ति, ( १९ ) ततो देवर्द्धिं विकुर्व्य, वृणीष्व महर्षे ! येन तव स्वर्गेण मोक्षेण वा प्रयोजनं, तथापि अक्षुब्धं देवांगना हावभावादिभिः उपसर्गयंति ( २० ). एवं एकस्यां रात्रौ विंशत्युपसर्गैस्तेन कृतैः मनागपि न चलितः स्वामी, अत्र कविः—

वलं जगध्ध्वंसनरक्षणक्षमं। कृपा च सा संगमके कृतागसि ॥ इतीव संचिंत्य विमुच्य मानसं

। रुपेण रोपस्तव नाथ निर्ममौ ॥ १ ॥ ततः षण्मासीं यावत् अनेषणीयाहारसंपादनादीन् तत्कृतान् नानाप्रकारान् उपसर्गान् सहमानो भगवान्निराहार एव, षण्मास्या स गतो भविष्यतीति विचिंत्य यावद् व्रजग्रामगोकुले गोचर्यांया प्रविष्टस्तावत्तत्रापि तत्कृतां अनेषणां विज्ञाय तथैवागत्य बहिः प्रतिमया तस्थौ, ततः स सुराधमः कथमपि अस्खलितं विशुद्धपरिणामं जगदीश्वरं अवधिना विज्ञाय विषण्णमानसोऽभिवंद्य सौधर्मं प्रति चचाल, स्वामी च तत्रैव गोकुले हिंडन् वत्सपाल्या स्थविरया परमान्नेन प्रतिलाभितो वसुधारा च निपतिता, इतश्च तावंतं कालं यावत् सर्वे सौधर्मवासिनो देवा देव्यश्च निरानंदा निरुत्साहास्तस्थुः, शक्रोऽपि वर्जितगीतनाट्य एतावतां उपसर्गाणां हेतुर्मत्कृता प्रशंसैवेति महादुःखाक्रांतचित्तः करकमलविन्यस्तमुखो दीनदृष्टिर्विमनस्कस्तस्थौ, ततश्च भ्रष्टप्रतिज्ञं श्याममुखं आगच्छंतं तं सुराधमं निरीक्ष्य शक्रः पराङ्मुखीभूय सुरानित्यूचे, हंहो सुरा असौ कर्मचंडालः पापात्मा समागच्छति, अस्य दर्शनं अपि महापापाय भवति, अनेनास्माकं बहु अपराद्धं, यदनेनास्मदीयः स्वामी कदर्थितः, अथ पापात्मा यथा अस्मत्तो न भीतस्तथा पातकादपि न भीतस्तदपवित्रोऽसौ दुरा-

रमा शीघ्रं स्वर्गान्निर्वास्यतां, इत्यादिष्टैः शक्रसुभटैर्निर्दयं यष्टिमुष्ट्यादिभिस्ताड्यमानः; सांगुलिमोटनं कृतान् सुराणां आक्रोशान् सहमानश्चौर इव साशंक इतस्ततो विलोकयन् निर्वाणांगार इव निस्तेजा निषिद्धाखिलपरिवार एकाकी अलर्कश्चैवं देवलोकान्निष्कासितो मंदरचूलायां एकसागरावशेषं आयुः समापयिष्यति, तस्याग्रमहिष्यश्च दीनाननाः शक्राज्ञया स्वभर्त्तारं अनुजग्मुः ॥

ततः स्वामिनमालंभिकायां हरिकांतः, श्वेतांबिकायां हरिसहश्च विद्युत्कुमारेंद्रौ प्रियं पृष्टुं एतौ, ततः श्रावस्त्यां शक्रः स्कंदप्रतिमायामवतीर्य स्वामिनं वंदितवान्, ततो महती महिमप्रवृत्तिः, ततः कौशांब्यां चंद्रसूर्यावतरणं, वाणारस्यां शक्रो, राजगृहे इशानो, मिथिलायां जनको राजा धरणेंद्रश्च प्रियं प्रछंतिस्म, ततो वैशाल्यां एकादशो वर्षारात्रोऽभूत्, तत्र भूतः प्रियं पृछति, ततः सुसुमारपुरं गतस्तत्र चमरोत्पातः, ततः क्रमेण कौशांब्यां गतस्तत्र शतानीको राजा, मृगावती देवी, विजया प्रतिहारी, वादीनामा धर्मपाठकः, सुगुप्तोऽमात्यस्तद्भार्या नंदा, सा च श्राविका, मृगावत्याः वयस्या, तत्र प्रभुणा पोषबहुलप्रतिपदि अभिग्रहो जगृहे, यथा द्रव्यतः कुल्माषान् सूर्पकोणस्थान्,

कोन्नत एकं पादं देहल्या अंतः, एकं पादं बहिश्च कृत्वा स्थिता, काष्ठतो निवृत्तेषु भिक्षाचरेषु, भावतो राजसुता दासत्वं प्राप्ता, मुंडितमस्तका निगडितचरणा, रुदती, अष्टमभक्तिका चेद्दास्यति तदा गृहीष्यामि, इत्यभिग्रह प्रत्यहं भिक्षायै भ्राम्यति, अमात्यादयोऽनेकानुपायान् कुर्वंति, नत्व-भिग्रहः पूर्यते, तदा च शतानीकेन चंपा भग्ना, तत्र च दधिवाहनभूपभार्या धारिणी, तत्पुत्री च वसुमती, द्वे अपि केनचित् पदातिना बंदितया गृहीते, तत्र च धारिणी त्वां भार्यां करिष्यामीति पत्तिवार्तया जिह्वाचर्वणेन मृता, ततो वसुमतीं पुत्रीति समाश्वास्य कौशांब्यां आनीय चतुष्पथे विक्रेतुं स्थपिता, तत्र धनावहश्रेष्ठिना गृहीत्वा चंदनेति कृताभिधाना, पुत्रीत्वेन स्थापितातीव प्रिया च, एकदा च स्वपादौ प्रक्षालयंत्यास्तस्याः श्रेष्ठिना स्वयं गृहीतां भूलुठद्वेणीं निरीक्ष्य मूला नाम्ना श्रेष्ठिप-त्नी गृहस्वामिनी तु इयमेव युवती भाविनी, अहं निर्माल्यप्राया इति विषण्णचित्ता तां शिरोमुंड-ननिगडक्षेपणपूर्वं यन्त्रमध्ये निरुध्य क्वापि गता, श्रेष्ठ्यपि कथमपि चतुर्थे दिने तच्छुद्धिं प्राप्य यंत्रं उद्घाट्य तां तदवस्थां देहल्यां संस्थाप्य सूर्पकोणे कुल्माषान् अर्पयित्वा निगडभंगार्थं लोह-

काराकारणाय यावज्ञतम्तावद्यदि कोऽपि भिक्षुरागच्छेत्तर्हि दत्वा कुल्माषान् भुंजे, इति चिंतयंत्यां भगवान् समागतः, सापि प्रमुदिता गृहाणेदं प्रभो इति जगौ, ततः स्वामी अभिग्रहे रोदनं न्यूनं निरीक्ष्य निवृत्तस्ततो वसुमती अहो अस्मिन्नवसरे भगवानागत्य किंचिदपि अगृहीत्वा निवृत्त इति दुःखतो रुरोद, ततः पूर्णाभिग्रहः स्वामी कुल्माषान् अगृहीत् ॥

अत्र कविः—चंदना सा कथं नाम । बालेति प्रोच्यते बुधैः ॥ मोक्षमादत्त कुल्माषै–र्महावीरं प्रतार्य या ॥ १ ॥ ततः पंच दिव्यानि, शक्रः समागतः, देवा ननृतुः, केशाः शिरसि संजाताः, निगडानि च नुपूराणि, ततो मातृस्वसुर्मृगावत्या मिलनं,तत्र च संबंधितया वसुधाराधनं आददानं शतानीकं निवार्य चंदनाज्ञया धनावहाय धनं दत्वा वीरस्य प्रथमा साध्वी इयं भविष्यतीत्यभिधाय शक्रस्तिरोदधे, ततः क्रमेण जृंभिकाग्रामे शक्रो नाट्यविधिं दर्शयित्वा इयद्भिर्दिनैर्ज्ञानोत्पत्तिः इत्यकथयत्, ततो मेंढिकग्रामे चमरेंद्रः प्रियं पप्रच्छ, ततः षण्मानिग्रामे स्वामिनो बहिःप्रतिमास्थस्य पार्श्वे गोपो वृषान् मुक्त्वा ग्रामं प्रविष्टः, आगतश्च पृच्छति, देवार्य क वृषभाः, भगवता च मौने कृते रुष्टेन

तेन स्वामिकर्णयो कटशिलाके तथा क्षिप्ते यथा परस्परं लग्नाग्रे, अग्रच्छेदनाच्च अदृश्याग्रे जाते, एतच्च कर्म शय्यापालकस्य कर्णयोस्त्रपुप्रक्षेपेण त्रिपृष्ठभवे उपार्जितं अभूत्, उदितं च वीरभवे, शय्यापालको भवं भ्रांत्वा अयमेव गोपः संजातस्ततः प्रभुर्मध्यमापापायां गतस्तत्र प्रभुं सिद्धार्थवणिग्गेहे भिक्षार्थं आगतं निरीक्ष्य खरकवैद्य. स्वामिनं सशल्य ज्ञातवान्, पश्चात् स वणिक् तेन वैद्येन सहोद्यानं गत्वा संडासकाभ्यां ते शलाके निर्गमयतिस्म, तदाकर्षणे च वीरेण आराटिस्तथा मुक्ता, यथा सकलमपि उद्यानं महाभैरवं बभूव, तत्र देवकुलमपि कारितं लोकैः, प्रभुश्च संरोहिण्या औषध्या नीरोगो बभूव, वैद्यवणिजौ स्वर्गं जग्मतुः, गोपः सप्तमं नरकं, एवं चोपसर्गाः गोपेन आरब्धास्तेनैव निष्ठिताश्च, एतेषां जघन्यमध्यमोत्कृष्टविभाग एवं–जघन्येषूत्कृष्टः कटपूतनाशीतं, मध्यमेषूत्कृष्टः कालचक्रं, उत्कृष्टेषूत्कृष्टं कर्णकीलकर्षणं,इति उपसर्गाः, एतान् सर्वान् सम्यग् सहते इत्याद्युक्तमेव ॥ ११७ ॥

यत एव परीषहान् सहते ततः, 'णं' वाक्यालंकारे, श्रमणो भगवान् महावीरः अणगारो

जातः, किं विशिष्टः? इर्या गमनागमनं तत्र समितः, सम्यक् प्रवृत्तिमान्, भाषायां समितः, एषणायां द्विचत्वारिंशद्दोषवर्जिताया भिक्षाया ग्रहणे सम्यक् प्रवृत्तिमान्, आदाने ग्रहणे, उपकरणादेरिति ज्ञेयं, भांडमात्राया वस्त्राद्युपकरणजातस्य, यद्वा भांडस्य वस्त्रादेर्मृन्मयभाजनस्य वा, मात्रस्य च पात्रविशेषस्य यन्निक्षेपणं मोचनं, तत्र च समितः प्रत्यवेक्ष्य प्रमार्ज्य मोचनात्, उच्चारः पुरिषं, प्रश्रवणं मूत्रं, खेलो निष्ठीवनं, सिंघानो नासिकानिर्गतं श्लेष्म, जल्लो देहमलः, एतेषां यत् परिष्ठापनं त्यागस्तत्र समितः सावधानः, शुद्धस्थंडिले परिष्ठापनात्, एतच्च अंत्यसमितिद्वयं भगवतो भांडासिंघानाद्यसंभवेऽपि नामाऽखंडनार्थमिह उक्तं, एवं मनसः सम्यक् प्रवर्तकः, वचसःसम्यक् प्रवर्तकः, कायस्य सम्यक् प्रवर्तकः, अशुभपरिणामान्निवर्त्तकत्वात् मनसि गुप्तः, एवं वचसि गुप्तः, काये गुप्तः, अत एव गुप्तः, गुप्तानि इंद्रियाणि यस्य स गुप्तेंद्रियः, गुप्तं च सत्यादिनववृत्तिविराजितं एवंविधं ब्रह्मचर्यं चरतीति गुप्तब्रह्मचारी, क्रोधरहितः, मानरहितः, मायारहितःलोभरहितः, शांतोऽतर्वृत्त्या, प्रशांतो बहिर्वृत्त्या, उपशांतोऽतर्बहिश्चोभयतः शांतः, अत एव परिनिवृत्तः, सर्वसंतापवर्जितः,

अनाश्रवः पापकर्मबंधरहितः, हिंसादिआश्रवद्वारविरतः, ममत्वरहितः, आकिंचनः, किंचनद्रव्यादि तेन रहितः, छिन्नस्त्यक्तो हिरण्यादिग्रंथो येन स तथा, निरुपलेपो भावभावमलापगमेन, तत्र द्रव्यमलः शरीरसंभवः, भावमलः कर्मजनितः, अथ निरुपलेपत्वं दृष्टांतैर्द्रढयति—कांस्यपात्रीव मुक्तं तोयमिव तोयं स्नेहो येन स तथा, यथा कांस्यपात्रं तोयेन न लिप्यते तथा भगवान् स्नेहेन न लिप्यते इत्यर्थः. तथा शंख इव निरंजनो, रजनं रागाद्युपरंजनं तेन शून्यत्वात्, जीव इव अप्रतिहतगतिः, सर्वत्राऽस्खलितविहारित्वात्, गगनमिव निरालंबनः, कस्याप्याधारस्य अनपेक्षणात्, वायुरिव अप्रतिबद्धः, एकस्मिन् स्थाने क्वाप्यवस्थानाऽभावात्, शारदसलिलमिव शुद्धहृदयः कालुष्याऽकलंकितत्वात्, पुष्करपत्रं कमलपत्रं तद्वन्निरुपलेपः, यथा कमलपत्रे जललेपो न लगति तथा भगवतः कर्मलेपो न लगतीत्यर्थः. कूर्म इव गुप्तेंद्रियः, खड्गिविषाणमिव एकजातः, यथा खड्गिनः श्वापदविशेषस्य विषाणं शृंगं एकं भवति, तथा भगवानपि रागादिना सहायेन च रहितत्वात्, विहग इव विप्रमुक्तः, मुक्तपरिकरत्वात्, अनियतनिवासाच्च. भारंडपक्षीव अप्रमत्तः; भारंडपक्षिणोः किलैकं शरीरं ॥

यतः—एकोदराः पृथग्ग्रीवा—स्त्रिपदा मर्त्यभाषिणः ॥ भारंडपक्षिणस्तेषां । मृतिर्भिन्नफलेछया ॥१॥ ते चात्यंतं अप्रमत्ता एव जीवंतीति तदुपमा, कुंजर इव शौंडीरः, कर्मशत्रून् प्रति शूरः, वृषभ इव जातस्थामा जातपराक्रमः, स्वीकृतमहाव्रतभारोद्वहनंप्रति समर्थत्वात्, सिंह इव दुर्द्धर्षः, परीषहादिश्वापदैरजय्यत्वात्, मंदर इव मेरुरिव अप्रकंपः, उपसर्गवातैरचलितत्वात्, सागर इव गंभीरः, हर्षविषादकारणसद्भावेऽपि अविकृतस्वभावत्वात्, चंद्र इव सौम्यलेश्यः शांतत्वाच्च, सूर्य इव दीप्ततेजाः, द्रव्यतो देहकांत्या, भावतो ज्ञानेन, जात्यकनकमिव जातं रूपं स्वरूपं यस्य स तथा, यथा किल कनकं मलज्वलनेन दीप्तं भवति, तथा भगवतोऽपि स्वरूपं कर्ममलविगमेन अतिदीप्तं अस्तीति भावः. वसुंधरा इव पृथ्वीव सर्वस्पर्शसहः, यथा हि शीतोष्णादि सर्वं पृथ्वी समतया सहते, तथा भगवानपि. सुष्टु हुतो घृतादिभिः सिक्त एवंविधो यो हुताशनोऽग्निस्तद्वत्तेजसा ज्वलन्, नास्त्ययं पक्षो यत्तस्य भगवतः कुत्रापि प्रतिबंधो भवति, तस्य भगवतः कुत्रापि प्रतिबंधं नास्तीति भावः. स च प्रतिबंधश्चतुर्विधः प्रज्ञप्तः, तद्यथा—द्रव्यतः, क्षेत्रतः, कालतः, भावतश्च. द्रव्यतस्तु प्रतिबंधः सचित्ताऽचित्तमिश्रितेषु द्रव्येषु;

सचित्तं वनितादि, अचित्तं आभरणादि, मिश्रं सालंकारवनितादि, तेषु, तथा क्षेत्रतः कापि ग्रामे वा, नगरे वा, अरण्ये वा, क्षेत्रं धान्यनिष्पत्तिस्थानं तत्र वा, खलं धान्यतुषपृथक्करणस्थानं, तत्र वा, गृहे वा, अगणे गृहाग्रभागस्तत्र वा, नभ आकाशं तत्र वा, तथा कालतः समयः सर्वसूक्ष्मकालः, उत्पलपत्रशतवेधजीर्णपटशाटिकापाटनादिदृष्टांतसाध्यस्तत्र वा, आवलिका असंख्यातसमयरूपा, आनप्राणो उच्छ्वासनिःश्वासकालः, स्तोकः सप्तोच्छ्वासमानः, क्षणे घटिपष्ठभागे वा, लवः सप्तस्तोकमानः, मुहूर्त्तः सप्तसप्ततिलवमानः, अहोरात्रे वा, पक्षे वा, मासे वा, ऋतौ वा, अयने वा, संवत्सरे वा, अन्यतरस्मिन् वा दीर्घकालसंयोगे युगपूर्वांगपूर्वादौ, जावत्. क्रोधे वा, माने वा, मायायां वा, लोभे वा, भये वा हास्ये वा, प्रेम्णि रागे वा, द्वेषे अप्रीतौ, कलहे वाग्युद्धे अभ्याख्याने मिथ्याकलंकदाने, पैशुन्ये प्रछन्नदोषप्रकटने, परपरिवादे विप्रकीर्णपरकीयगुणदोषप्रकटने, मोहनीयोदयाच्चित्तोद्वेगो अरतिः, रतिर्मोहनीयोदयाच्चित्तप्रीतिस्तत्र, मायया युक्ता मृषा मायामृषा तत्र, मिथ्यादर्शनं मिथ्यात्वं, तदेव अनेकदुःखहेतुत्वाच्छल्य मिथ्यादर्शनशल्य, तत्र, तस्य भगवतो एवं पूर्वोक्तस्वरू-

पेषु द्रव्य(१) क्षेत्र (२) काल (३) भावेषु (४) कुत्रापि प्रतिबंधो नैवास्तीति ॥ ११८ ॥

स भगवान् वर्षावासश्चतुर्मासी तां वर्जयित्वा अष्टौ ग्रीष्महेमंतसंबंधिनो मासान् ग्रामे एकरात्रिकः एकरात्रिवसनस्वभावः, नगरे पंचरात्रिकः, पुनः किं वि० वासी सूत्रधारस्य काष्ठछेदनोपकरणं, चंदनं प्रसिद्धं, तयोर्द्वयोर्विषये समानसंकल्पस्तुल्याध्यवसायः, पुनः किंवि० तृणादीनि प्रतीतानि, नवरं लेष्टुःपाषाणः, समानि तुल्यानि, तृणमणिलेष्टुकांचनानि यस्य स तथा, समे सुखदुःखे यस्य स तथा; इह लोके परलोके च अप्रतिबद्धः, अत एव जीवितमरणयोर्विषये निरवकांक्षो वांछारहितः, संसारस्य पारगामी, कर्मशत्रुनिर्घातनार्थं अभ्युत्थितः सोद्यमः, एवं अनेन क्रमेण भगवान् विहरति आस्ते ॥ ११९ ॥

तस्य भगवतः अनुत्तरेण अनुपमेन ज्ञानेन, अनुपमेन दर्शनेन, अनुपमेन चारित्रेण, अनुपमेन आलयेन, स्त्रीषंढादिरहितवसतिसेवनेन, अनुपमेन विहारेण, देशादिषु भ्रमणेन, अनुपमेन वीर्येण पराक्रमेण, अनुपमेन आर्जवं मायाया अभावस्तेन, अनुपमेन मार्दवं मानाऽभावस्तेन, अनुपमेन लाघवं द्रव्यतः अल्पोपधित्वं, भावतो गौरवत्रयत्यागस्तेन, अनुपमया क्षांत्या क्रोधाऽभावेन, अनुप-

मया मुक्त्या लोभाऽभावेन, अनुपमया गुप्त्या मनोगुप्त्यादिकया, अनुपमया तुष्ट्या मनःप्रसत्त्या, अनुपमेन सत्य संयमः प्राणिदया, तपो द्वादशप्रकारं, एतेषां यत्सुचरण सदाचरणं तेन कृत्वा सोपचय पुष्टं फलं मुक्तिलक्षणं यस्य एवंविधो यः परिनिर्वाणमार्गो रत्नत्रयरूपस्तेन, एवं उक्तेन सर्वगुणसमूहेन आत्मानं भावयतो द्वादश सवत्सरा व्यतिक्रांताः, ते चैवं–

एकं षण्मासक्षपणं, द्वितीयं षण्मासक्षपणं पंचदिनन्यूनं, नव चतुर्मासक्षपणानि, द्वे त्रिमासक्षपणानि, द्वे सार्द्धद्विमासक्षपणानि, षट् द्विमासक्षपणानि, द्वे सार्द्धैकमासक्षपणानि, द्वादश मासक्षपणानि, द्विसप्ततिःपक्षक्षपणानि, भद्रप्रतिमा दिनद्वयमाना, महाभद्रप्रतिमा दिनचतुष्कमाना, सर्वतोभद्रप्रतिमा दशदिनमाना, एकोनत्रिंशदधिकं शतद्वयं षष्ठाः, द्वादश अष्टमा., एकोनपंचाशदधिकं शतत्रय पारणा, दीक्षा दिन (१) ॥ ततश्चेदं जातं–'बारस चेव य वासा । मासा छच्चेव अद्धमासं च ॥ वीरवरस्स भगवओ । एसो छउमत्थपरिआओ ॥ १ ॥ इदं च सर्वतपो भगवता निर्जलं एव कृतं, न कदापि च नित्यभक्तं चतुर्थभक्तं च कृतं, एवं च त्रयोदशस्य संवत्सरस्य अंतरा वर्त्तमानस्य योऽसौ ग्रीष्म-

कालस्य द्वितीयो मासः, चतुर्थः पक्षः, वैशाखस्य शुक्लपक्षः, तस्य वैशाखशुक्लस्य दशमीदिवसे पूर्वगामिन्यां छायायां सत्यां पाश्चात्यपौरुष्यां अभिनिवृत्तायां जातायां सत्यां, कीदृशायां ? प्रमाणप्राप्तायां, न तु न्यूनाधिकायां सुव्रतनामके दिवसे, विजयनामके मुहूर्ते, जृंभिकग्रामनामकस्य नगरस्य बहिस्तात् ऋजुवालुकाया नद्यास्तीरे, व्यावृतं नाम जीर्णं, एवंविधं यच्चैत्यं व्यंतरायतनं तस्य नातिदूरे नातिसमीपे इत्यर्थः, श्यामाकस्य गृहपतेः कौटुंबिकस्य क्षेत्रे सालपादपस्य अधो गोदोहिकया उत्कटिकयानिषद्यया आतापनया आतापयतः प्रभोः षष्ठेन भक्तेन जलरहितेन उत्तराफाल्गुनीनक्षत्रे चंद्रेण योगं उपागते सति ध्यानस्य अंतरे मध्यभागे वर्तमानस्य, कोऽर्थः—शुक्लध्यानं चतुर्धा—पृथक्त्ववितर्कं सविचारं (१), एकत्ववितर्कं अविचारं ( २ ), सूक्ष्मक्रियं अप्रतिपाति ( ३ ), उच्छिन्नक्रियं अनिवर्त्ति ( ४ ), एतेषां मध्ये आद्यभेदद्वये ध्याते इत्यर्थः, अनंतवस्तुविषये, अनुपमे, निर्व्याघाते, भित्त्यादिभिरस्खलिते, समस्तावरणरहिते, समस्ते, सर्वावयवोपेते, एवंविधे केवलवरज्ञानदर्शने समुत्पन्ने ॥ १२० ॥

ततो ज्ञानोत्पत्त्यनंतरं श्रमणो भगवान् महावीरः अर्हन् जातः, अशोकादिप्रातिहार्यपूजायोग्यो

जातः, पुनः कीदृशः? जिनो रागद्वेषजेता, केवली सर्वज्ञः, सर्वदर्शी, देवमनुजाऽसुरसहितस्य लोकस्य पर्याय इत्यत्र जातावेकवचनं, ततः पर्यायान् जानाति पश्यति च साक्षात् करोति, तर्हि किं देवमनुजाऽसुराणां एव पर्यायमात्रं जानातीत्याह–सर्वलोके सर्वजीवानां आगतिं भवांतरात्, गतिं च भवांतरे, स्थितिं तद्भवसत्कं आयुः कायस्थितिं वा, च्यवनं देवलोकात्तिर्यग्नरेषु अवतरणं, उपपातो देवलोके नरकेषूत्पत्तिः, तेषां सर्वजीवानां सबंधि तर्क, ईदृशं यन्मनः मानसिकं, मनसि चिंतितं, भुक्तं अशनकलादि, कृतं चौर्यादि, प्रतिसेवितं मैथुनादि, आविःकर्म प्रकटकृतं, रहःकर्म प्रछन्नं कृतं, एतत् सर्वक सर्वजीवानां भगवान् जानातीति योजना, पुनः किंवि० प्रभुः? न विद्यते रहः प्रछन्नं यस्य त्रिभुवनस्य करामलकवद् दृष्टत्वात् अरहाः, रहस्य एकांतं तत्र भजते इति, तस्मिन् तस्मिन् काले मनोवचनकाययोगेषु यथार्हं वर्त्तमानानां सर्वलोके सर्वजीवानां सर्वभावान् पर्यायान् जानन् पश्यंश्च विहरति, ' सव जीवाणं ' इत्यत्र अकारप्रश्लेषात् सर्वाऽजीवानां धर्मास्तिकायादीनामपि सर्वपर्यायान् जानन् पश्यश्च विहरतीति व्याख्येयं ॥ १२१ ॥

इतश्च तस्मिन्नवसरे मिलितेषु सुराऽसुरेषु स्थले वृष्टिमिव निष्फलां देशनां दत्वा क्षणं प्रभुः अपापापुर्यां महसेनवने जगाम, तत्र च यज्ञं कारयतः सोमिलविप्रस्य गृहे बहवो ब्राह्मणा मिलिताः संति, तेषु च इंद्रभूति ( १ ) अग्निभूति ( २ ) वायुभूति ( ३ ) नामानस्त्रयः सहोदराश्चतुर्दशविद्याविशारदाः क्रमेण जीव ( १ ) कर्म ( २ ) तज्जीवतच्छरीर ( ३ ) संदेहवंतः पंचशतपरिवाराः संति । एवं व्यक्तः ( ४ ) सुधर्मा ( ५ ) चेति द्वौ द्विजौ तावत्परिवारौ तथैव विद्वांसौ क्रमात् पंच भूतानि संति न वेति (४) यो यादृशः स तादृशः (५)इति च संदेहवंतौ । तादृशौ एव च मंडित (६) मौर्यपुत्र (७) नामानौ बांधवौ सार्धत्रिशतपरिवारौ क्रमात् बंध ( ६ ) देव (७)विषयकसंदेहवंतौ । तथा अकंपितो (८) अचलभ्राता ( ९ ) मेतार्य ( १० ) प्रभासा ( ११ ) श्चेति चत्वारो द्विजाः प्रत्येकं त्रिशतपरिवाराः क्रमेण नैरयिक ( ८ ) पुण्य ( ९ ) परलोक ( १० ) मोक्ष ( ११ ) संदेहभाजस्तत्रागताः संति, ते चैकादशापि द्विजा एकैकसंदेहसद्भावेऽपि सर्वज्ञत्वाऽभिमानक्षतिभयात् परस्परं अपृच्छंति, एवं एते, तत्परिवारभूताश्चतुश्चत्वारिंशच्छतानि द्विजा अन्येऽपि उपाध्याय, शंकर, ईश्वर, शिवजी, जानी,

गंगाधर, महीधर, भूधर, लक्ष्मीधर, पिंड्या, विष्णु, मुकुंद, गोविंद, पुरुषोत्तम, नारायण, दुवे, श्रीपति, उमापति, गणपति, जयदेव, व्यास, महादेव, शिवदेव, मूलदेव, सुखदेव, गंगापति, गौरीपति, त्रिवाडी, श्रीकंठ, नीलकंठ, हरिहर, रामजी, बालकृष्ण, यदुराम, राम, रामाचार्य, राघव, मधुसूदन, नरसिंह, कमलाकर, सोमेश्वर, हरिशंकर, त्रिकम, जोसी, पूनो रामजी, शिवराम, देवराम, गोविंदराम, रघुराम, उदिराम इत्यादयो मिलिता· संति ॥

अत्रांतरे च भगवन्नमस्यार्थं आगच्छतः सुराऽसुरान् विलोक्य ते चिंतयंति, अहो! यज्ञस्य महिमा! यदेते सुरा· साक्षात्समागताः, अथ तान् यज्ञमंडप विहाय प्रभुपार्श्वे च गच्छतो विज्ञाय द्विजा विषेदुस्ततोऽमी सर्वज्ञं वंदितुं यांतीति जनश्रुत्या श्रुत्वा इंद्रभूति· सामर्षश्चिंतयामासिवान्, अहो! मयि सर्वज्ञे सत्यपि अपरोऽपि सर्वज्ञ ख्यापयति, दुःश्रवं एतत्कर्णकटु कथं नाम श्रूयते, किंच कदाचित् कोऽपि मूर्खः केनचिद्धूर्तेन वंच्यते, अनेन तु सुरा अपि वंचिताः, यदेवं यज्ञमंडप मां सर्वज्ञं च विहाय तत्समीपं गच्छति ॥ अहो सुराः कथ भ्रांता—स्तीर्थाम्भ इव वायसाः ॥ कमलाकरवद्भेका । म-

क्षिकाश्चंदनं यथा ॥ १ ॥ करभा इव सद्वृक्षान् । क्षीरान्नं शूकरा इव ॥ अर्कस्यालोकवद् घूकास्त्यक्त्वा यागं प्रयांति यत् ॥ २ ॥ अथवा यादृशोऽयं सर्वज्ञस्तादृशा एवैते, अनुरूप एव संयोगः;यतः—पश्यानुरूपमिंदि—दिणमाकंदशेखरो मुखरः ॥ अपि च पिचुमंदमुकुले । मौकुलिकुलमाकुलं मिलति ॥ १ ॥ तथापि नाहं एतस्य सर्वज्ञाटोपं सहे, यतः—व्योम्नि सूर्यद्वयं किं स्याद् । गुहायां केसरिद्वयं ॥ प्रत्याकारे च खड्गौ द्वौ । किं सर्वज्ञावहं स च ॥ १ ॥ ततो भगवंतं वंदित्वा प्रतिनिवर्त्तमानान् सोपहासं जनान् पप्रछ, भो भो दृष्टः स सर्वज्ञः ? किंदृग्रूपः ? किं स्वरूपं ? इति. जनैस्तु—यदि त्रिलोकीगणनापरः स्यात् । तस्याः समाप्तिर्यदि नायुषः स्यात् ॥ पारे परार्ध्यं गणितं यदि स्यात् । गणेयनिःशेषगुणोऽपि स स्यात् ॥ १ ॥ इत्यांगुक्ते सति स दध्यौ—नूनमेष महाधूर्त्तो । मायायाः कुलमंदिरं ॥ कथं लोकः समस्तोऽपि । विभ्रमे पातितोऽमुना ॥ २ ॥ न क्षमे क्षणमात्रं तु । तं सर्वज्ञं कदाचन ॥ तमःस्तोममपाकर्त्तुं । सूर्यो नैव प्रतीक्षते ॥ ३ ॥ वैश्वानरः करस्पर्शं । केसरोल्लुंचनं हरिः ॥ क्षत्रियश्च रिपुक्षेपं । न सहंते कदाचन ॥ ४ ॥ मया हि येन वादींद्रा—स्तूष्णीं संस्थापिताः समे ॥

गेहे शूरतरः कासौ । सर्वज्ञो मत्पुरो भवेत् ॥ ५ ॥ शैला येनाग्निना दग्धा. । पुरः के तस्य पादपाः
॥ उत्पाटिता गजा येन । का वायोस्तस्य पुम्भिका. ॥ ६ ॥
किंच—गता गौडदेशोद्भवा दूरदेशं । भयाज्जर्जरा गौर्जराश्चासमीयुः ॥ मृता मालवीयास्तिलङ्गा-
गास्तिलंगो-द्भवा जज्ञिरे पक्किता मद्भयेन ॥ ७ ॥ अरे लाटजाताः क याताः प्रणष्टाः । पटिष्ठा अपि
द्राविडा ह्रीकयार्त्ताः ॥ अहो वादिलिप्सातुरे मय्यमुष्मिन् । जगत्युत्कटं वादिदुर्भिक्षमेतत् ॥ ८ ॥
तस्य ममाग्रे कोऽसौ । वादी सर्वज्ञमानमुद्वहति ॥ इति तत्र गंतुमुत्कं । तमग्निभूतिर्जगादेवं ॥ ९ ॥
किं तत्र वादिकीटे । तव प्रयासेन यामि वधोऽहं ॥ कमलोन्मूलनहेतो-र्नेतव्यः किं सुरेन्द्रगजः ॥ १० ॥
अकथयदथेन्द्रभूति-र्यद्यपि मदात्तजय्य एवासौ ॥ तदपि प्रवादिनाम । श्रुत्वा स्थातुं न शक्नोमि ॥ ११ ॥
पीलयतस्तिलः कश्चित् । दलितश्च यथा कणः ॥ सूदयतस्तृण किंचि-दगस्तेः पिबतः सरः ॥ १२ ॥
मर्दयतस्तुषः कोऽपि । तद्वदेष ममाऽभवत् ॥ तथापि सासहिर्न हि । मुधा सर्वज्ञवादिनं ॥ १३ ॥
एकस्मिन्नजिते ह्यस्मिन् । सर्वमप्यजितं भवेत् ॥ एकदा हि सती लुप्त-शीला स्यादसती सदा ॥ १४ ॥

चित्रं नैव त्रिजगति । सहस्रशो निर्जिते मया वादैः ॥ क्दिप्रचटस्थाल्यामिव । कंकटुकोऽसौ स्थितो वादी ॥ १५ ॥ अस्मिन्नजिते सर्वं । जगज्जयोद्भूतमपि यशो नश्येत् ॥ अल्पमपि शरीरस्थं । शल्यं प्राणान् वियोजयति ॥ १६ ॥ यतः—छिद्रे स्वल्पेऽपि पोतः किं । पाथोधौ न निमज्जति ॥ एकस्मिन्निष्टके कृष्टे । दुर्गः सर्वोऽपि पात्यते ॥ १७ ॥ इत्यादि विचिंत्य विरचितद्वादशतिलकः स्वर्णयज्ञोपवीतविभूषितः स्फारपीतांबराडंबरः, कैश्चित्पुस्तकपाणिभिः, कैश्चित्कमंडलुपाणिभिः, कैश्चिद्दर्भपाणिभिः, सरस्वतीकंठाभरण, वादिविजयलक्ष्मीशरण, वादिमदगंजन, वादिमुखभंजन, वादिगजसिंह, वादीश्वरलीह, वादिसिंहअष्टापद, वादिविजयविशद, वादिवृंदभूमिपाल, वादिशिरःकाल, वादिकदलीकृपाण, वादितमोभानो, वादिगोधूमघरट्ट, मर्दितवादिमरट्ट, वादिघटमुद्गर, वादिघूकभास्कर, वादिसमुद्रागस्ते, वादितरून्मूलनहस्तिन्, वादिसुरेंद्र, वादिगरुडगोविंद, वादिजनराजन्, वादिकंसकाहान, वादिहरिणहरे, वादिज्वरधन्वंतरे, वादियूथमल्ल, वादिहृदयशल्य, वादिगणजीपक, वादिशलभदीपक, वादिचक्रचूडामणे, पंडितशिरोमणे, विजितानेकवाद, सरस्वतीलब्धप्रसाद, इत्यादि विरुदवृंद-

मुखरितदिक्चक्रैः पंचभिः छात्रशतैः परिवृत इंद्रभूतिः श्रीवीरसमीपं गमनायोत्तिष्ठति, अहो दुष्टेन अ-
नेन किमेतत् कृतं, यदहं सर्वज्ञाटोपेन प्रकोपितः, यतः-कृष्णसर्पस्य मंडूक-श्चपेटां दातुमुद्यतः
॥ मूषको रदेश्च मार्जार-दंष्ट्रापाताय सादरः ॥ १ ॥ वृषजः स्वर्गजं शृंगैः । प्रहर्तुं कांक्षति द्रुतं ॥
द्विपः पर्वतपाताय । दंताभ्यां यतते रयात् ॥ २ ॥ शशकः केसरिस्कंध-केसरान् क्रष्टुमीहते ॥ मद्-
दृष्टो यदसौ सर्व-स्तत्वं स्थापयते जने ॥ ३ ॥ शेषशीर्षमणिं घातुं । हस्तः स्वीयः प्रसारितः ॥
सर्वज्ञाटोपतोऽनेन । यदहं परिकोपितः ॥ ४ ॥ समीराजिमुखस्येन । दवाग्निर्ज्वालितोऽमुना ॥ कपि-
कच्छूकृता देहे । सौख्याय परिलिंगिता ननु ॥ ५ ॥ भवतु किमेतेन, अधुना निरुत्तरीकरोमि, यतः-ता-
वद्गर्जति खद्योत-स्तावद्गर्जति चंद्रमाः ॥ उदिते तु सहस्रांशौ । न खद्योतो न चंद्रमाः ॥६॥ सारंगमा-
तंगतुरंगपुगाः। पलायतामाशु वनादमुष्मात् ॥ साटोपकोपस्फुटकेसरश्री-मृगाधिराजोऽयमुपैति यावत्
॥७॥ मम भाग्यवशायद्वा । वादाय समुपस्थितः ॥ अद्य तां रसनाकंडु-मपनेष्ये विनिश्चितं ॥८॥ लक्ष-
णे मम दक्षत्वं । साहित्ये संहिता मतिः ॥ तर्के कर्कशताऽत्यर्थं । क्व शास्त्रे नास्ति मे श्रमः ॥ ९ ॥

यमस्य मालवो दूरे । किं स्यात् को वा वचस्विनः ॥ अपोषितो रसो नूनं । किमजेयं च चक्रिणः ॥ १० ॥ अजेयं किमु वज्रस्य । किमसाध्यं महात्मनां ॥ क्षुधितस्य न किं खाद्यं । किं न वाच्यं खलस्य च ॥ ११ ॥ कल्पद्रूणामदेयं किं । निर्विषानां किमत्यजं ॥ गच्छामि तर्हि तस्यांते । पश्याम्येतत्पराक्रमं ॥ १२ ॥ तथा ममापि त्रैलोक्य–जित्वरस्य महौजसः ॥ अजेयं किमिवास्तीह । तज्जच्छामि जयाम्यमुं ॥ १३ ॥

इत्यादि चिंतयन् प्रभु–मवेदय सोपानसंस्थितो दध्यौ ॥ किं ब्रह्मा किं विष्णुः । सदाशिवः शंकरः किं वा ॥ १४ ॥ चंद्रः किं स न यत्कलंककलितः सूर्योऽपि नो तीव्ररुक् । मेरुः किं न स यन्नितांतकठिनो विष्णुर्न यत् सोऽसितः ॥ ब्रह्मा किं न जरातुरः स च जराभीरुर्न यत्सोऽतनुः । ज्ञातं दोषविवर्जिताखिलगुणाकीर्णोऽतिमस्तीर्थकृत् ॥ १५ ॥ हेमासिंहासनासीनं । सुरराजनिषेवितं ॥ दृष्ट्वा वीरं जगत्पूज्यं । चिंतयामास चेतसि ॥ १६ ॥ कथं मया महत्त्वं हा । रक्षणीयं पुरार्जितं ॥ प्रासादं कीलिकाहेतो–र्भंक्तुं को नाम वांछति ॥ १७ ॥ एकेनाऽविजितेनापि । मानहानिस्तु

का मम ॥ जगज्जैत्रस्य किं नाम । करिष्यामि च सांप्रतं ॥ १८ ॥ अविचारितकारित्वं । अहो मे मदडुर्द्धिय. ॥ जगदीशावतारं यत् । जेतुमेनं समागतः ॥ १९ ॥ अस्याग्रेऽहं कथं वक्ष्ये । पार्श्वे यास्यामि वा कथं ॥ संकटे पतितोऽस्मीति । शिवो रक्षतु मे यशः ॥ २० ॥ कथञ्चिदपि भाग्येन । चे-द्भवेदत्र मे जय. ॥ तदा पण्डितमूर्द्धन्यो । भवामि भुवनत्रये ॥ २१ ॥ इत्यादि चिंतयन्नेव । सुधामधुरया गिरा ॥ आभाषितो जिनेंद्रेण । नामगोत्रोक्तिपूर्वकं ॥ २२ ॥

हे गौतमेंद्रभूते त्वं । सुखेनागतवानसि ॥ इत्युक्तेऽचिंतयद्धेत्ति । नामापि किमसौ मम ॥२३॥ जगत्त्रितयविख्यातं । को वा नाम न वेत्ति मां ॥ जनस्याबालगोपालं । प्रछन्नः किं दिवाकरः ॥ २४ ॥ प्रकाशयति गुप्तं चेत् । संदेहं मे मनः स्थितं ॥ तदा जानामि सर्वज्ञं । अन्यथा तु न किंचन ॥ २५ ॥ चिंतयतमिति प्रोचे । प्रभुः को जीवसंशयः ॥ विभावयसि नो वेद-पदार्थं शृणु तान्यथ ॥ २६ ॥ समुद्रो मथ्यमानः किं । गंगापूरोऽथवा किमु ॥ आदिब्रह्मध्वनिः किं वा । वीर-वेदध्वनिर्बभौ ॥ २७ ॥ वेदपदानि च–विज्ञानघन एवैतेभ्यो भूतेभ्य समुत्थाय तान्येवानुविनश्यति,

न प्रेत्यसंज्ञास्तीति. त्वं तावत् एतेषां पदानां अर्थं एवं करोषि, यत् विज्ञानघनो गमनादिचेष्टावान् आत्मा एतेभ्यो भूतेभ्यः पृथिव्यप्तेजोवाय्वाकाशेभ्यः समुत्थाय प्रकटीभूय मद्यांगेषु मदशक्तिरिव, ततस्तानि भूतान्येव अनुविनश्यति, तत्रैव विलयं याति जलेषु बुद्बुदा इव, ततो भूतातिरिक्तस्य आत्मनोऽभावात् न प्रेत्यसंज्ञास्ति, मृत्वा पुनर्जन्म नास्तीति। परं अयुक्तोऽयमर्थः, श्रुणु तावदेतेषां अर्थं, विज्ञानघन इति कोऽर्थः, विज्ञानघनो, ज्ञानदर्शनोपयोगात्मकं विज्ञानं, तन्मयत्वादात्मापि विज्ञानघनः, प्रतिप्रदेशं अनंतज्ञानपर्यायात्मकत्वात्, स च विज्ञानघन उपयोगात्मक आत्मा, कथं-चिद्भूतेभ्यस्तद्विकारेभ्यो वा घटादिभ्यः समुत्तिष्ठते उत्पद्यते इत्यर्थः, घटादिज्ञानपरिणतो हि जीवो घटादिभ्य एव हेतुभूतेभ्यो भवति, घटादिज्ञानपरिणामस्य घटादिवस्तुसापेक्षत्वात्, एवं च एते-भ्यो भूतेभ्यो घटादिवस्तुभ्यस्तत्तदुपयोगतया जीवः समुत्थाय समुत्पद्य तान्येव अनुविनश्यति, कोऽर्थस्तस्मिन् घटादौ वस्तुनि नष्टे व्यवहिते वा जीवोऽपि तदुपयोगरूपतया नश्यति, अन्योपयोगरूपतया उत्पद्यते, सामान्यरूपतया वा अवतिष्ठते, ततश्च न प्रेत्यसंज्ञास्ति, कोऽर्थः?

–न प्राक्तनी घटाद्युपयोगरूपा संज्ञा अवतिष्ठते, वर्त्तमानोपयोगेन तस्या नाशितत्वादिति, परं च स वै अय आत्मा ज्ञानमय इत्यादि, तथा ददद, कोऽर्थः–दमो दानं दया, इति दकारत्रयं यो वेत्ति स जीवः, किंच विद्यमानभोक्तृक इदं शरीरं भोग्यत्वात् ओदनादिवत्, इत्याद्यनुमानेनापि, 'तथा, क्षीरे घृत तिले तैलं । काष्ठेऽग्निः सौरभं सुमे ॥ चंद्रकांते सुधा यद्वत् । तथात्मांगगतः पृथक् ॥ १ ॥ एवं च प्रभुवचनैः छिन्नसंदेहः श्रीइन्द्रभूतिः पंचशतपरिवारः प्रव्रजितः, तत्क्षणाच्च ' उपन्नेइ वा ( १ ) विगमेइ वा ( २ ) धुवेइ वा ( ३ ) ' इति प्रभुवदनात्त्रिपदीं प्राप्य द्वादशांगीं रचितवान्, इति प्रथमगणधरः ॥ १ ॥

तं च प्रव्रजितं श्रुत्वा । दध्यौ तद्बांधवोऽपरः ॥ अपि जातु द्रवेदद्रि–र्हिमानि प्रज्वलेदपि ॥ १ ॥ वह्निः शीतः स्थिरो वायुः । संभवेन्न तु बांधवः ॥ हारयेदिति पप्रच्छ । लोकानश्रद्दधद् भृशं ॥ २ ॥ ततश्च निश्चये ज्ञाते । चिंतयामास चेतसि ॥ गत्वा जित्वा च तं धूर्त्तं । वालयामि सहोदरं ॥ ३ ॥ सोऽप्येवमागतः शीघ्रं । प्रभुणा भाषितस्तथा ॥ संदेहं तस्य चित्तस्य । व्यक्तीकृत्याऽवदद्विभुः

॥ ४ ॥ हे गौतमाग्निभूते कः । संदेहस्तव कर्मणः ॥ कथं वा वेदतत्त्वार्थं । विज्ञावयसि न स्फुटं ॥ ५ ॥ स चायं–पुरुष एवेदं ग्निं सर्वं यद्भूतं यच्च भाव्यं, इत्यादि, तत्र ' ग्निं ' इति वाक्यालंकारे, यद् भूतं अतीतकाले, यच्च भाव्यं भाविकाले, तत् सर्वं इदं पुरुष एव आत्मैव, एवकारः कर्मेश्वरादिनिषेधार्थः; अनेन वचनेन यन्नरामरतिर्यक्पर्वतपृथ्व्यादिकं यद्वस्तु दृश्यते, तत्सर्वं आत्मैव, ततः कर्मनिषेधः स्फुट एव, किं च अमूर्त्तस्य आत्मनो मूर्त्तेन कर्मणा अनुग्रह उपघातश्च कथं भवति ? यथा आकाशस्य चदनादिना मंडनं, खड्गादिना खंडनं च न संभवति, तस्मात् कर्म नास्ति, इति तव चेतसि वर्तते, परं हे अग्निभूते ! नायमर्थः समर्थः, यत् इमानि पदानि पुरुषस्तुतिपराणि, यथा त्रिविधानि वेदपदानि, कानिचिद्विधिप्रतिपादकानि, यथा स्वर्गकामोऽग्निहोत्रं जुहुयादित्यादीनि, कानिचित् अनुवादपराणि, यथा द्वादश मासाः संवत्सर इत्यादीनि, कानिचित् स्तुतिपराणि, यथा इदं पुरुष एवेत्यादीनि, ततोऽनेन पुरुषस्य महिमा प्रतीयते, न तु कर्माद्यभावः, यथा— जले विष्णुः स्थले विष्णुः । विष्णुः पर्वतमस्तके ॥ सर्वभूतमयो विष्णु–स्तस्माद्विष्णुमयं जगत् ॥ १ ॥ अनेन वाक्येन

विष्णोर्महिमा प्रतीयते, न तु अन्यवस्तूनां अभावः, किंच अमूर्त्तस्यात्मनो मूर्त्तेन कर्मणा कथं अनुग्रहोपघातौ ? तदपि अयुक्तं, यत् अमूर्त्तस्यापि ज्ञानस्य मद्यादिना उपघातः, ब्राह्म्याद्यौषधेन च अनुग्रहो दृष्ट एव, किंच कर्मविना एकः सुखी अन्यो दुःखी, एकः प्रभुरन्यः किंकर इत्यादि प्रत्यक्ष जगद्वैचित्र्य कथं नाम संभवतीति श्रुत्वा गतसंशयः प्रव्रजितः, इति द्वितीयो गणधरः ॥ २ ॥

अथ वायुभूतिरपि तौ प्रव्रजितौ श्रुत्वा यस्य इन्द्रभूत्यग्निभूती शिष्यौ जातौ, स ममापि पूज्य एव तत्समीपं गत्वाऽहमपि, संशयं पृच्छामि इति सोऽप्यागतः, एवं सर्वेऽप्यागताः, भगवतापि सर्वेऽपि प्रतिबोधिताः, तत्क्रमश्चायं—तज्जीवतच्छरीर—संदिग्धं वायुभूतिनामानं ॥ ऊचे विभुर्यथास्थं। वेदार्थं किं न भावयसि ॥ १ ॥ यतः—' विज्ञानघन एवैतेभ्यो भूतेभ्यः ' इत्यादिवेदपदैस्तु भूतेभ्यो जीवः पृथग् नास्ति इति प्रतीयते, तथा ' सत्येन लभ्यस्तपसा ह्येष ब्रह्मचर्येण नित्यं ज्योतिर्मयो हि शुद्धोऽयं पश्यंति धीरा यतयः संयमात्मान इत्यादि' अस्यार्थः—एष ज्योतिर्मयः शुद्ध आत्मा सत्येन तपसा ब्रह्मचर्येण लभ्यो ज्ञेय इत्यर्थः, एभिस्तु वेदपदैर्भूतेभ्यः पृथक् आत्मा प्रतीयते, ततस्तव संदेहः,

यदुत यच्छरीरं स एवात्मा अन्यो वेति, परं अयुक्तं एतत्, यस्मात् विज्ञानघनेत्यादिभिरपि पदैः असद्‌ुक्तार्थप्रकारेण आत्मसत्ता प्रकटैव ॥ इति तृतीयो गणधरः ॥ ३ ॥

पंचसु भूतेषु तथा । संदिग्धं व्यक्तसंज्ञकं विबुधं ॥ ऊचे विभुर्यथास्थं । वेदार्थं किं न भावयसि ॥ १ ॥ ' येन स्वप्नोपमं वै सकलं, इत्येष ब्रह्मविधिरंजसा विज्ञेय इति ' अस्यार्थः–वै निश्चितं सकलं एतत् पृथिव्यादिकं स्वप्नोपमं असत्, अनेन वेदवचसा तावद्भूतानां अभावः प्रतीयते ॥ पृथ्वी देवता, आपो देवता, इत्यादिभिस्तु भूतसत्ता प्रतीयते इति संदेहः, परं अविचारितं एतत् यस्मात् स्वप्नोपमं वै सकलं, इत्यादीनि पदानि अध्यात्मचिंतायां कनककामिन्यादिसंयोगस्य अनित्यत्वसूचकानि, न तु भूतनिषेधपराणीति चतुर्थो गणधरः ॥ ४ ॥

यो यादृशः स तादृश । इति संदिग्धं सुधर्मनामानं ॥ ऊचे विभुर्यथास्थं । वेदार्थं किं न भावयसि ॥ १ ॥ यतः–' पुरुषो वै पुरुषत्वमश्नुते, पशवः पशुत्वं ' इत्यादीनि भवांतरसादृश्यप्रतिपादकानि ॥ तथा ' शृगालो वै एष जायते यः स पुरुषो दह्यते, इत्यादीनि भवांतरवैसदृश्यप्रतिपाद-

कानि वेदपदानि दृश्यते, इति तव संदेहः, परं नायं सुंदरो विचारः, यस्मात् ' पुरुषो वै पुरुषत्वमश्नुते ' इत्यादीनि यानि पदानि तानि, मनुष्योऽपि कश्चिन्मार्दवादिगुणोपेतो मनुष्यायुष्कर्म बध्वा पुनरपि मनुष्यो भवति, इत्यर्थनिरूपकाणि, न तु मनुष्यो मनुष्य एव भवतीति निश्चीयकानि, तथा कथं मनुष्यः पशुर्भवति, न हि शालिबीजाद्गोधूमांकुरः संभवतीति या तव चित्ते युक्तिः प्रतिभाति, सापि न समीचीना, यतो गोमयादिभ्यो वृश्चिकाद्युत्पत्तेर्दर्शनात् कार्यवैसदृश्य अपि संभवत्येवेति पंचमो गणधरः ॥ ५ ॥

अथ बंधमोक्षविषये । संदिग्धं मंडिताभिधं विबुधं ॥ ऊचे विभुर्यथास्य । वेदार्थं किं न भावयसि ॥ १ ॥ यतः—' स एष विगुणो विभुर्न बध्यते संसरति वा, मुच्यते मोचयति वा ' त्वं तावत् एतेषां पदानां अर्थं एवं करोषि, यत् स एष अविकृतो जीवः, कथंभूतो त्रिगुणः सत्वादिगुणरहितो विभुः सर्वव्यापको न बध्यते पुण्यपापाभ्यां न युज्यते, नकारस्य सर्वत्र योजनात्, न संसरति न संसारे परिभ्रमति, न मुच्यते कर्मणा, बंधाऽभावात्, नाप्यन्यं मोचयति, अकर्तृकत्वात् ॥ परं नाय

अर्थः समर्थः, किंतु स एष आत्मा किं विशिष्टो विगुणो विगतछाद्मस्थिकगुणः, पुनः कीदृशो विज्ञुः केवलज्ञानवान्, केवलज्ञानस्वरूपेण विश्वव्यापकत्वात्, एवंविध आत्मा पुण्यपापाभ्यां न युज्यते, इतिसुस्थं, इति षष्ठो गणधरः ॥

अथ देवविषयसंदेह–संयुतं मौर्यपुत्रनामानं ॥ ऊचे विज्ञुर्यथास्थं । वेदार्थं किं न भावयसि ॥ १ ॥ यतः–' को जानाति मायोपमान् गिर्वाणान् इंद्रयमवरुणकुबेरादीनिति ' पदैर्देवनिषेधः प्रतीयते, ' स एष यज्ञायुधी यजमानोंजसा स्वर्गलोके गच्छतीति ' पदैस्तु देवसत्ता प्रतीयते, इति तत्र संदेहः, परं अविचार्यं एतत् यत् एते त्वया मया च प्रत्यक्षं एव दृश्यंते देवाः, यत्तु वेदे मायोपमानित्युक्तं तद्देवानां अपि अनित्यसूचकं, इति सप्तमो गणधरः ॥ ७॥

अथ नारकसंदेहात् । संदिग्धमकंपितं विबुधमुख्यं ॥ ऊचे विज्ञुर्यथास्थं । वेदार्थं किं न भावयसि ॥ १ ॥ यस्मात् ' नह वै प्रेत्य नरके नारकाः संति ' इत्यादिपदैर्नारकाऽभावः प्रतीयते, ' नारको वै एषः जायते यः शूद्रान्नमश्नातीत्यादि ' पदैस्तु नारकसत्ता प्रतीयते, इति तत्र संदेहः,

परं ' नह वै प्रेत्य नारकाः संतीति ' कोऽर्थ –प्रेत्य परलोके केचिन्नारका मेर्वादिवत् शाश्वता न संति, किं तु यः कश्चित् पापमाचरति स नारको भवति, अथवा नारका मृत्वानंतरं नारकतया नोत्पद्यंते इति प्रेत्य नारका न संतीत्युच्यते, इति अष्टमो गणधरः ॥ ८ ॥

अथ पापे सदिग्धं। द्विजमचलभ्रातरं विबुधमुख्य ॥ ऊचे विभुर्यथास्थं । वेदार्थं किं न भावयसि ॥१॥ तत्र संदेहकारणं तावत् अग्निभूत्युक्त ' पुरुष एवेदं ग्नि सर्वं ' इत्यादि पदं तत्र उत्तरं अपि तथैव ज्ञेय, तथा ' पुण्यः पुण्येन कर्मणा, पाप पापेन कर्मणा ' इत्यादिवेदपदैः पुण्यपापयोः सिद्धिश्च ॥ इति नवमो गणधरः ॥ ९ ॥

अथ परभवसंदिग्ध। मेतार्यनामपंडितप्रवरं ॥ ऊचे विभुर्यथास्थ। वेदार्थं किं न भावयसि ॥ १ ॥ यत्र च इंद्रभूत्युक्तैर्विज्ञानघन एवैतेभ्यो भूतेभ्यः ' इत्यादिपदै. परलोकसंदेहो भवति, परं तेषां पदानां अर्थं अस्मदुक्तप्रकारेण विभावय? यथा संदेहो निवर्त्तते, इति दशमो गणधरः ॥ १० ॥

निर्वाणविषयसंदेह–संयुतं च प्रभासनामान ॥ ऊचे विभुर्यथास्थं । वेदार्थं किं न भावयसि

॥ १ ॥ यतः—' जरामर्यं वा यदग्निहोत्रं ' अनेन पदेन निर्वाणाऽभावः प्रतीयते, कथं, यत् अग्निहोत्रं तत् जरामर्यं, कोऽर्थः—सर्वदा कर्त्तव्यं, अत्र अग्निहोत्रस्य सर्वदा कर्त्तव्यता उक्ता, अग्निहोत्रक्रिया च निर्वाणकारणं न भवति, शबलत्वात्, केषांचिद्वधकारणं केषांचिदुपकारकारणं इति, ततो मोक्षसाधकानुष्टानक्रियाकालस्य अनुक्तत्वान्मोक्षो नास्ति, इति मोक्षाऽभावः प्रतीयते, तथा ' द्वे ब्रह्मणी वेदितव्ये, परमपरं च, तत्र परं सत्यज्ञानं, अनंतरं ब्रह्मेति ' इत्यादिपदैर्मोक्षसत्ता प्रतीयते, इति तव संदेहः, परं अविचारितं एतत्, यस्मात् 'जरामर्यं वा यदग्निहोत्रं ' इत्यत्र वा शब्दोऽप्यर्थे, स च भिन्नक्रमः, तथा च जरामर्यं यावत् अग्निहोत्रं अपि कुर्यात्, कोऽर्थः—कश्चित्स्वर्गाद्यर्थी यावज्जीवं अग्निहोत्रं कुर्यात्, कश्चिन्निर्वाणार्थीः अग्निहोत्रं विहाय निर्वाणसाधकानुष्टानमपि कुर्यात्, न तु नियमतोऽग्निहोत्रमेवेत्यपि शब्दार्थः, ततो निर्वाणसत्कानुष्टानकालोऽप्युक्त एव, तस्मादस्ति निर्वाणं, इत्येकादशो गणधरः ॥ ११ ॥

एवं चतुश्चत्वारिंशच्छतानि द्विजाः प्रव्रजितास्तत्र मुख्यानां एकादशानां त्रिपदीग्रहणपूर्वकं

एकादशांगचतुर्दशपूर्वरचना गणधरपदप्रतिष्ठा च, तत्र द्वादशांगीरचनानंतरं भगवांस्तेषां तदनुज्ञां करोति, शक्रश्च दिव्यं वज्रमयस्थालं दिव्यचूर्णानां भृत्वा त्रिभुवनस्वामिनःसंनिहितो भवति, ततःस्वामी रत्नमयसिंहासनादुत्थाय संपूर्णां चूर्णमुष्टिं गृह्णाति, ततो गौतमप्रमुखा एकादशापि गणधरा ईषदवनता अनुक्रमेण तिष्ठंति, देवास्तूर्यध्वनिगीतादिनिरोधं विधायश्रृण्वंति, ततो भगवान् पूर्वं तावत् भणति, गौतमस्य द्रव्यगुणपर्यायैस्तीर्थं अनुजानामीति चूर्णांश्च तन्मस्तके क्षिपति, ततो देवा अपि चूर्णपुष्पगंधवृष्टिं तदुपरि कुर्वंति, गणं च भगवान् सुधर्मस्वामिनं धुरि व्यवस्थाप्यानुजानाति, इति गणधरवादः समाप्त ॥ १२१ ॥

तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरः अस्थिकग्रामस्य निश्रया प्रथमं वर्षारात्र चतुर्मासीति यावत् वर्षासु वसनं वर्षावासार्थं उपागतः, ततः चंपायाः पृष्टचंपायाश्च निश्रया त्रीणि चतुर्मासकानि वर्षावासार्थं उपागतः, वैशाल्या नगर्या वाणिज्यग्रामस्य च निश्रया, द्वादश चतुर्मासकानि वर्षावासार्थं उपागतः, राजगृहस्य नगरस्य नालंदायाश्च बाहिरिकाया निश्रया

चतुर्दश चतुर्मासकानि वर्षावासार्थं उपागतः, तत्र नालंदा राजगृहनगराडुत्तरस्यां दिशि बाहिरिका शाखापुरविशेषस्तत्र चतुर्दश वर्षारात्रान् उपागतः, षट् मिथिलायां नगर्यां, द्वे भद्रिकायां, एकं आलंभिकायां, एकं श्रावस्त्यां, एकं प्रणितभूमौ, वज्रभूम्याख्याऽनार्यदेशे इत्यर्थः. एकं पापायां मध्यमायां, हस्तिपालस्य राज्ञः रज्जुका लेखकाः ' कारकुन ' इति लोके प्रसिद्धास्तेषां शाला सभा जीर्णा अपरिभुज्यमाना, तत्र भगवान् अपश्चिममंत्यं चतुर्मासकं वर्षावासार्थ उपागतः, पूर्वं किल तस्या नगर्या अपापेति नामासीत्, देवैस्तु ' पापेत्युक्तं ' तत्र भगवान् कालगत इति ।१२२।

तत्र यस्मिन् वर्षे पापायां मध्यमायां हस्तिपालस्य राज्ञः लेखकशालायां अंत्यं चतुर्मासकं वर्षावासार्थं उपागतः ॥ १२३ ॥

तस्य चतुर्मासकस्य मध्ये योऽसौ वर्षाकालस्य चतुर्थमासः, सप्तमः पक्षः, कार्त्तिकस्य कृष्णपक्षः, तस्य कार्त्तिककृष्णपक्षस्य पंचदशे दिवसे, या सा चरमा रजनी, तस्यां रजन्यां च श्रमणो भगवान् महावीरः कालगतः, कायस्थितिभवस्थितिकालाद्गतः, संसाराद्व्यतिक्रांतः, समुद्यातः सम्यग् अपु-

नरावृत्या ऊर्ध्वं यातः, छिन्नानि जातिजरामरणबंधनानि, जन्मजरामरणकारणानि कर्माणि येन
स तथा, सिद्धः साधितार्थः, बुद्धस्तत्त्वार्थज्ञानवान्, मुक्तो भवोपग्राहिकर्मेभ्यः, अंतकृत् सर्वदुःखा-
नां, परिनिर्वृत सर्वसंतापाऽभावात्, तथाच कीदृशो जातः? सर्वाणि दुःखानि शारीरमानसानि
तानि प्रक्षीणानि यस्य स तथा, अथ भगवतो निर्वाणवर्षादीनां सैद्धांतिकनामान्याह—अथ यत्र
भगवान्निर्वृतः स चंद्रनामा द्वितीयः संवत्सरः, प्रीतिवर्द्धन इति तस्य मासस्य कार्त्तिकस्य नाम,
नंदिवर्द्धन इति तस्य पक्षस्य नाम, अग्निवेश्म इति तस्य दिवसस्य नाम, उपशम इति प्रोच्यते,
उपशम इति तस्य द्वितीयं नामेत्यर्थः, देवानंदा नाम्नी सा अमावास्यारजनी, निरतिः इत्यप्युच्यते
नामांतरेण, अर्चनामा लवः, मुहूर्त्तनामा प्राणः, सिद्धनामा स्तोकः, नागनामकं करणं, इत्थं च शकु-
न्यादिस्थिरकरणचतुष्टे तृतीय करणं अमावास्योत्तरार्द्धे हि एतदेव भवतीति. सर्वार्थसिद्धनामा
मुहूर्त्तः, स्वातिनामनक्षत्रेण चंद्रयोगे उपागते सति भगवान् कालगतः, यावत् सर्वदुःखप्रक्षीणः,
अथ संवत्सरमासदिनरात्रिमुहूर्त्तनामानि चेवं सूर्यप्रज्ञप्तौ—॥ १२४ ॥

एकस्मिन् युगे पंच संवत्सरास्तेषां नामानि–चंद्र ( १ ) चंद्र ( २ ) अभिवर्द्धित ( ३ ) चंद्र ( ४ ) अभिवर्द्धिता ( ५ ) श्चेति संवत्सरनामानि ॥ अभिनंदनः ( १ ) सुप्रतिष्ठः ( २ ) विजयः ( ३ ) प्रीतिवर्द्धनः ( ४ ) श्रेयान् ( ५ ) शिशिरः ( ६ ) शोभनः ( ७ ) हैमवान् ( ८ ) वसंतः ( ९ ) कुसुमसंभवः ( १० ) निदाघो ( ११ ) वनविरोधी ( १२ ) इति श्रावणादिद्वादशमासनामानि ॥ पूर्वांगसिद्ध ( १ ) मनोरम ( २ ) मनोहर ( ३ ) यशोभद्र ( ४ ) यशोधर ( ५ ) सर्वकामसमृद्ध ( ६ ) इंद्र ( ७ ) मूर्द्धाभिषिक्त ( ८ ) सौमन ( ९ ) धनंजय ( १० ) अर्थसिद्ध ( ११ ) अभिजित ( १२ ) रत्याशन ( १३ ) शतंजय ( १४ ) अग्निवेश्येति ( १५ ) पंचदशदिननामानि ॥ उत्तमा ( १ ) सुनक्षत्रा ( २ ) इलापत्या ( ३ ) यशोधरा ( ४ ) सोमनसी ( ५ ) श्रीसंभूता ( ६ ) विजया ( ७ ) विजयंती ( ८ ) वैजयंती ( ९ ) अपराजिता ( १० ) इच्छा ( ११ ) समाहारा ( १२ ) तेजा ( १३ ) अभितेजा ( १४ ) देवानंदा ( १५ ) चेति पंचदश रात्रिनामानि ॥ रुद्रः ( १ ) श्रेयान् ( २ ) मित्रं ( ३ ) वायुः ( ४ ) सुप्रतीतो ( ५ ) ऽभिचंद्रो ( ६ ) माहेंद्रो ( ७ ) बलवान् ( ८ )

ब्रह्मा ( ९ ) बहुसत्य ( १० ) ऐशान ( ११ ) त्वष्टा ( १२ ) जावितात्मा ( १३ ) वैश्रवणो ( १४ ) वारुण ( १५ ) आनंदो ( १६ ) विजयो ( १७ ) विजयसेन ( १८ ) प्राजापत्य ( १९ ) उपशमो ( २० ) गंधर्वो ( २१ ) अग्निवेश्यः ( २२ ) शतवृषभ ( २३ ) आतपवान् ( २४ ) अर्थवान् ( २५ ) ऋणवान् ( २६ ) जौमो ( २७ ) वृषभ ( २८ ) सर्वार्थसिद्धो ( २९ ) राक्षस ( ३० ) श्चेति त्रिंशन्मुहूर्त्तनामानि ॥ १२४ ॥

यस्यां रजन्यां श्रमणो जगवान् महावीरः कालगतः, यावत् सर्वदुःखप्रहीणः, सा रजनी बहुभिः देवैः देवीभिश्च स्वर्गात् अवपतद्भिः उत्पतद्भिश्च कृत्वा उद्योतवती अजवत् ॥ १२५ ॥

यस्यां रात्रौ श्रमणो भगवान् महावीरः कालगतः, यावत् सर्वदुःखप्रहीणः, सा रात्रिर्बहुभिः देवैः देवीभिश्च अवपतद्भिः उत्पतद्भिश्च कृत्वा भृशं आकुला इव अव्यक्तकोलाहलमयी अजवत् ॥ १२६ ॥

यस्यां रात्रौ श्रमणो जगवान् महावीरः कालगतः, यावत् सर्वदुःखप्रहीणः, तस्यां च रजन्यां ज्येष्ठस्य, किं जूतस्य? गोत्रेण गौतमस्य इंद्रभूतिनामकस्य अनगारस्य शिष्यस्य ज्ञातजे श्रीमहावीर-

विषये प्रेमबंधने स्नेहबंधने व्युच्छिन्ने त्रुटिते सति अनंतवस्तुविषये, अनुत्तरे यावत् केवलवरज्ञानदर्शने समुत्पन्ने, तच्चैवं—स्वनिर्वाणसमये देवशर्मणः प्रतिबोधनाय क्वापि ग्रामे स्वामिना प्रेषितः श्रीगौतमः तं प्रतिबोध्य पश्चादागच्छन् श्रीवीरनिर्वाणं श्रुत्वा वज्राहत इव क्षणं तस्थौ, बभाण च—प्रसरति मिथ्यात्वतमो। गर्जंति कुतीर्थिकौशिका अद्य ॥ दुर्भिक्षमरवैरादि—राक्षसाः प्रसरमेष्यंति ॥ १ ॥ राहुग्रस्तनिशाकर—मिव गगनं दीपहीनमिव भवनं ॥ भरतमिदं गतशोभं। त्वया विनाद्य प्रभो जज्ञे ॥ २ ॥ कस्यांह्रिपीठे प्रणतः पदार्थान्। पुनः पुनः प्रश्नपदीकरोमि ॥ कं वा भदंतेति वदामि को वा। मां गौतमेत्याप्तगिराथ वक्ता ॥ ३ ॥ हा हा हा वीर किं कृतं, यदीदृशेऽवसरेऽहं दूरीकृतः, किमाङ्कं मंडयित्वा बालवत्त्वांचलेऽलगिष्यं, किं केवलभागममार्गयिष्यं, किं मुक्तौ संकीर्णं अभविष्यत्, किं वा तव भारोऽभविष्यद्यदेवं मां विमुच्य गतः, एवं च वीर वीर इतिकुर्वतो वीर इति मुखे लग्नं गौतमस्य, तथा च हुं ज्ञातं, वीतरागा निःस्नेहा भवंति, ममैवायं अपराधो यन्मया तदा श्रुतोपयोगो न दत्तः, धिगिमं एकपाक्षिकं स्नेहं, अलं स्नेहेन, एकोऽस्मि, नास्ति कश्चन मम, एवं सम्यक् साम्यं

भावयतस्तस्य केवलमुत्पेदे, मुक्कमगपवणाणं । सिणेहो वज्जसिंखला ॥ वीरे जीवंतए जाओ । गोअमो जं न केवली ॥ १ ॥ प्रातःकाले इंद्राद्यैर्महिमा कृतः, अत्र कविः—अहंकारोऽपि बोधाय । रागोऽपि गुरुभक्तये ॥ विषादः केवलायाभूत् । चित्रं श्रीगौतमप्रभोः ॥ १ ॥ स च द्वादशवर्षाणि केवलिपर्यायं परिपाल्य दीर्घायुरिति कृत्वा सुधर्मस्वामिने गणं समर्प्य मोक्षं ययौ, सुधर्मस्वामिनोऽपि पश्चात् केवलोत्पत्तिः, सोऽप्यष्टौ वर्षाणि विहृत्यार्यजंबूस्वामिनो गणं समर्प्य सिद्धिं गतः ।१२७।

यस्यां रजन्यां श्रमणो भगवान् महावीरः कालगतः, यावत् सर्वदुःखप्रक्षीणः, तस्यामेव रजन्यां नवमल्लकीजातीयाः काशीदेशस्य राजानः, नवलेच्छकीजातीयाः कोशलदेशस्य राजानः, ते च कार्यवशात् गणमेलापकं कुर्वंति, इति गणराजानः अष्टादश ये चेटकमहाराजस्य सामंताः श्रूयंते, ते तस्यां अमावास्याया पारं संसारपारं आभोगयति प्रापयति यस्तं एवंविधं पौषधोपवासं कृतवंतः, आहारत्यागपौषधरूपं उपवासं चक्रुरित्यर्थः, अन्यथा दीपकरणं न संभवति, ततश्च गतः स भावोद्योतस्ततो द्रव्योद्योतं करिष्याम इति तैः दीपाः प्रवर्तितास्ततःप्रभृति दीपोत्सवः संवृत्तः, कार्ति-

कशुक्लप्रतिपदि च श्रीगौतमस्य केवलमहिमा देवैश्चक्रे, अतस्तत्रापि जनप्रमोदः, नंदिवर्धननरेंद्रश्च भगवतोऽस्तं श्रुत्वा शोकार्त्तः सुदर्शनया भगिन्या संबोध्य सादरं स्ववेश्मनि द्वितीयायां भोजितस्ततो भ्रातृद्वितीयापर्वरूढिः ॥ १२८ ॥

यस्यां रात्रौ श्रमणो भगवान् महावीरः कालगतः, यावत् सर्वदुःखप्रक्षीणः, तस्यां रात्रौ क्षुद्रात्मा क्रूरस्वभाव एवंविधो भस्मराशिनामा त्रिंशत्तमो महाग्रहः, किंभूतोऽसौ ? द्विसहस्रवर्षस्थितिकः, एकस्मिन् ऋक्षे एतावंतं कालं अवस्थानात्, श्रमणस्य भगवतो महावीरस्य जन्मनक्षत्रं उत्तराफाल्गुनीनक्षत्रं संक्रांतः, तत्राप्याशीतिर्ग्रहाश्चेमे—अंगारको १ विकालको २ लोहिताक्षः ३ शनैश्चरः ४ आधुनिकः ५ प्राधुनिकः ६ कणः ७ कणकः ८ कणकणकः ९ कणवितानकः १० कणसंतानकः ११ सोमः १२ सहितः १३ अश्वासनः १४ कार्योपगः १५ कर्बुरकः १६ अजकरकः १७ दुंदुभकः १८ शंखः १९ शंखनाभः २० शंखवर्णाभः २१ कंसः २२ कंसनाभः २३ कंसवर्णाभः २४ नीलः २५ नीलावभासः २६ रूपी २७ रूपावभासः २८ भस्मः २९ भस्मराशिः ३० तिलः ३१ तिलपुष्पवर्णः

३२ दकः ३३ दकवर्णं. ३४ कार्यः ३५ वंध्यः ३६ इंद्राग्निः ३७ धुमकेतुः ३८ हरिः ३९ पिंगल॰ ४० बुधः ४१ शुक्रः ४२ बृहस्पतिः ४३ राहुः ४४ अगस्तिः ४५ माणवक॰ ४६ कामस्पर्शः ४७ धुरः ४८ प्रमुखः ४९ विकटः ५० विसंधिकल्प. ५१ प्रकल्प. ५२ जटालः ५३ अरुणः ५४ अग्निः ५५ कालः ५६ महाकाल. ५७ स्वस्तिकः ५८ सोवस्तिकः ५९ वर्धमानः ६० प्रलंबः ६१ नित्यालोकः ६२ नित्योद्योतः ६३ स्वयंप्रभः ६४ अवभासः ६५ श्रेयस्करः ६६ क्षेमंकरः ६७ आभंकरः ६८ प्रभंकरः ६९ अरजा.७० विरजाः ७१ अशोकः ७२ वीतशोकः ७३ विततः ७४ विवस्त्रः ७५ विशालः ७६ शालः ७७ सुव्रतः ७८ अनिवृत्तिः ७९ एकजटी ८० द्विजटी ८१ करः ८२ करिक. ८३ राजा ८४ अर्गलः ८५ पुष्पः ८६ भावः ८७ केतुः ८८ इत्यष्टाशीतिर्ग्रहा. ॥ १२९ ॥

यतःप्रभृति स क्षुद्रात्मा भस्मराशिनामा ग्रहो द्विवर्षसहस्रस्थितिः श्रमणस्य भगवतो महावीरस्य जन्मनक्षत्रं संक्रांतः, ततःप्रभृति श्रमणानां तपस्विनां निर्ग्रंथानां साधूनां निर्ग्रंथीनां साध्वीनां च उदतोदित उत्तरोत्तरं वृद्धिमान् इदृशः, पुजा चंदनादिका, सत्कारो वस्त्रदानादिबहुमानः स न

प्रवर्त्तते, अत एव शक्रेण स्वामी विज्ञप्तो यत्क्षणं आयुर्वर्द्धयत, येन भवत्सु जीवत्सु भवज्जन्मनक्षत्रं संक्रांतो भस्मराशिग्रहो भवच्छासनं पीडयितुं न शक्ष्यति, ततः प्रभुणोक्तं, न खलु शक्र कदाचिदपि इदं भूतपूर्वं प्रक्षीणं आयुर्जिनेंद्रैरपि वर्द्धयितुं शक्यते, ततोऽवश्यं भाविनी तीर्थबाधा भविष्यत्येव, किंतु षडशीतिवर्षायुषि कल्किनि कुनृपतौ त्वया निग्रहिते सति वर्षसहस्रद्वये पूर्णे मज्जन्मनक्षत्राद् भस्मग्रहे व्यतिक्रांते च त्वत्स्थापितकल्किपुत्रधर्मदत्तराज्यादारभ्य साधुसाध्वीनां उदितोदितः पूजासत्कारो भविष्यतीति सूत्रकारा अपि तदेवाहुः ॥ १३० ॥

यदा च स क्षुद्रात्मा भस्मराशिर्महाग्रहः द्विवर्षसहस्रस्थितिकः यावत् भगवज्जन्मनक्षत्रात् व्यतिक्रांतो भविष्यति, उत्तरिष्यतीत्यर्थः, तदा श्रमणानां निर्ग्रंथानां निर्ग्रंथीनां च उदतोदितः पूजासत्कारो भविष्यति ॥ १३१ ॥

यस्यां रात्रौ श्रमणो भगवान् महावीरः कालगतः यावत् सर्वदुःखप्रक्षीणः, तस्यां रात्रौ कुंथुः प्राणिजातिर्या उद्धर्त्तुं न शक्यते, एवंविधा समुत्पन्ना, या स्थिता अत एव अचलंती सती छद्म-

स्थानां निर्ग्रंथानां निर्ग्रंथीनां च नैव चक्षुःस्पर्शं दृष्टिपथं शीघ्रं आगछति, या च अस्थिता अत एव चलंती छद्मस्थानां निर्ग्रंथानां निर्ग्रंथीनां च चक्षुर्विषयं शीघ्रं आगछति ॥ १३२ ॥

यां कुंथुअणुद्धरीं दृष्ट्वा बहुभिर्निर्ग्रंथैः साधुभिर्बह्वीभिः निर्ग्रंथीभिश्च साध्वीभिर्भक्तानि प्रत्याख्यातानि, अनशनं कृतमित्यर्थः. शिष्यः पृछति, किमाहुर्भदंतास्तत् किं कारणं यद् भक्तानि प्रत्याख्यातानि, गुरुराह अद्यप्रभृति संयमो दुराराध्यो भविष्यति, पृथिव्यादिजीवाकुलत्वात्, संयमयोग्यक्षेत्राऽभावात्, पाखण्डिसंकराच्च ॥ १३३ ॥

तस्मिन् काले तस्मिन् समये श्रमणस्य भगवतो महावीरस्य इंद्रभूतिप्रमुखाणि चतुर्दशश्रमणानां सहस्राणि, उत्कृष्टा एतावती श्रमणसंपदा अभवत् ॥ १३४ ॥

श्रमणस्य भगवतो महावीरस्य आर्यचंदनाप्रमुखाणि षट्त्रिंशत् आर्यिकाणां सहस्राणि उत्कृष्टा एतवाती आर्यिकासंपदा अभवत् । १३५ ।

श्रमणस्य भगवतो महावीरस्य शंखशतकप्रमुखाणां श्रमणोपासकानां श्रावकाणां एकशतसहस्री,

एकं लक्षं एकोनषष्टिश्च सहस्राः उत्कृष्टा श्रमणोपासकानां संपदा अभवत् ॥ १३६ ॥

श्रमणस्य भगवतो महावीरस्य सुलसारेवतीप्रमुखाणां श्रमणोपासिकानां त्रीणि लक्षाणि अष्टादश सहस्राश्च उत्कृष्टा एतावती श्रमणोपासिकानां संपदा अभवत्, अत्र या सुलसा श्राविका, सा द्वात्रिंशत्पुत्रजननी नागनार्या, रेवती च प्रभोरौषधदात्री ज्ञेया ॥ १३७ ॥

श्रमणस्य भगवतो महावीरस्य त्रीणि शतानि चतुर्दशपूर्विणां, कीदृशानां? असर्वज्ञानां परं सर्वज्ञसदृशानां, सर्वे अक्षरसन्निपाता अक्षरसंयोगा ज्ञेयतया विद्यंते येषां ते तथा तेषां, पुनः कीदृशानां? जन इवाऽवितथं सत्यं व्याकुर्वाणानां, केवलिश्रुतकेवलिनोः प्रज्ञापनायां तुल्यत्वात्, उत्कृष्टा एतावती चतुर्दशपूर्विणां संपदा अभवत् । १३८ ।

श्रमणस्य भगवतो महावीरस्य त्रयोदश शतानि अवधिज्ञानिनां, कीदृशानां? 'अतिशेषा अतिशयाः, आमर्षौषध्यादिलब्धयस्तान् प्राप्तानां उत्कृष्टा एतावती अवधिज्ञानिनां संपदा अभवत् ॥ १३९ ॥

श्रमणस्य भगवतो महावीरस्य सप्तशतानि केवलज्ञानिनां संभिन्नं संपूर्णं वरं श्रेष्ठं यत् ज्ञानं

दर्शनं च तयो॰ धारकाणां उत्कृष्टा एतावती केवलज्ञानिसंपदा अभवत् ॥ १४० ॥

श्रमणस्य भगवतो महावीरस्य सप्तशतानि वैक्रियलब्धिमतां मुनीना, कीदृशानां ? अदेवानामपि देवर्द्धिविकुर्वणासमर्थाना इति भावः, उत्कृष्टा एतावती वैक्रियलब्धिमत्संपदा अभवत् ॥ १४१॥

श्रमणस्य भगवतो महावीरस्य पंच शतानि विपुलमतीनां, कीदृशानां? अर्धतृतीयेषु द्वीपेषु, द्वयोः समुद्रयोश्च विषये संज्ञिनां पंचेंद्रियाणा पर्याप्तकाना च मनसि गतान् भावान् जानतां उत्कृष्टा एतावती विपुलमतीनां संपदा अभवत्, तत्र विपुलमतयो हि घटोऽनेन चिंतितः, स च सौवर्णः, पाटलिपुत्रक॰, शारदो नीलवर्ण इत्यादिसर्वविशेषोपेतं, सर्वतः सार्द्धद्व्यङ्गुलाधिके मनुष्यक्षेत्रे स्थितानां संज्ञिनां मनोगतं पदार्थं जानंति, ऋजुमतयस्तु सर्वतः सपूर्णमनुष्यक्षेत्रस्थितानां संज्ञिपंचेंद्रियाणां मनोगतं सामान्यतो घटादिपदार्थमात्रं जानंतीति विशेषः ॥ १४२ ॥

श्रमणस्य भगवतो महावीरस्य चत्वारि शतानि वादिमुनीनां, कीदृशानां ? देवमनुष्याऽसुरसहिताया पर्षदि वादे अपराजिताना, उत्कृष्टा एतावती वादिसंपदा अभवत् ॥ १४३ ॥

श्रमणस्य भगवतो महावीरस्य सप्त शिष्यशतानि सिद्धिं गतानि, यावत् सर्वदुःखानि प्रक्षीणानि, चतुर्दश आर्यिकाशतानि सिद्धौ गतानि ॥ १४४ ॥

श्रमणस्य भगवतो महावीरस्य अष्ट शतानि अनुत्तरोपपातिनां, अनुत्तरविमानोत्पन्नमुनीनां, कीदृशानां? गतौ आगामिन्यां मनुष्यगतौ कल्याणं मोक्षप्राप्तिलक्षणं येषां ते तथा तेषां, पुनः कीदृशानां? स्थितौ देवभवेऽपि कल्याणं येषां ते तथा तेषां, वीतरागप्रायत्वात्, आगमिष्यद्भद्राणां, आगामिभवे सेत्स्यमानत्वात्, उत्कृष्टा एतावती अनुत्तरोपपातिनां संपदा अभवत् ॥ १४५ ॥

श्रमणस्य भगवतो महावीरस्य द्विविधा अंतकृद्भूमिः, अंतकृतो मोक्षगामिनस्तेषां भूमिः कालोंतकृद्भूमिरभवत्, तदेव द्विविधत्वं दर्शयति, तद्यथा—युगांतकृद्भूमिः पर्यायांतकृद्भूमिश्च, तत्र युगानि कालमानविशेषास्तानि च क्रमवर्त्तीनि, तत्साधर्म्याद्ये क्रमवर्त्तिनो गुरुशिष्यप्रशिष्यादिरूपाः पुरुषास्तेऽपि युगानि, तैः प्रमिता अंतकृद्भूमिर्या सा युगांतकृद्भूमिः ॥ पर्यायः प्रभोः केवलित्वकालस्तं आश्रित्य अंतकृद्भूमिः पर्यायांतकृद्भूमिः, तद्द्वयं निर्दिशति—इह पंचमी द्वितीयार्थे, ततो यावत्

तृतीयं पुरुष एव युगं जंबूस्वामिनं यावद् युगांतकृद्भूमिः, ज्ञानोत्पत्त्यपेक्षया चतुर्वर्षपर्याये च भगवति अंतमकार्षीत्, कश्चित् केवली मोक्षं अगमत्, प्रभोर्ज्ञानानंतरं चतुर्षु वर्षेषु मुक्तिमार्गो वहमानो जातः, जंबूस्वामिनं यावच्च मुक्तिमार्गो वहमानः स्थित इति भावः ॥ १४६ ॥

तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरः त्रिंशद्वर्षाणि गृहस्थावस्थामध्ये उषित्वा, समधिकानि द्वादश वर्षाणि छद्मस्थपर्यायं पालयित्वा, किंचिदूनानि त्रिंशद्वर्षाणि केवलिपर्यायं पालयित्वा, द्विचत्वारिंशद्वर्षाणि चारित्रपर्यायं पालयित्वा, द्विसप्ततिवर्षाणि सर्वायुः पालयित्वा क्षीणेषु सत्सु वेदनीय १ आयुः २ नाम ३ गोत्रेषु ४ चतुर्षु भवोपग्राहिकर्मसु, अस्यां अवसर्पिण्यां दुःखमसुखमा इति नामके चतुर्थे अरके बहु व्यतिक्रांते सति, त्रिषु वर्षेषु सार्धाष्टसु च मासेषु शेषेषु सत्सु पापायां मध्यमायां हस्तिपालस्य राज्ञः लेखकसभायां एकः सहायविरहात्, अद्वितीय एकाकी एव, न तु ऋषभादिवद्दशसहस्रादिपरिवार इति, अत्र कविः—यन्न कश्चन मुनिस्त्वया समं । मुक्तिमापदित-रैर्जिनैरिव ॥ दुःष्यमासमयजाविलिंगिनां । व्यंजि तेन गुरुनिर्व्यपेक्षता ॥ १ ॥ षष्ठेन भक्तेन

जलरहितेन स्वातिनक्षत्रेण सह चंद्रयोग उपागते सति प्रत्यूषकाले, चतुर्घटिकावशेषायां रात्रौ सपर्यंकासनेन निषण्णः, पद्मासननिविष्टः पंचपंचाशदध्ययनानि कल्याणं पुण्यं तस्य फलविपाको येषु तानि कल्याणफलविपाकानि, पंचपंचाशत् अध्ययनानि पापफलविपाकानि, षट्त्रिंशत् अपृष्टव्याकरणानि, अपृष्टान्युत्तराणि व्याकृत्य कथयित्वा प्रधानं नाम अध्ययनं एकं मरुदेव्यध्ययनं विभावयन् विचारयन् भगवान् कालगतः संसाराद्व्यतिक्रांतः सम्यग् ऊर्ध्वं यातः, छिन्नानि जातिजरामरणबंधनानि यस्य स तथा, सिद्धः, बुद्धः, मुक्तः, कर्मणामंतकृत् सर्वसंतापरहितः सर्वदुःखानि प्रक्षीणानि यस्य स तथा, अथ भगवतो निर्वाणकालस्य पुस्तकलिखनादिकालस्य च अंतरमाह–॥१४७॥

श्रमणस्य भगवतो महावीरस्य यावत् सर्वदुःखप्रक्षीणस्य नव वर्षशतानि व्यतिक्रांतानि, दशमस्य च वर्षशतस्य अयं अशीतितमः संवत्सरः कालो गच्छति, यद्यपि एतस्य सूत्रस्य व्यक्तो भावार्थो न ज्ञायते, तथापि यथा पूर्वटीकाकारैर्व्याख्यातं, तथा व्याख्यायते, तथाहि–अत्र केचिद्वदंति यत्कल्पसूत्रस्य पुस्तकलिखनकालज्ञापनाय इदं सूत्रं श्रीदेवर्द्धिगणिक्षमाश्रमणैर्लिखितं, तथा चायमर्थो यथा

श्रीवीरनिर्वाणादशीत्यधिकनववर्षशतातिक्रमे पुस्तकारूढः सिद्धांतो जातस्तदा कल्पोऽपि पुस्तकारूढो जात इति, तयोक्त—वल्लहिपुरमि नयरे । देवड्ढिपमुहसयलसंघेहिं ॥ पुत्थे आगमलिहिउं । नवसयअसीआउ वीराउ ॥ १ ॥ अन्ये वदंति—नवशतअशीतिवर्षे । वीरसेनांगजार्थमानंदे ॥ संघसमक्षं समहं । आरब्धं वाचितु विज्ञैः ॥ १ ॥ इत्याद्यंतर्वाच्यवचनात् श्रीवीरनिर्वाणादशीत्यधिकनववर्षशतातिक्रमे कल्पस्य सभासमक्ष वाचना जाता, तां ज्ञापयितुं इदं सूत्रं न्यस्तमिति, तत्त्वं पुनः केवलिनो विदंतीति. वाचनांतरे पुनरयं त्रिनवतितमः संवत्सर. कालो गच्छतीति दृश्यते, अत्र केचिद्वदंति, वाचनांतरे कोऽर्थः? ग्रंथांतरे 'तेणउए' इति दृश्यते, यत् कल्पस्य पुस्तके लिखनं पर्षदि वाचनं वा अशीत्यधिकनववर्षशतातिक्रमे इति कस्मिंश्चित् पुस्तके लिखितं, तत्पुस्तकांतरे त्रिनवतिवर्षाधिकनवशतवर्षातिक्रमे इति दृश्यते, इति भावः, अन्ये पुनर्वदंति, अयं अशीतितमे संवत्सरे इति कोऽर्थः—पुस्तके कल्पलिखनस्य हेतुभूतः, अयं श्रीवीरात् दशमशतस्य अशीतितमसंवत्सरलक्षणः कालो गच्छति, 'वायणंतरे' इति कोऽर्थः—एकस्याः पुस्तकलिखनरूपाया वाचनाया अन्यत् पर्षदि वाचनरूपं यद्वा-

चनांतरं तस्य पुनर्हेतुभूतो दशमशतस्य अयं त्रिनवतितमः संवत्सरः, तथा चायमर्थः—नवशताशीतितमवर्षे कल्पस्य पुस्तके लिखनं, नवशतत्रिनवतितमवर्षे च कल्पस्य पर्षद्वाचनेति, तथोक्तं श्रीमुनिसुंदरसूरिभिः स्वकृतस्तोत्ररत्नकोशे—वीरात्त्रिनंदांक ( ९९३ ) शरद्यचीकरत् । त्वच्चैत्यपूते ध्रुवसेननृपतिः ॥ यस्मिन् महैः संसदि कल्पवाचना । माद्यां तदानंदपुरं न कः स्तुते ॥ १ ॥ पुस्तकलिखनकालस्तु यथोक्तः प्रतीत एव—'वलहीपुरंमिनयरे' इत्यादिवचनात्, तत्त्वं पुनः केवलिनो विदंतीति ॥१४७॥ ॥ इति श्रीवीरचरित्रं समाप्तं ॥ इति महोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां कल्पसुबोधिकायां षष्ठः क्षणः समाप्तः ॥ ग्रं० ( १००७ ) षण्णामपि व्याख्यानानां ग्रं० ( ४२३२ ) ॥ श्रीरस्तु ॥



## ॥ अथ सप्तमं व्याख्यानं प्रारभ्यते ॥

तस्मिन् काले तस्मिन् समये पार्श्वनामा अर्हन् पुरुषश्चासौ आदानीयश्च, आदेयवाक्यतया आदेयनामतया च पुरुषादानीयः पुरुषप्रधान इत्यर्थः, पंच कल्याणकानि विशाखायां अभवन्, तद्यथा–विशाखायां च्युतः, च्युत्वा गर्भे उत्पन्नः १, विशाखायां जातः २, विशाखायां मुंडो भूत्वा अगाराद्निष्क्रम्य साधुतां प्रतिपन्नः ३, विशाखायां अनंते अनुपमे निर्व्याघाते समस्तावरणरहिते समस्ते प्रतिपूर्णे एवंविधे केवलवरज्ञानदर्शने समुत्पन्ने ४, विशाखायां निर्वाणप्राप्तः ५ ॥ १४९ ॥

तस्मिन् काले तस्मिन् समये पार्श्वः अर्हन् पुरुषादानीयः योऽसौ उष्णकालस्य प्रथमो मासः प्रथमः पक्षः, चैत्रस्य बहुलपक्षः, तस्य चैत्रबहुलस्य चतुर्थीदिवसे प्राणतनामकात् दशमकल्पात्, कीदृशात्? विंशतीसागरोपमस्थिति आयुःप्रमाणं यत्र, इदृशात्, अनंतरं दिव्यशरीरं त्यक्त्वा अस्मिन्नेव जंबूद्वीपे द्वीपे भरतक्षेत्रे वाणारस्यां नगर्यां अश्वसेनस्य राज्ञो वामाया देव्याः पूर्वापररात्रिसमये मध्यरात्रौ इत्यर्थः, विशाखायां नक्षत्रे चंद्रयोगं उपागते सति, दिव्याहारत्यागेन, दिव्यज-

वत्यागेन, दिव्यशरीरत्यागेन कुक्षौ गर्भतया व्युत्क्रांत उत्पन्नः ॥ १५० ॥

पार्श्वः अर्हन् पुरुषादानीयः त्रिज्ञानोपगत आसीत्, तद्यथा—च्यविष्ये इति जानाति, तेनैव-पूर्वोक्तपाठेन स्वप्नदर्शनस्वप्नफलप्रश्नप्रमुखं सर्वं वाच्यं यावत् निजं गृहं वामादेवी प्राविशत्, यावत् सुखं सुखेन तं गर्भं परिपालयति ॥ १५१ ॥

तस्मिन् काले तस्मिन् समये पार्श्वः अर्हन् पुरुषादानीयः योऽसौ शीतकालस्य द्वितीयो मासः, तृतीयः पक्षः पौषबहुलः, तस्य पौषबहुलस्य दशमीदिवसे नवसु मासेषु प्रतिपूर्णेषु सत्सु, अर्धाष्टमसु च अहोरात्रेषु व्यतिक्रांतेषु सत्सु, पूर्वापररात्रिसमये मध्यरात्रौ इत्यर्थः, विशाखायां नक्षत्रे चंद्रयोगे उपागते सति आरोग्या वामा आरोग्यं दारकं प्रजाता ॥

यस्यां रजन्यां पार्श्वः अर्हन् पुरुषादानीयः जातः, सा रजनी बहुभिर्देवैर्देवीभिश्च कृत्वा यावत् भृशं आकुला इव अव्यक्तवर्णकोलाहलमयी अभवत् ॥ १५३ ॥

शेषं जन्मोत्सवादि तथैव, पूर्ववत्, परं पार्श्वाभिलापेन भणितव्यं, यावत् तस्मात् भवतु कुमारः

पार्श्वः नाम्ना कृत्वा ॥ तत्र प्रभौ गर्भस्थे सति शयनीयस्था माता पार्श्वे सर्पंतं कृष्णसर्पं ददर्श, ततः पार्श्वेति नाम कृतं, क्रमेण यौवनं प्राप्तः, तच्चैवं—धात्रीभिरिंद्रादिष्टाभि—र्लाल्यमानो जगत्पतिः ॥ नवहस्तप्रमाणांगः । क्रमादाप च यौवनं ॥ १ ॥ ततः कुशस्थलेशः प्रसेनजिन्नृपपुत्रीं प्रभावती-नाम्नीं कन्यां आग्रह पित्रा परिणायितः, अन्येद्युर्गवाक्षस्थः स्वामी एकस्यां दिशि गच्छतः पुष्पादिपू-जोपकरणसहितान्नागरांश्च निरीक्ष्य एते क्व गच्छंतीति कंचित्पप्रच्छ, स आह, प्रभो कुत्रचित्संनिवेशे वास्तव्यो दरिद्रो मृतमातापितृको ब्राह्मणपुत्रः कृपया लोकैर्जीवितः कमठनामा, स च एकदा रत्ना-भरणभूषितान् नागरान् वीक्ष्य अहो एतत्प्राग्जन्मतपसः फलमिति विचिंत्य पचाग्न्यादिमहाक-ष्टार्थी तपस्वी जातः, सोऽद्य पुर्यां बहिरागतोऽस्ति, तं पूजितुं लोका गच्छंतीति निशम्य प्रभुरपि स-परिवारस्तं द्रष्टुं ययौ, तत्र काष्ठांतर्दह्यमानं महासर्पं ज्ञानेन विज्ञाय करुणासमुद्रो भगवानाह, अहो मूढ तपस्विन्! किं दयाविना वृथा कष्टं करोषि? यतः—कृपानदीमहातीरे। सर्वे धर्मास्तृणांकुराः ॥ तस्यां शोषमुपेतायां। कियन्नंदंति ते चिरं ॥ १ ॥ इत्याकर्ण्य क्रुद्धः कमठोऽत्रोचत्, राजपुत्रा हि

गजाश्वादिक्रीडां कर्तुं जानंति; धर्मं तु वयं तपोधना एव जानीमस्ततः स्वामिनाऽग्निकुंडात् ज्वलत्काष्टं आकृष्य कुठारेण द्विधा कृत्वा च तापव्याकुलः सर्पो निष्कासितः, स च भगवन्नियुक्तपुरुषमुखान्नमस्कारान् प्रत्याख्यानं च निशम्य तत्क्षणं विपद्य धरणेंद्रो जातः, अहो ज्ञानीति जनैः स्तूयमानः स्वामी स्वगृहं ययौ, कमठोऽपि तपस्तप्त्वा मेघकुमारेषु मेघमाली जातः ॥ १५४ ॥

पार्श्वः अर्हन् पुरुषादानीयो दक्षो दक्षा प्रतिज्ञा यस्य, रूपवान्, गुणैरालिंगितः, भद्रकः, विनयवान् त्रिंशद्वर्षाणि गृहस्थावस्थायां स्थित्वा पुनरपि लोकांतिका जीतकल्पिका देवाः, ताभिः इष्टाभिर्वाग्भिः यावत् एवं अवादीषुः ॥ १५५ ॥

जय जयवान् भव? हे समृद्धिमन्! जय जयवान् भव? हे कल्याणवन्! यावत् जयजयशब्दं प्रयुंजंति ॥ १५६ ॥

पूर्वं अपि पार्श्वस्य अर्हतः पुरुषादानीयस्य मनुष्ययोग्यात् गृहस्थधर्मात् अनुपमं उपयोगात्मकं अवधिज्ञानमभूत्, तदेव सर्वं पूर्वोक्तं वाच्यं, यावत् धनं गोत्रिणो विभज्य दत्वा, योऽसौ शीतकालस्य

द्वितीयो मासः तृतीयः पक्षः, पौषस्य कृष्णपक्षः, तस्य पौषबहुलस्य एकादशीदिवसे पूर्वाह्णकालसमये प्रथमप्रहरे विशालायां नाम शिबिकायां देवमनुष्याऽसुरसहितया पर्षदा समनुगम्यमानं प्रभु, अग्रतः सर्वं तदेव पूर्वोक्तं वाच्य, अथ विशेषः--वाणारस्या नगर्या मध्यभागेन निर्गच्छति, निर्गत्य यत्रैव आश्रमपदनामकं उद्यानं, यत्रैव अशोकनामा वृक्षः, तत्रैव उपागच्छति, उपागत्य अशोकवृक्षस्य अधस्तात् शिबिकां स्थापयति, संस्थाप्य शिबिकातः प्रत्यवतरति, प्रत्यवतीर्य स्वयमेव आभरणमाल्यालंकारान् अवमुञ्चति, अवमुच्य स्वयमेव पंचमौष्टिकं लोचं करोति, लोचं कृत्वा अष्टमेन भक्तेन अपानकेन जलरहितेन विशाखायां नक्षत्रे चंद्रयोगं उपागते सति एकं देवदूष्यं गृहीत्वा त्रिभिः पुरुषशतैः सार्धं मुंडो भूत्वा गृहान्निष्क्रम्य साधुतां प्रतिपन्नः ॥ १५७ ॥

पार्श्वः अर्हन् पुरुषादानीयः त्र्यशीति रात्रिदिवसान् यावत् नित्य व्युत्सृष्टकायस्त्यक्तदेह' ये केचन उपसर्गाः उत्पद्यते तद्यथा देवकृताः, मनुष्यकृताः, तिर्यक्कृताः, अनुलोमा वा प्रतिलोमा वा, तान् उत्पन्नान् सम्यक् सहते, तितिक्षते, क्षमते, अध्यासयति, तत्र देवोपसर्गः कमठसंबंधी, स चैवं--

स्वामी प्रव्रज्यैकदा विहरन् तापसाश्रमे कूपसमीपे न्यग्रोधाधो निशि प्रतिमया स्थितः, इतः स मेघमाली सुराधमः श्रीपार्श्वमुपद्रोतुं आगत्य क्रोधांधः स्वविकुर्वितशार्दूलवृश्चिकादिभिरभीतं प्रभुं निरीक्ष्य गगनेंधकारसन्निभान् मेघान् विकुर्व्य कल्पांतमेघवद्वर्षितुं आरेभे, विद्युतश्च अतिरौद्राकारा दिशि दिशि प्रसृताः, गर्जारवं च ब्रह्मांडस्फोटसदृशं अकरोत्, क्षणादेव च प्रभुनासाग्रं यावज्जले प्राप्ते आसनकंपेन धरणेंद्रो महिषीभिः समं आगत्य फणैः प्रभुं आच्छादितवान्, अवधिना च विज्ञातोऽमर्षेण वर्षन् मेघमाली धरणेंद्रेण हक्कितः प्रभुं शरणीकृत्य स्वस्थानं ययौ, धरणेंद्रोऽपि नाट्यादिभिः प्रभुपूजां विधाय स्वस्थानं ययौ, एवं देवादिकृतानुपसर्गान् सम्यक् सहते ॥ १५८ ॥

ततः स पार्श्वो भगवान् अनगारो जातः, इर्यायां समितः, यावत् आत्मानं भावयतः त्र्यशीति अहोरात्रा व्यतिक्रांताः, चतुरशीतितमस्य अहोरात्रस्य अंतरावर्त्तमानस्य योऽसौ ग्रीष्मकालस्य प्रथमो मासः, प्रथमः पक्षः, चैत्रस्य बहुलपक्षः कृष्णपक्षः, तस्य चैत्रबहुलस्य चतुर्थीदिवसे पूर्वाह्णकालसमये प्रथमप्रहरे धातकीनामवृक्षस्य अधः षष्टेन भक्तेन अपानकेन जलरहितेन विशाखायां नक्षत्रे चंद्रयोगं

उपागते सति शुक्लध्यानमध्यभागे वर्त्तमानस्य अनंते अनुपमे यावत् केवलवरज्ञानदर्शने समुत्पन्ने, यावत् सर्वभावान् जानन् पश्यश्च विहरति ॥

पार्श्वस्य अर्हत पुरुषादानीयस्य अष्टौ गणा अष्टौ गणधराश्चाभवन्, तत्र एकवाचनिका यतिसमूहा गणास्तन्नायकाः सूरयो गणधरास्ते श्रीपार्श्वस्य अष्टौ, आवश्यके तु दश गणा दश गणधराश्चोक्ता., तस्मादिह स्थानांगे च द्वौ अल्पायुष्कत्वादिति कारणान्नोक्तौ, इति टिप्पनके व्याख्यातं, तद्यथा—शुभश्च १ आर्यघोषश्च २ वसिष्ठ ३ ब्रह्मचारी ४ च ॥ सोम. ५ श्रीधरश्चैव ६ वीरभद्र. ७ यशाश्री ८ च ॥१६०॥

पार्श्वस्य अर्हतः पुरुषादानीयस्य आर्यदिन्नप्रमुखानि षोडश श्रमणसहस्राणि उत्कृष्टा एतावती श्रमणसंपदा अभवत् ॥ १६१ ॥

पार्श्वस्य अर्हत. पुरुषादानीयस्य पुष्पचूलाप्रमुखाणि अष्टत्रिंशत् आर्यासहस्राणि उत्कृष्टा एतावती आर्यिकासंपदा अभवत् ॥ १६२ ॥

पार्श्वस्य अर्हतः पुरुषादानीयस्य सुव्रतप्रमुखाणां श्रमणोपासकानां श्रावकाणां एकः लक्षः

चतुःषष्टिश्च सहस्राः उत्कृष्टा एतावती श्रावकाणां संपदा अभवत् ॥ १६३ ॥

पार्श्वस्य अर्हतः पुरुषादानीयस्य सुनंदाप्रमुखाणां श्रमणोपासिकानां श्राविकाणां त्रयः शतसहस्राः त्रयः लक्षाः सप्तविंशतिश्च सहस्राः उत्कृष्टा एतावती श्रमणोपासिकानां संपदा अभवत् ।१६४।

पार्श्वस्य अर्हतः पुरुषादानीयस्य अध्युष्टशतानि चतुर्दशपूर्विणां अकेवलिनामपि केवलितुल्यानां यावत् चतुर्दशपूर्विणां संपदा अभवत् ॥ १६५ ॥

पार्श्वस्य अर्हतः पुरुषादानीयस्य चतुर्दश शतानि अवधिज्ञानिनां संपदा अभवत्, दश शतानि केवलज्ञानिनां संपदा अभवत्, एकादश शतानि वैक्रियलब्धिमतां संपदा अभवत्, षट् शतानि ऋजुमतीनां मनःपर्यवज्ञानिनां संपदा अभवत, दश श्रमणशतानि सिद्धानि, विंशति आर्याशतानि सिद्धानि, अष्टौ शतानि विपुलमतीनां संपदा अभवत्, षट् शतानि वादिनां संपदा अभवत्, द्वादश शतानि अनुत्तरोपपातिनां संपदा अभवत् ॥ १६६ ॥

पार्श्वस्य अर्हतः पुरुषादानीयस्य द्विविधा मुक्तिगामिनां मर्यादा अभूत्, तद्यथा-युगांतकृद्भूमिः

पर्यायांतकृद्भूमिश्च. यावत् चतुर्थं पट्टधरपुरुषं युगांतकृद्भूमि., श्रीपार्श्वनाथादारभ्य चतुर्थं पुरुषं यावत् सिद्धिमार्गो वहमानः स्थितः, त्रिवर्षपर्याये कश्चिन्मुक्तिं गत., पर्यायांतकृद्भूमो तु केवलोत्पत्तेस्त्रिषु वर्षेषु सिद्धिगमनारम्भ. ॥

तस्मिन् काले तस्मिन् समये पार्श्व. अर्हन् पुरुषादानीय' त्रिंशत् वर्षाणि गृहस्थावस्थायां उषित्वा स्थित्वा, त्र्यशीति अहोरात्रान् छद्मस्थपर्याय पालयित्वा, किंचिदूनानि सप्तति वर्षाणि केवलिपर्याय पालयित्वा, प्रतिपूर्णानि सप्तति वर्षाणि चारित्रपर्याय पालयित्वा, एकं वर्षशतं सर्वायुः पालयित्वा, क्षीणेषु सत्सु वेदनीयायुर्नामगोत्रेषु कर्मसु, अस्यामेव अवसर्पिण्यां दु.खमसुखमानाम के चतुर्थेऽरके बहुव्यतिक्रांते सति, योऽसौ वर्षाकालस्य प्रथमो मास', द्वितीयः पक्षः श्रावणशुद्धः, तस्य श्रावणशुद्धस्य अष्टमीदिवसे, उपरि सम्मेतनामशैलशिखरस्य आत्मना चतुस्त्रिंशत्तम. मासिकेन भक्तेन अपानकेन, विशाखानक्षत्रे चंद्रयोगं उपागते सति पूर्वाह्णकालसमये, तत्र अत्रोमोक्षगमने पूर्वाह्ण एव काल., 'पुवरत्तावरत्तकालसमयंसित्ति ' कचित्पाठस्तु क्षेत्रकदोपान्मतांतरज्ञेदाद्वा,

प्रलंबितौ पाणी हस्तौ येन स तथा, कायोत्सर्गे स्थितत्वात् प्रलंबितभुजद्वयः भगवान् कालगतः व्यतिक्रांतः यावत् सर्वदुःखप्रक्षीणः ॥ १६८ ॥

पार्श्वस्य अर्हतः पुरुषादानीयस्य यावत् सर्वदुःखप्रक्षीणस्य द्वादशवर्षशतानि व्यतिक्रांतानि, त्रयोदशमस्य वर्षशतस्य अयं त्रिंशत्तमः संवत्सरः कालो गच्छति, तत्र श्रीपार्श्वनिर्वाणात् पंचाशदधिकवर्षशतद्वयेन श्रीवीरनिर्वाणं, ततश्चाऽशीत्यधिकनववर्षशतानि अतिक्रांतानि, तदा वाचना, ततो युक्तमुक्तं त्रयोदशमसंवत्सरस्यायं त्रिंशत्तमः संवत्सरः कालो गच्छतीति, इति श्रीपार्श्वनाथचरित्रं समाप्तं ॥ १६९ ॥

अथ श्रीनेमिनाथस्य जघन्यादिवाचनाभिश्चरित्रमाह—तस्मिन् काले तस्मिन् समये अर्हन् अरिष्टनेमेः पंचकल्याणकानि चित्रायां अभवन्, तद्यथा—चित्रायां च्युतः, च्युत्वा गर्भे उत्पन्नः, तथैव उत्क्षेपः, तथैव चित्राभिलापेन पूर्वोक्तपाठो वक्तव्य इत्यर्थः, यावत् चित्रायां निर्वाणं प्राप्तः. ॥ १७० ॥

तस्मिन् काले तस्मिन् समये अर्हन् अरिष्टनेमिः योऽसौ वर्षाकालस्य चतुर्थो मासः, सप्तमः पक्षः

कार्त्तिकस्य बहुलपक्षः, तस्य कार्त्तिकबहुलस्य द्वादशीदिवसे अपराजितनामकात् महाविमानात् द्वात्रिंशत् सागरोपमाणि स्थितिर्यत्र इदृशात् अनंतर च्यवनं कृत्वा अस्मिन्नेव जंबूद्वीपे द्वीपेभरतक्षेत्रे सौर्यपुरे नगरे समुद्रविजयस्य राज्ञः भार्याया शिवाया देव्याः कुक्षौ पूर्वापररात्रसमये मध्यरात्रौ यावत् चित्रायां गर्भतया उत्पन्नः, सर्वं तथैव स्वप्नदर्शनद्रव्यसंहरणादिवर्णनं अत्र भणितव्य ॥

तस्मिन् काले तस्मिन् समये अर्हन् अरिष्टनेमिः योऽसौ वर्षाकालस्य प्रथमो मासः, द्वितीयः पक्षः, श्रावणशुद्धः, तस्य श्रावणशुद्धस्य पंचमीदिवसे नवसु मासेषु बहुप्रतिपूर्णेषु सत्सु यावत् चित्रानक्षत्रे चन्द्रयोगं उपागते सति अरोगा शिवा अरोगं दारकं प्रजाता, जन्मोत्सवं समुद्रविजयाभिलापेन ज्ञातव्य, यावत् तस्मात् भवतु कुमारः अरिष्टनेमिर्नाम्ना कृत्वा, यस्मात् भगवति गर्भस्थे मातारिष्टरत्नमयं नेमिं चक्रधारां स्वप्नेऽद्राक्षीत्, ततोऽरिष्टनेमिः, अकारस्य अमंगलपरिहारार्थत्वाच्च अरिष्टनेमिरिति, रिष्टशब्दो हि अमंगलवाचीति, कुमारस्तु अपरिणीतत्वात्, अपरिणयन तु एवं—

एकदा यौवनाभिमुखं नेमिं निरीक्ष्य शिवादेवी समवदत्, वत्सानुमन्यस्व पाणिग्रहणं, पूरय

चास्मन्मनोरथं, स्वामी तु योग्यां कन्यां प्राप्य परिणेष्यामीति प्रत्युत्तरं ददौ, ततः पुनरेकदा कौतुकरहितोऽपि भगवान् मित्रप्रेरितः क्रीडमानःकृष्णायुधशालायामुपागमत्,तत्र कौतुकोत्सुकैर्मित्रैर्निर्झर्षितोऽगुल्यग्रे कुलालचक्रवच्चक्रं भ्रामितवान्, शार्ङ्गं धनुर्मृणालवन्नामितवान्, कौमुदकीगदां यष्टिवदुत्पाटितवान्, पांचजन्यं शंखं च मुखे धृत्वा आपूरितवान्, तदा च—निर्मूल्यालानमूलं व्रजति गजगणः खंडयन् वेश्ममालां। धावंत्युत्त्रोट्य बंधान् सपदि हरिहया मंदुरायाः प्रणष्टाः॥ शब्दाद्वैतं समस्तं बधिरितमभवत्तत्पुरं व्यग्रमुग्रं। श्रीनेमेर्वक्त्रपद्मप्रकटितपवनैः पूरिते पांचजन्ये ॥ १ ॥ तं तादृशं च शब्दं निशम्योत्पन्नः कोऽपि वैरीति व्याकुलचित्तः केशवस्त्वरितं आयुधशालायां आगतः, दृष्ट्वा च नेमिं चकितो निजभुजबलतुलनाय, आवाभ्यां बलपरीक्षा क्रियते, इति नेमिं वदंस्तेन सह मल्लाखाटके जगाम, श्रीनेमिराह—अनुचितं ननु भूलुठनादिकं। सपदि बांधव युद्धमिहावयोः॥ बलपरीक्षणकृद्भुजवालनं। भवतु नान्यरणः खलु युज्यते॥ १॥ द्वाभ्यां तथैव स्वीकृतं, कृष्णप्रसारितं बाहुं। नेमिर्नेत्रलतामिव ॥ मृणालदंडवत्तूर्णं। वालयामास लीलया ॥ १ ॥ शाखानिभे नेमिजिनस्य बाहौ।

तत स शाखामृगवद्विलक्ष ॥ चक्रे निज नाम हरिर्यथार्थ- मुधद्विपादद्विगुणासितास्यः ॥१॥ ततो मह-
तापि पराक्रमेण नेमिभुजेऽचलिते सति विपक्षचित्तः कृष्णो मम राज्यमेष सुखेन ग्रहीष्यतीति चिंता-
तुरः स्वचित्ते चिंतयामास- क्लिश्यते केवलं स्थूला । सुधीस्तु फलमश्नुते ॥ ममंथ शंकरः सिंधु । र-
त्नान्यापुर्दिवौकस ॥ १ ॥ अथवा, क्लिश्यते केवलं स्थूला । सुधीस्तु फलमश्नुते ॥ दंता दलंति क-
ष्टेन । जिह्वा गलति लीलया ॥ २ ॥ ततो बलभद्रेण सहालोचयति, किं विधास्ये, नेमिस्तु राज्यलि-
प्सुर्बलवांश्च, तत आकाशवाणी प्रादुरभूदहो पुरा नमिनाथेन कथितमासीद्यदुत द्वाविंशस्तीर्थंकरो
नेमिनामा कुमार एव प्रव्रजिष्यतीति श्रुत्वा निश्चितो निश्चयार्थं नेमिना सह जलक्रीडां कर्तुं अंतःपुरप-
रिवृतःसरोंतरे प्रविष्ट ,तत्र च प्रणयत परिगृह्य करे जिन। हरिरवेशयदाशु सरोंतरे ॥ तदनु शीघ्रमसिंचत
नेमिनं। कनकशृंगजलैर्घुसृणाविलैः ॥ १॥ तथा रुक्मिणीप्रमुखगोपिका अपि ज्ञापितवान्, यदय ने-
मिर्निःशंक क्रीडया पाणिग्रहाभिमुखीकार्यः, ततश्च ता अपि-काश्चित् केसरसारनीरनिकरैराछोटयति प्रभु
। काश्चिद्‌ बंधुरपुष्पकंदुकभरैर्निघ्नंति वक्षःस्थले ॥ काश्चित्तीक्ष्णकटाक्षलक्षविशिखैर्विध्यंति नर्मोक्तिभिः

! काश्चित्कानकलाविलासकुशला विस्मापयांचक्रिरे ॥ १ ॥ ततश्च–तावत्यः प्रमदाः सुगंधिपयसा स्वर्णादिशृंगीभृशं । नृत्वा तज्जलनिर्झरैः पृथुतरैःकर्त्तुं प्रभुं व्याकुलं ॥ प्रावर्त्तंत मिथो हसंति सततं क्रीडोल्लसन्मानसा–स्तावद्व्योमनि देवगीरिति समुद्भूता श्रुता चाखिलैः ॥ १ ॥ मुग्धाः स्थ प्रमदा यतोऽमरगिरौ गिर्वाणनाथैश्चतुः–षष्ट्या योजनमानवक्त्रकुहरैः कुंभैः सहस्राधिकैः ॥ बाल्येऽपि स्नपितो य एष भगवान्नाभून्मनागाकुलः । कर्त्तुं तस्य सुयत्नतोऽपि किमहो युष्माभिरीशिष्यते ॥ २ ॥

ततो नेमिरपि हरिं ताश्च सर्वा जलैराच्छोटयतिस्म, कमलपुष्पकंदुकैस्ताडयतिस्म, इत्यादि सविस्तारं जलक्रीडां कृत्वा तटमागत्य नेमिं स्वर्णासने निवेश्य सर्वा अपि गोप्यः परिवेष्ट्य स्थिताः, तत्र रुक्मिणी जगौ–निर्वाहकातरतयोद्वहसे न यत्त्वं । कन्यां तदेतदविचारितमेव नेमे ॥ भ्राता तवास्ति विदितः सुतरां समर्थो । द्वात्रिंशदुन्मितसहस्रवधूर्विवोढा ॥ १ ॥ तथा सत्यनामाप्युवाच–ऋषभमुख्यजिनाः करपीडनं । विदधिरे दधिरे च महीशतां ॥ बुभुजिरे विषयांश्च बहून् सुतान् । सुषुविरे शिवमप्यथ लेभिरे ॥ २ ॥ त्वमसि किंतु नवोऽद्य शिवंगमी । शृणु मरिष्टकुमार विचारय

॥ कलय देवर चारुगृहस्थतां । रचय बंधुमनस्सु च सुस्थतां ॥ ३ ॥ अथ जगाद च जांबुवती जवात् । शृणु पुरा हरिवंशविभूषणं ॥ स मुनिसुव्रततीर्थपतिर्गृही । शिवमगादिह जातसुतोऽपि हि ॥ ४ ॥ पद्मावतीति समुवाच विना वधूटीं । शोभा न काचन नरस्य भवत्यवश्यं ॥ नो केवलस्य पुरुषस्य करोति कोऽपि । विश्वासमेष विट एव भवेदमार्यः ॥ ५ ॥ गांधारी जगौ–सज्जान्ययात्राशुभ-संघसार्थ–पर्वोत्सवा वेश्मविवाहकृत्य ॥ उद्यानिकापुःप्रपर्वदश्च । शोभंत एतानि विनांगनां नो ॥ ६ ॥ गौरी उवाच–अज्ञानभाजः किल पक्षिणोऽपि । कृतो परिभ्रम्य वसंति सायं ॥ नीडे स्वकांतासहिताः सुखेन । ततोऽपि किं देवर मूढहक् त्वं ॥ ७ ॥ लक्ष्मणाप्यबोधत्—स्नानदिसर्वांग-परिस्क्रियाया । विचक्षणः प्रीतिरसाभिरामः ॥ विस्रम्भपात्रं विधुरे सहायः । कोऽन्यो भवेन्नूनमृते प्रियायाः ॥ ८ ॥ सुसीमाप्यवादीत्–विना प्रियां को गृहमागतानां । प्राघूर्णकानां मुनिसत्तमानां ॥ करोति पूजाप्रतिपत्तिमन्यः । कथं च शोभां लभते मनुष्यः ॥ ९ ॥ एवमन्यासां अपि गोपांगनानां वचोयुक्त्या यदूनामाग्रहाच्च मौनावलंबितमपि सिताननं जिनं निरीक्ष्य, अनिषिद्धं अनुमतमिति

न्यायात् नेमिना पाणिग्रहणं स्वीकृतमिति ताभिर्गाढं उद्घोषितं, तथैव जनोक्तिरिति. ततः कृष्णेनोग्रसेनपुत्री राजीमती मार्गिता, लग्नं पृष्टश्च क्रोष्टिकनामा ज्योतिर्वित् प्राह—वर्षासु शुभकार्याणि । नान्यान्यपि समाचरेत् ॥ गृहिणां मुख्यकार्यस्य । विवाहस्य तु का कथा ॥ १ ॥ समुद्रस्तं वभाषेऽथ । कालक्षेपोऽत्र नार्हति ॥ नेमिः कथंचित् कृष्णेन । विवाहाय प्रवर्तितः ॥ २ ॥ मा-भूद्विवाहप्रत्यूहो । नेदीयस्तद्दिनं वद ॥ श्रावणे मासि तेनोक्ता । ततः षष्ठी समुज्ज्वला ॥ ३ ॥ चलितश्च श्रीनेमिकुमारः स्फारशृंगारः प्रजाप्रमोदकरो रथारूढो धृतातपत्रसारः श्रीसमुद्रविजयादिदशार्हकेशवबलभद्रादिविशिष्टपरिवारः शिवादेवीप्रमुखप्रमदाजेगीयमानधवलमंगलविस्तरः पाणिग्रहणाय अग्रतो गच्छंश्च वीक्ष्य सारथिं प्रति कस्येदं कृतमंगलभरं धवलमंदिरं इति पृष्टवान्, ततः सोंगुल्यग्रेण दर्शयन् इति जगाद, उग्रसेननृपस्य तव श्वसुरस्यायं प्रासाद इति, इमे च तव जायाया राजीमत्याः सख्यौ चंद्राननामृगलोचनाभिधाने मिथो वार्त्तयतः, तत्र मृगलोचना विलोक्य चंद्राननां प्राह, हे चंद्रानने? स्त्रीवर्गे एका राजीमत्येव वर्णनीया, यस्याः अयमेतादृशो वरः पाणिं गृहीष्यति,

चन्द्राननापि मृगलोचनामाह—राजीमतीमद्भुतरूपरम्यां । निर्माय धातापि यदीदृशेन ॥ वरेण नो यो- जयति प्रतिष्ठा । लभेत विज्ञानविचक्षणः कां ॥ १ ॥ इतश्च तूर्यशब्दमाकर्ण्य मातृगृहात् राजीमती सखीमध्ये प्राप्ता, हे सख्यौ ! भवतीभ्यामेव साडंबरमागच्छन्नपि वरो विलोक्यते, अहमपि विलोकयितु न लभेय, इति बलात्तदंतरे स्थित्वा नेमिं आलोक्य साश्चर्यं चिंतयति, किं पातालकुमारः । किंवा मकरध्वज. सुरेंद्रः किं ॥ किं वा मम पुण्यानां । प्राग्भारो मूर्त्तिमानेष. ॥१॥ तस्य विधातुः करयो—रात्मानं न्युंछनं करोमि मुदा ॥ येनेष वरो विहित । सौभाग्यप्रभृतिगुणराशिः ॥ २ ॥ मृगलोचना राजीमत्यभिप्रायं परिज्ञाय सप्रीतिहासं—हे सखि चंद्रानने ! समग्रगुणसंपूर्णेऽपि अस्मिन् वरे एकं दूषणं अस्त्येव, परं वरार्थिन्यां राजीमत्यां शृण्वत्यां वक्तु न शक्यते, चन्द्राननापि—हे सखि मृगलोचने ! मयापि तद् ज्ञातं परं सांप्रतं मौनमेवाचरणीय, राजीमत्यपि त्रपया मध्यस्थतां दर्शयती—हे सख्यौ ! यस्याः कस्या अपि भुवनाद्भुतभाग्यधन्याया. कन्याया अयं वरो भवतु, परं सर्वगुणसुंदरेऽस्मिन् वरे दूषणं तु दुग्धमध्यात् पूतरकर्षणप्राय असंभाव्यमेव ॥

तदनु ताभ्यां सविनोदं कथितं, भो राजीमति! वरः प्रथमः गौरो विलोक्यते अपरे गुणास्तु परिचये सति ज्ञायंते, तद्गौरत्वं तु कज्जलानुकारमेव दृश्यते, राजीमती सेर्ष्यं सख्यौ प्रत्याह—अद्य यावत् युवां चतुरे इति मम भ्रमोऽभवत्, सांप्रतं तु स भग्नः, यत् सकलगुणकारणं श्यामत्वं भूषणमपि दूषणतया प्ररूपितं, शृणुतं तावत् सावधानीभूय भवत्यौ श्यामत्वे श्यामवस्त्राश्रयणे च गुणान्, केवलगौरत्वे दोषांश्च, तथाहि—भू १ चित्तवल्लि २ अगुरु ३। कच्चूरी ४ घण ५ कणीणिगा ६ केसा ७ ॥ कसवट्ट ८ मिसी ९ रयणी १०। कसिणा एए अणग्घफला ॥ १ ॥ इति कृष्णत्वे गुणाः ॥ कप्पूरे अंगारो १। चंदे विंधं २ कणीणिगा नयणे ३ ॥ भुज्जे मरीअ ४ चित्ते—रेहा ५ कसिणावि गुणहेऊ ॥ २ ॥ इति कृष्णवस्त्राश्रयणे गुणाः ॥ खारं लवणं १ दहणं। हिमं च २ अइगोरविग्गहो रोगी ३ ॥ परवसगुणे अचुखो। केवलगोरत्तणेऽवगुणा ॥ ४ ॥

एवं परस्परं तासां जल्पे जायमाने श्रीनेमिः पशूनामार्त्तस्वरं श्रुत्वा साक्षेपं—हे सारथे! कोऽयं दारुणः स्वरः, सारथिः प्राह—युष्माकं विवाहे भोजनसमुदायीकृतपशूनामयं स्वर इत्युक्ते स्वामी चिं-

तयतिस्म, धिग् विवाहोत्सवं यदनुत्सवोऽमीषां जीवानां, इतश्च ' दाहिणं च- क्खु परिप्फुरइति ' वदंतीं राजीमतींप्रति सख्यौ प्रतिहतममंगलं ते इत्युक्त्वा थुत्थुत्कारं कुरुत., नेमिस्तु हे सारथे रथमितो निवर्त्तय, अत्रांतरे नेमिं पश्यन्नेको हरिणः स्वग्रीवया हरिणीग्रीवां पिधाय स्थितः, अत्र कविघटना-स्वामिनं वीक्ष्य हरिणो ब्रूते-मापहरसु मापहरसु। एअं मह हिअयहा- रिणिं हरिणिं ॥ सामी अम्हं मरणेवि। दुस्सहो पिअतमाविरहो ॥१॥ हरिणी नेमिमुख निभाल्य हरिणं- प्रति ब्रूते-एसो पसन्नवयणो। तिहुअणसामी अकारणं वधू ॥ ताविन्नवेसु वल्लह। रक्खत्थं सव्वजीवाणं ॥२॥ हरिणोऽपि पत्निप्रेरितो नेमिं ब्रूते, निज्झरणनीरपाणी—अरण्णतणभक्खणं च वणवासो ॥ अम्हाण निरवराहाण—जीविअं रक्ख रक्ख पहो ॥ ३ ॥ एवं सर्वेऽपि पशवः स्वामिनंप्रति विज्ञपयति, तावत्स्वामी बभाषे, भो पशुरक्षका मुंचत मुंचत इमान् पशून्, नाहं विवाहं करिष्ये, पशुरक्षकाः श्रीनेमिवचसा पशून् मुंचंति, सारथिरपि रथं निवर्त्तयतेस्म, अत्र कविः—

हेतुरिंदोः कलंके यो। विरहे रामसीतयोः ॥ नेमे राजीमतीत्यागे। कुरंगः सत्यमेव सः ॥१॥

समुद्रविजयशिवादेवीप्रमुखजनास्तु शीघ्रमेव रथं स्खलयंतिस्म, शिवा च सवाष्पं ब्रूते, पिछेमि जणणिवल्लह । वच्छ तुमं पढमं पत्थणं किंपि ॥ काऊण पाणिगहणं । मह दंसे निअयवहूवयणं ॥ १ ॥ नेमिराह—मुंचाग्रहमिमं मात—र्मानुषीषु न मे मनः ॥ मुक्तिस्त्रीसंगमोत्कंठ—मकुंठमवतिष्ठते ॥ २ ॥ यतः—या रागिणि विरागिण्य—स्ताः स्त्रियः को निषेवते ॥ अतोऽहं कामये मुक्तिं । या विरागिणि रागिणी ॥ ३ ॥ इत्यादि, राजीमती हा देव! किमुपस्थितमित्युक्त्वा मूर्छां प्राप्ता सखीभ्यां चंदनद्रवैराश्वासिता कथमपि लब्धसंज्ञा सवाष्पं गाढस्वरेण प्राह—हा जायवकुल दिणयर। हा निरुवमनाण हा जगसरण ॥ हा करुणायर सामी । मं मुत्तूणं कहं चलिउं ॥ ४ ॥ हा हिअय धिठ्ठ निठ्ठुर । अज्जवि निल्लज्ज जीविअं वहसि ॥ अन्नरथ वल्लहे नाहे अत्तणो जाउं ॥ ५ ॥ पुनर्निःश्वस्य सोपालंभं जगाद—जइ सयलसिद्धभुत्ताइ । मुत्तिगणिआइ धुत्त रत्तोसि ॥ ता एवं परिणयणा—रंभेण विडंबिआ किमहं ॥ ६ ॥ सख्यौ सरोषं—लोअपसिद्धी वत्तडी । सहिए इक्क सुणिज्ज ॥ सरलं विरलं सामलं । चुकिअ वीहि करिज्जा ॥ ७ ॥ पिम्मरहिअंमि पिअ । सहि एअंमिवि किं करेसि पिअभावं ॥ पिम्मपरं

किंपि वरं । अन्नयरं ते करिस्सामो ॥ ८ ॥ राजीमती कर्णौ पिधाय हा अश्राव्य किं श्रावयथः, जइ कहवि पच्छिमाए । उदय पावेइ दिणयरो तहवि ॥ मुत्तूण नेमिनाहं । करेमि नाहं वरं अन्नं ॥ ॥ ९ ॥ पुनरपि नेमिनं प्रति—अतेच्छुरिष्ठाधिकमेव दत्ते । त्वं याचकेभ्यो एहमागतेभ्यः ॥ मयार्थयत्वा जगतामधीश । हस्तोऽपि हस्तोपरि नैव लब्धः ॥ १० ॥ अथ विरक्ता राजीमती प्राह—जइवि हु एअस्स करो । मज्झ करे नो आसि परिणयणे ॥ तहवि सिरे मह मुच्चिअ—दिक्खासमए करो होही ॥ ११ ॥ अथ नेमिनं सपरिकर. समुद्रविजयो जगौ—

नाभेयाद्याः कृतोद्वाहा । मुक्तिं जग्मुर्जिनेश्वरा ॥ ततोऽप्युच्चैः पदं ते स्यात् । कुमार ब्रह्मचारिणः ॥ १२ ॥ नेमिराह—हे तात ! क्षीणजोगकर्माहमस्मि, किंच—एकस्त्रीसंग्रहेऽनंत—जंतुसंघातघातके ॥ भवतां भवतांतेऽस्मिन् । विवाहे कोऽयमाग्रहः ॥ १३ ॥ अत्र कविः—मन्येंगनाविरक्तः । परिणयनमिषेण नेमिरागत्य ॥ राजीमतीं पूर्वभव—प्रेम्णा समकेतयन्मुक्त्यै ॥ १४ ॥

अर्हन् अरिष्टनेमिर्दक्षः यावत् त्रीणि वर्षशतानि कुमारः सन् एहस्थावस्थामध्ये उषित्वा

पुनरपि लोकांतिकाः, इत्यादि सर्वं तदेव पूर्वोक्तं भणितव्यं, लोकांतिका देवाः यथा—जय निर्जित-
कंदर्प । जंतुजाताऽभयप्रद ॥ नित्योत्सवावतारार्थं। नाथ तीर्थं प्रवर्त्तय ॥ १ ॥ इति स्वामिनं प्रोच्य,
स्वामी वार्षिकदानानंतरं त्रिभुवनमानंदयिष्यतीति समुद्रविजयादीन् प्रोत्साहयंतिस्म, ततः सर्वे-
ऽपि संतुष्टाः यावत् धनं गोत्रिणां विभज्य दत्वा, दानविधिस्तु श्रीवीरवद् ज्ञेयः ॥ १७२ ॥

योऽसौ वर्षाकालस्य प्रथमो मासः, द्वितीयः पक्षः, श्रावणस्य शुक्लः पक्षः, तस्य श्रावणशुक्लस्य
षष्ठीदिवसे पूर्वाह्णकालसमये उत्तरकुरायां शिबिकायां स्थितः, देवमनुष्याऽसुरसहितया पर्षदा सम-
नुगम्यमानो यावत् द्वारवत्या नगर्या मध्यभागे निर्गच्छति, निर्गत्य यत्रैव रैवतकं उद्यानं तत्रैव उपा-
गच्छति, उपागत्य अशोकनामवृक्षस्य अधस्तात् शिबिकां स्थापयति, संस्थाप्य शिबिकातः प्रत्यवतरति,
प्रत्यवतीर्य स्वयमेव आभरणमालालंकारान् अवमुंचति, स्वयमेव पंचमौष्टिकं लोचं करोति, कृत्वा
च षष्ठेन भक्तेन अपानकेन जलरहितेन चित्रायां नक्षत्रे चंद्रयोगं उपागते सति एकं देवदूष्यं
गृहीत्वा, एकेन पुरुषाणां सहस्रेण सार्द्धं मुंडो भूत्वा प्रभुः अगारान्निष्क्रम्य साधुतां प्रतिपन्नः ॥१७३॥

अर्हन् अरिष्टनेमि चतुःपञ्चाशत् अहोरात्रान् यावत् नित्यं व्युत्सृष्टकाय. तदेव पूर्वोक्तं सर्वं वाच्य, यावत् पञ्चपंचाशत्तमस्य अहोरात्रस्य अतरा वर्त्तमानस्य योऽसौ वर्षाकालस्य तृतीयो मासः पंचमः पक्ष., आश्विनस्य कृष्णपक्ष., तस्य आश्विनबहुलस्य पंचदशे दिवसे दिवसस्य पश्चिमे भागे उज्जयंतनामशैलस्य शिखरे वेतसनामवृक्षस्य अधस्तात् अष्टमेन भक्तेन अपानकेन जलरहितेन चित्रायां नक्षत्रे चंद्रयोग उपागते सति शुक्लध्यानस्य मध्यभागे वर्त्तमानस्य प्रभो· अनंतं केवलज्ञानं समुत्पन्नं, यावत् सर्वभावान् जानन् पश्यश्च विहरति, तत्र केवलज्ञानं रैवतकस्थे सहस्राम्रवने समुत्पेदे, तत उद्यानपालको विष्णोर्व्यजिज्ञपत्, विष्णुरपि महर्द्ध्या भगवंतं वंदितुमाययौ, राजीमत्यपि तत्रागता, अथ प्रभोर्देशनां निशम्य वरदत्तनृप सहस्रद्वयनृपयुतो व्रतमाददे, हरिणा च राजीमत्या· स्नेहकारणे पृष्टे प्रभुर्धनवतीभवादारभ्य तया सह स्वस्य नवभवसंबंधमाचष्टे, तथाहि—

प्रथमे भवेऽहं धननामा राजपुत्रस्तदेयं धनवती नाम्नी मत्पत्नी अभूत १, ततो द्वितीये भवे प्रथमे देवलोके आवां देवदेव्यो २, ततस्तृतीये भवेऽहं चित्रगतिनामाविद्याधरस्तदेयं रत्नवती मत्पत्नी ३.

ततश्चतुर्थे भवे चतुर्थे कल्पे द्वावपि देवौ ४, पंचमे भवेऽहं अपराजितराजा, एषा प्रियतमा राज्ञी, ५, षष्ठे एकादशे कल्पे द्वावपि देवौ ६, सप्तमेऽहं शंखो नाम राजा, एषा तु यशोमती राज्ञी ७, अष्टमे अपराजिते द्वावपि देवौ ८, नवमेऽहं एषा राजेमती ९. ततः प्रभुरन्यत्र विहृत्य क्रमात्पुनरपि रैवतके समवासरत्, अनेकराजकन्यापरिवृता राजीमती तदा च रथनेमिश्च प्रभुपार्श्वे दीक्षां जगृहतुः, अन्यदा च राजीमती प्रभुं नंतुं प्रतिव्रजन् मार्गे वृष्ट्या बाधिता, एकां च गुहां प्राविशत्, तस्यां च गुहायां पूर्वं प्रविष्टं रथनेमिं अजानती सा क्लिन्नानि वस्त्राणि शोषयितुं परितश्चिक्षेप, ततश्च तां अपहस्तितत्रिदशतरुणीरामणीयकां साक्षात् कामरमणीमिव रमणीयां तथा विवसनां निरीक्ष्य भ्रातुर्वैरादिव मदनेन मर्मणि हतः कुललज्जामुत्सृज्य धीरतामवधीर्य रथनेमिस्तां जगाद—अयि सुंदरि किं देहः—शोष्यते तपसा त्वया ॥ सर्वांगभोगसंयोग—योग्यः सौभाग्यसेवधिः ॥ १ ॥ आगच्छ स्वेच्छया भद्रे। कुर्वहे सफलं जनुः ॥ आवामुभावपि प्रांते। चरिष्यावस्तपोविधिं ॥ २ ॥ ततश्च महासती तदाकर्ण्य तं दृष्ट्वा च धृताद्भुतधैर्या तं प्रत्युवाच—महानुभाव कोऽयं तेऽभिलाषो नरकाध्वनि ॥ सर्वं सावद्यमुत्सृ-

ज्य। पुनर्वांछन्न लज्जसे ॥ १ ॥ अगधनकुले जाता—स्तिर्यंचो ये भुजंगमाः ॥ तेऽपि नो वांतमिच्छंति। त्वं नीचः किं ततोऽप्यसि ॥ २ ॥ इत्यादिवाक्यैः प्रतिबोधितः श्रीनेमिपार्श्वे तद्दुश्चीर्णमालोच्य तपस्तप्त्वा मुक्तिं जगाम, राजीमत्यपि दीक्षामाराध्य शिवशय्यामारूढा, चिरप्रार्थितं शाश्वतिकं श्रीनेमिसंयोगमवाप, यदाहु —छद्मस्था वत्सरं स्थित्वा। गेहे वर्षचतुःशतीं॥ पचवर्षशतीं राजी। ययौ केवलिनी शिवं ॥ १ ॥ १३४ ॥

अर्हतोऽरिष्टनेमेः अष्टादश गणाः, अष्टादशगणधराश्च अभवन् ॥ १३५ ॥

अर्हतोऽरिष्टनेमेः वरदत्तप्रमुखाणि अष्टादश श्रमणानां सहस्रासि उत्कृष्टा एतावती श्रमणसंपदा अभवत् ॥ १३६ ॥

अर्हतः अरिष्टनेमेः आर्ययक्षिणीप्रमुखाणि चत्वारिंशत् आर्यासहस्राणि उत्कृष्टा एतावती आर्यासंपदा अभवत् ॥ १३७ ॥

अर्हतोऽरिष्टनेमेः नंदप्रमुखाणां श्रावकाणां एकः लक्षः एकोनसप्ततिश्च सहस्राः उत्कृष्टा एता-

वती श्रावकाणां संपदा अभवत् ॥ १७८ ॥

अर्हतोऽरिष्टनेमेः महासुव्रताप्रमुखाणां श्राविकाणां त्रयो लक्षाः षट्त्रिंशत् सहस्राः उत्कृष्टा एतावती श्राविकाणां संपदा अभवत् ॥ १७९ ॥

अर्हतोऽरिष्टनेमेः चत्वारि शतानि चतुर्दशपूर्विणां अकेवलिनामपि केवलितुल्यानां यावत् संपदा अभवत्, पंचदश शतानि अवधिज्ञानिनां संपदा अभवत्, पंचदश शतानि केवलज्ञानिनां संपदा अभवत्, पंचदश शतानि वैक्रियलब्धिमतां संपदा अभवत्, दश शतानि विपुलमतीनां संपदा अभवत्, अष्टौ शतानि वादिनां संपदा अभवत्, षोडश शतानि अनुत्तरोपपातिनां संपदा अभवत्, पंचदश श्रमणानां शतानि सिद्धानि, त्रिंशत् आर्याशतानि सिद्धानि ॥ १८० ॥

अर्हतोऽरिष्टनेमेः द्विविधा अंतकृन्मर्यादा अभवत्, तद्यथा–युग्यांतकृद्भूमिः पर्यायांतकृद्भूमिश्च, यावत् इदमग्रे योज्यं अष्टमं पुरुषयुग्यं पट्टधरं युगांतकृद्भूमिरासीत्, द्विवर्षपर्याये प्रभौ जाते कोऽपि अंतमकार्षीत् ॥ १८१ ॥

तस्मिन् काले तस्मिन् समये अर्हन् अरिष्टनेमिः त्रीणि वर्षशतानि कुमारावस्थायां स्थित्वा, चतुःपंचाशत् अहोरात्रान् छद्मस्थपर्याय पालयित्वा, किंचिदूनानि सप्त वर्षशतानि केवलिपर्याय पालयित्वा, प्रतिपूर्णानि सप्तवर्षशतानि चारित्रपर्याय पालयित्वा एकं वर्षसहस्रं सर्वायुः पालयित्वा, क्षीणेषु सत्सु वेदनीयायुर्नामगोत्रेषु कर्मसु, अस्यामेव अवसर्पिण्यां दुःखमसुखमानामके चतुर्थेऽरके बहु व्यतिक्रांते सति, योऽसौ उष्णकालस्य चतुर्थो मासः, अष्टमः पक्षः आषाढशुक्लः, तस्य आषाढशुक्लस्य अष्टमीदिवसे उपरि उज्जयतनामशैलशिखरस्य, पंचभिः षट्त्रिंशद्युतैः अनगारशतैः सार्द्धं मासिकेन अनशनेन अपानकेन जलरहितेन चित्रानक्षत्रे चन्द्रयोगं उपागते सति पूर्वापररात्रिसमये, मध्यरात्रौ निषण्ण सन् कालगतः, यावत् सर्वदुःखप्रक्षीणः, अथ नेमिनिर्वाणात् कियता कालेन पुस्तकलिखनादि जातमित्याह ॥ १७२ ॥

अर्हतोऽरिष्टनेमेः कालगतस्य यावत् सर्वदुःखप्रक्षीणस्य चतुरशीतिवर्षसहस्राणि व्यतिक्रांतानि, पंचाशीतितमस्य वर्षसहस्रस्यापि नववर्षशतानि व्यतिक्रांतानि, दशमस्य वर्षशतस्य अथ अशीतितमः

संवत्सरः कालो गच्छति ॥ १८३ ॥ श्रीनेमिनिर्वाणाच्चतुरशीत्या वर्षसहस्रैः श्रीवीरनिर्वाणमभूत्, श्रीपार्श्वनिर्वाणं तु वर्षाणां त्र्यशीत्या सहस्रैःसार्द्धैःसप्तभिश्च शतैरभूदिति स्वधिया ज्ञेयं ॥ इति श्रीनेमिचरित्रं ॥

अतःपरं ग्रंथगौरवभयात् पश्चानुपूर्व्या नम्यादीनां अजितांतानां जिनानां अंतरकालमानमेवाह–नमिनाथस्य अर्हतः कालगतस्य यावत् सर्वदुःखप्रक्षीणस्य पंच वर्षाणां लक्षाः, चतुरशीति वर्षसहस्राणि, नव वर्षशतानि च व्यतिक्रांतानि. दशमस्य वर्षशतस्य अयं अशीतितमः संवत्सरः कालो गच्छति । १८४ । श्रीनमिनिर्वाणात् पंचभिर्वर्षाणां लक्षैः श्रीनेमिनिर्वाणं, ततश्चतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे च पुस्तकवाचनादि (२१)

( श्रीनमिनाथना निर्वाणथी पांच लाख वर्षे श्रीनेमिनिर्वाणं, तेवारपछी चोरासी सहस्र नव शत एंसी वर्षे पुस्तकवाचनादि )

मुनिसुव्रतस्य अर्हतः यावत् सर्वदुःखप्रक्षीणस्य एकादश वर्षाणां लक्षाः, चतुरशीति वर्षसहस्राणि, नववर्षशतानि च व्यतिक्रांतानि, दशमस्य वर्षशतस्य अयं अशीतितमः संवत्सरः कालो गच्छति, श्रीमुनिसुव्रतनिर्वाणात् षड्भिर्वर्षाणां लक्षैः श्रीनमिनिर्वाणं, ततश्च पंच लक्ष चतुरशीतिस-

हस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि, अत्र च मुनिसुव्रतनमिनिर्वाणांतरस्य नमिनिर्वाणपुस्तकवाचनांतरस्य च मिलने सूत्रोक्त मान जवति, एवं सर्वत्र ज्ञेय ॥ २० ॥ १७५ ॥

( श्रीमुनिसुव्रतना निर्वाणथी छ लाख वर्षे श्रीनमिनिर्वाण, तेवारपछी पांच लाख चोर्यासी सहस्र नवशत एसी वर्षे पुस्तकवाचनादि ॥ २० ॥)

मल्लिनाथस्य अर्हतः यावत् प्रक्षीणस्य पंचपष्टिवर्षाणां लक्षा., चतुरशीति वर्षसहस्राणि, नव वर्षशतानि च व्यतिक्रातानि, दशमस्य वर्षशतस्य अय अशीतितम. संवत्सर. कालो गच्छति ॥ १७६ ॥ श्रीमल्लिनिर्वाणाच्चतुःपंचाशतवर्षाणा लक्षैः श्रीमुनिसुव्रतनिर्वाण, ततश्चैकादशलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि, उभयमिलितं च सूत्रोक्त मानं जवति (१९)

( मल्लिनाथना निर्वाणथी चोपन लाख वर्षे श्रीमुनिसुव्रतनिर्वाण, तेवारपछी इग्यार लाख चोर्यासी हजार नवसें एसी वर्षे पुस्तकवाचनादि ॥ १९ ॥ )

अरनाथस्य अर्हत यावत् प्रक्षीणस्य एकं वर्षकोटीनां सहस्र व्यतिक्रातं, शेपः कालो मल्लि-

नाथवद् ज्ञेयः, स चायं–पंचषष्टिः लक्षाः चतुरशीति वर्षसहस्राणि च व्यतिक्रांतानि, तस्मिन् समये महावीरो निर्वाणं गतः, ततःपरं नव वर्षशतानि व्यतिक्रांतानि, दशमस्य वर्षशतस्य अयं अशीतितमः संवत्सरः कालो गच्छति. अयमेव पाठः अग्रतः यावत् श्रेयांसस्तावत् द्रष्टव्यः ॥ १७७ ॥ श्रीअरनिर्वाणाद्वर्षाणां कोटिसहस्रेण श्रीमल्लिनिर्वाणं, ततश्च पंचषष्टिलक्षचतुरशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ १७ ॥

( श्री अरनिर्वाणथी कोटीसहस्र वर्षे श्रीमल्लिनिर्वाणं, तिवारपछी पांसठ लाख चोर्यासी हजार नवसो एंसी वर्षे पुस्तकवाचनादि ॥ १८ ॥ )

कुंथुनाथस्य अर्हतः यावत् प्रक्षीणस्य एकः चतुर्थो भागः पल्योपमस्य व्यतिक्रांतः, पंचषष्टिलक्षप्रमुखं शेषं मल्लिनाथवद् ज्ञेयं; श्रीकुंथुनिर्वाणाद्वर्षकोटिसहस्रन्यूनपल्योपमचतुर्थभागेन श्रीअरनिर्वाणं, ततश्च वर्षसहस्रकोटिपंचषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि (१७) ॥ १७७ ॥

( श्रीकुंथुनाथना निर्वाण पछी कोटीसहस्र वर्षे न्यून पल्योपमने चोथे भागे श्रीअरनाथनिर्वाणं, तेवारपछी सहस्र कोटि पांसठ लाख चोरासी हजार नवसो एंशी वर्षे पुस्तकवाचनादि ॥ १७ ॥ )

शांतिनाथस्य अर्हतो यावत् प्रक्षीणस्य एकं चतुर्थभागेनोनपल्योपमं व्यतिक्रांतं, पंचषष्टिलक्षप्रमुख शेष मल्लिनाथवद् ज्ञेय ॥ १८९ ॥ श्रीशांतिनिर्वाणात् पल्योपमार्द्धेन श्रीकुंथुनिर्वाणं, ततश्च पल्यचतुर्थभागपंचषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमेषु पुस्तकवाचनादि, उभयमिलने च सूत्रोक्त पादोन पल्योपममानं स्यात्, शेषं मल्लिनाथवत्, तच्च पंचषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षरूप ज्ञेय, एवं सर्वत्र ॥ १८ ॥

( श्रीशांतिनाथना निर्वाणथी अर्ध पल्योपमें श्रीकुंथुनाथ निर्वाण, तेवारपछी पल्योपमनो चोथो भाग तथा पांसठलाख चोरासीहजार नवसो एंशी वर्षे पुस्तकवाचनादि ॥ १८ ॥ )

धर्मनाथस्य अर्हतो यावत् प्रक्षीणस्य त्रीणि सागरोपमाणि व्यतिक्रांतानि, पंचषष्टिलक्षप्रमुख शेषं मल्लिनाथवद् ज्ञेय ॥ १९० ॥ श्रीधर्मनिर्वाणात् पूर्वोक्तपादोनपल्यन्यूनैस्त्रिभिः सागरोपमैः श्रीशां-

तिनिर्वाणं, ततश्च पादोनपल्योपमं पंचषष्टिलक्षचतुरशीतिसहस्रनवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ १५ ॥

( श्रीधर्मनाथना निर्वाणथी पोणा पल्योपमे न्यून त्रण सागरोपमें श्रीशांतिनाथनिर्वाणं, तेवारपछी पोणुं पल्योपम पांसठ लाख चोरासी हजार नवसो एंशी वर्षे पुस्तकवाचनादि ॥ १५ ॥ )

अनंतनाथस्य अर्हतः यावत् प्रक्षीणस्य सप्त सागरोपमाणि व्यतिक्रांतानि, पंचषष्टिलक्षादि शेषं मल्लिवद् ज्ञेयं ॥ १९१ ॥ श्रीअनंतनिर्वाणात् चतुर्भिः सागरैः श्रीधर्मनिर्वाणं, ततश्च सागरत्रयपंचषष्टिलक्षादिवर्षातिक्रमे पुस्तकवाचनादि, उभयमिलनात् सूत्रोक्तं मानं स्यात् ॥ १४ ॥

( श्री अनंतनाथना निर्वाणथी चार सागरोपमें श्रीधर्मनाथनिर्वाणं, तेवारपछी त्रण सागरोपम पांसठ लाख चोर्यासी हजार नवसो एंसी वर्षे पुस्तकवाचनादि ॥ १४ ॥ )

विमलनाथस्य अर्हतो यावत् प्रक्षीणस्य षोडश सागरोपमाणि व्यतिक्रांतानि, पंचषष्टिलक्षादि शेषं मल्लिवद् ज्ञेयं ॥ १९२ ॥ श्रीविमलनिर्वाणात्सप्तभिः सागरैः श्रीअनंतनाथनिर्वाणं, ततश्च सप्तसागरपं-

चपष्टिलक्षादिना पुस्तकवाचनादि, उभयमिलनेन सूत्रोक्त मानं स्यात् ॥ १३ ॥

( श्रीविमलनाथना निर्वाणथी नव सागरोपमें श्रीअनंतनाथनिर्वाण, तेवारपछी सात सागरोपम उपर पांसठ लाख चोरासी हजार नवसो एसी वर्षे पुस्तकवाचनादि ॥ ११ ॥ )

वासुपूज्यस्य अर्हत॰ यावत् प्रक्षीणस्य षट्चत्वारिंशत् सागरोपमाणि व्यतिक्रांतानि, पंचपष्टिलक्षादि शेप मल्लिवद् ज्ञेयं ॥ १९३ ॥ श्रीवासुपूज्यनिर्वाणात् त्रिंशत् सागरैः श्रीविमलनिर्वाणं, ततश्च षोडशसागरपंचपष्टिलक्षादिना पुस्तकवाचनादि ॥ ॥ १२ ॥

( श्रीवासुपूज्यना निर्वाणथी त्रीस सागरोपमें श्रीविमलनाथ निर्वाण, तेवारपछी सोळ सागरोपम पांसठ लाख चोर्यासी हजार नवसो एसी वर्षे पुस्तकवाचनादि ॥ १२ ॥ )

श्रेयांसस्य अर्हतो यावत् प्रक्षीणस्य एकं सागरोपमशतं व्यतिक्रांतं, पंचपष्टिलक्षादि शेषं मल्लिनाथवद् ज्ञेय ॥ १९४ ॥ श्रीश्रेयांसनिर्वाणाच्चतुःपंचाशतसागरैः श्रीवासुपूज्यनिर्वाणं, ततश्च षट्चत्वारिंशत् सागरपंचपष्टिलक्षादिना पुस्तकवाचनादि ॥ ११ ॥

( श्रीश्रेयांसना निर्वाणथी चोपन सागरोपमें श्रीवासुपूज्यनिर्वाणं, तेवारपछी बेंतालीस सागरोपम पांसठ लाख चोर्यासी हजार नवसो एंसी वर्षे पुस्तकवाचनादि ॥ ११ ॥ )

शीतलस्य अर्हतः यावत् प्रक्षीणस्य एका सागरोपमकोटी, कीदृशी? त्रिवर्षसार्धाष्टमासैरधिकैः, एवंविधैः द्विचत्वारिंशद्वर्षसहस्रैरूना व्यतिक्रांता, एतस्मिन् समये महावीरो निर्वृत्तः, ततोऽपि परं नववर्षशतानि व्यतिक्रांतानि, दशमस्य वर्षशतस्य अयं अशीतितमः संवत्सरः कालो गच्छति ॥१९५॥ श्रीशीतलनिर्वाणात् षट्षष्टिलक्षषड्विंशतिसहस्रवर्षाधिकसागरशतोनया सागरकोट्या श्रीश्रेयांसनिर्वाणं, ततोऽपि वर्षत्रयसार्धाष्टमासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनैःषट्षष्टिलक्षषड्विंशतिसहस्रवर्षैरधिके सागरशते व्यतिक्रांते श्रीवीरो निर्वृत्तः, ततः परं नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि।१०।

( श्रीशीतलनाथना निर्वाणथी एकसो सागरोपम छासठ लाख छवीस हजार वर्ष ओछा एवा एक कोडी सागरोपमें श्रीश्रेयांसनिर्वाणं, तेवारपछी त्रण वर्ष साडा आठ मास अने बेंतालीस हजार वर्ष न्युन, एवा छासठ लाख छव्वीस हजार वर्षे अधिक एकसो सागरोपमें श्रीवीरनिर्वाणं, तेवारपछी नवसो एंशी वर्षे पुस्तकवाचनादि ॥ १०॥ )

सुविधिनाथस्य अर्हतो यावत् प्रक्षीणस्य दशसागरोपमाणां कोट्यो व्यतिक्रांताः, शेषः पाठ. शीतलनाथवत्, तच्चेत्थं–दशकोट्य., कीदृश्य. ? त्रिवर्षसार्घाष्टमासाधिकद्विचत्वारिंशद्वर्षसहस्रैरूना, इत्यादिकः ॥ १९६ ॥ श्रीसुविधिनिर्वाणान्नवभि. सागरकोटीभि. श्रीशीतलनाथनिर्वाणं, ततश्च त्रिवर्षार्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनसागरकोट्या अतिक्रमे श्रीवीरनिर्वृत्ति., ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ ९ ॥

( श्रीसुविधिनाथना निर्वाणथी नव कोडी सागरोपमे श्रीशीतलनिर्वाण. तेवारपछी बेंतालीस हजार वर्ष त्रण वर्ष साडाआठ मास एटला न्यून एक कोडी सागरोपमे श्री वीरनिर्वाण, तेवारपछी नवसो एंसी वर्षे पुस्तकवाचनादि ॥ ९ ॥ )

चन्द्रप्रभस्य अर्हतो यावत् प्रक्षीणस्य एक सागरोपमकोटिशतं व्यतिक्रांतं, शेषं शीतलवद् ज्ञेयं, तच्च इत्थं, कीदृश ? सागरकोटिशतं, त्रिवर्षसार्धाष्टमासाधिकं, द्विचत्वारिंशद्वर्षसहस्रै. ऊनं इत्यादि ॥ १९७ ॥ श्रीचन्द्रप्रभनिर्वाणान्नवसागरकोटिभिः श्रीसुविधिनाथनिर्वाणं, ततोऽपि त्रिवर्षार्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैर्न्यूनासु दशसु सागरकोटिषु व्यतिक्रांतासु श्रीवीरनिर्वृत्तिः, ततो नवश-

ताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ ८ ॥

( श्री चंद्रप्रभना निर्वाणथी नेवु कोडी सागरोपमे श्रीसुविधिनिर्वाणं, तेवारपछी बेतालीस हजार वर्ष त्रण वर्ष साडाआठ मास एटला न्यून दश कोडी सागरोपमें श्रीवीरनिर्वाणं, तेवारपछी नवसो एंसी वर्षे पुस्तकवाचनादि ॥ ८ ॥ )

सुपार्श्वस्य अर्हतो यावत् प्रक्षीणस्य एकं सागरोपमकोटीनां सहस्रं व्यतिक्रांतं, शेषं शीतलवत्, तत् कीदृशं ? त्रिवर्षसार्द्धाष्टमासाधिकःद्विचत्वारिंशद्वर्षसहस्रैः ऊनं इत्यादि ॥ १९८ ॥ श्री सुपार्श्वनिर्वाणात्सागराणां नवशतकोटिभिः श्रीचंद्रप्रभनिर्वाणं, ततश्च वर्षत्रयसार्द्धाष्टमासाधिकचत्वारिंशद्वर्षसहस्रन्यूनैकशतकोटिसागरैः श्रीवीरनिर्वृत्तिः, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ ७ ॥

( श्रीसुपार्श्वना निर्वाणथी नवसें कोटी सगरोपमे श्रीचंद्रप्रभनिर्वाणं, तेवारपछी बेंतालीस हजार वर्ष, त्रण वर्ष साडाआठ मास एटला न्यून एकसो कोड सागरोपमें श्रीवीरनिर्वाणं, तेवारपछी नवसो एंशी वर्षे पुस्तकवाचनादि ॥ ७ ॥ )

पद्मप्रभस्य अर्हतो यावत् प्रक्षीणस्य दश सागरोपमकोटीनां सहस्राणि व्यतिक्रांतानि, शेषं शीतलवत्, तत् कीदृशं ? त्रिवर्षसार्धाष्टमासाधिक द्विचत्वारिंद्वर्षसहस्रैः ऊनं इत्यादि ॥१९९॥ श्रीपद्मप्र-

भनिर्वाणात् सागरकोटीनां नवभिः सहस्रैः श्रीसुपार्श्वनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनैककोटिसहस्रसागरैः श्रीवीरनिर्वृत्तिस्ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ ६ ॥

( श्रीपद्मप्रभना निर्वाणथी नव हजार कोडी सागरोपमें श्रीसुपार्श्वनिर्वाण, तेवारपछी त्रण वर्ष साडआठ मास तथा बेंतालीस हजार वर्ष ओछा एक हजार कोड सागरोपमें श्रीवीरनिर्वाण, तेवारपछी नवसो एसी वर्षे पुस्तकवाचनादि ॥ ६ ॥ )

सुमतिनाथस्य अर्हतो यावत् प्रक्षीणस्य एकःसागरोपमकोटीनां लक्षो व्यतिक्रांत.,शेषं शीतलवत्, तत् कीदृश ? त्रिवर्षसार्द्धाष्टमासाधिकद्विचत्वारिंशद्वर्षसहस्रैः ऊनं इत्यादि ॥ २०० ॥ श्रीसुमतिनिर्वाणान्नवतिसहस्रकसागरकोटिभिः श्रीपद्मप्रभनिर्वाणं, ततश्च त्रिवर्षार्द्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनदशकोटिसहस्रसागरैःश्रीवीरनिर्वाणं, ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ५

( श्रीसुमतिनाथना निर्वाणथी नेवु हजार कोड सागरोपमें श्रीपद्मप्रभनिर्वाण, तेवारपछी त्रण वर्ष साडा आठ मास तथा बेंतालीस हजार वर्ष ओछा दशहजार कोड सागरोपमें श्रीवीरनिर्वाण, पछी नवसो एसी वर्षे पुस्तकवाचनादि ॥ ५ ॥ )



अभिनंदनस्य अर्हतो यावत् प्रक्षीणस्य दश सागरोपमकोटिलक्षाः व्यतिक्रांताः, शेषं शीतलवत्, तत् कीदृशं ? त्रिवर्षसार्द्धाष्टमासाधिकद्विचत्वारिंशद्वर्षसहस्रैः ऊनं इत्यादि ॥२०१॥ श्रीअभिनंदननिर्वाणात् सागरकोटीनां नवभिर्लक्षैः श्रीसुमतिनिर्वाणं, ततश्च त्रिवर्षार्द्धनवमासाधिकद्विचत्वारिंशद्वर्षसहस्रैर्न्यूनैकलक्षकोटिसागरैः श्रीवीरनिर्वृत्तिस्ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ ४ ॥

( श्रीअभिनंदनना निर्वाणथी नव लाख क्रोड सागरोपमें श्रीसुमतिनिर्वाण, तेवारपछी त्रण वर्ष साडा आठ मास अने बेतालीस हजार वर्ष ओछां एक लाख क्रोड सागरोपमें श्रीवीरनिर्वाणं, तेवारपछी नवसो एंसी वर्षे पुस्तकवाचनादि ॥ ४ ॥ )

संभवस्य अर्हतो यावत् प्रक्षीणस्य विंशतिः सागरोपमकोटीनां लक्षा व्यतिक्रांताः, शेषं शीतलनाथवत्, तत् कीदृशं ? त्रिवर्षसार्द्धाष्टमासाधिकद्विचत्वारिंशद्वर्षसहस्रैः ऊनं इत्यादि ॥२०२॥ श्रीसंभवनिर्वाणात् सागरकोटीनां दशभिर्लक्षैः श्रीअभिनंदननिर्वाणं, ततश्च त्रिवर्षार्द्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनदशलक्षकोटिसागरैः श्रीवीरनिर्वृत्तिस्ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ ३ ॥



( श्री संभवनाथना निर्वाण पछी दश लाख कोडी सागरोपमे श्रीअभिनंदननिर्वाण, तेवारपछी त्रण वर्ष साडा आठ मास बेतालीस हजार वर्ष ओछा एवा दश लाख कोडी सागरोपमें श्रीवीरनिर्वाण, तेवारपछी नवसो एसी वर्षे पुस्तकवाचनादि ॥३॥)

अजितस्य अर्हतो यावत् प्रक्षीणस्य पंचाशत् सागरोपमकोटीनां लक्षा व्यतिक्रान्ता., शेष शीतलनाथवत्, तत् कीदृश ? त्रिवर्षसार्धाष्टमासाधिकद्विचत्वारिंशद्वर्षसहस्रैः ऊनं इत्यादि ॥२०३॥ श्रीअजितनाथनिर्वाणात् सागराणां शतकोटिलक्षैः श्रीसंभवनिर्वाणं, ततश्च त्रिवर्षार्द्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनविंशतिसागरकोटिलक्षैः श्रीवीरनिर्वृत्तिस्ततो नवशताशीतिवर्षातिक्रमे पुस्तकवाचनादि ॥ २ ॥

( श्रीअजितनाथना निर्वाणथी त्रीस लाख सागरोपमें श्रीसंभवनाथनिर्वाण, तेवारपछी त्रण वर्ष साडा आठ मास तथा बेतालीस हजार वर्ष ओछा वीस लाख क्रोड सागरोपमें श्रीवीरनिर्वाण, तेवारपछी नवसो एसी वर्षे पुस्तकवाचनादि ॥ २ ॥ )

श्रीऋषभनिर्वाणात् सागरकोटीना पंचाशत्लक्षैः श्रीअजितनिर्वाण, ततश्च त्रिवर्षार्द्धनवममासाधिकद्विचत्वारिंशद्वर्षसहस्रन्यूनपचाशत्कोटिलक्षसागरैः श्रीवीरनिर्वृत्तिस्ततो नवशताशीति-

वर्षातिक्रमे पुस्तकवाचनादि ॥ १ ॥

( श्रीऋषभना निर्वाणथी पचास लाख कोडि सागरोपमें श्रीअजितनिर्वाणं, तेवारपछी त्रण वर्ष साडा आठ मास बेतालीस हजार वर्ष ओछा, एवा पचास लाख क्रोड सागरोपमें श्रीवीरनिर्वाणं, तेवारपछी नवसो एंसी वर्षे पुस्तकवाचनादि ॥ १ ॥ )

अथास्यामवसर्पिण्यां प्रथमप्रवर्त्तकत्वेन परमोपकारित्वात् किंचिद्विस्तरतः श्रीऋषभदेवचरित्रं प्रस्तौति—तस्मिन् काले तस्मिन् समये ऋषभः अर्हन्, कीदृशः ? कोशलायां अयोध्यायां जातः कौशलिकः; चत्वारि कल्याणकानि उत्तराषाढायां, पुनः अभिजिन्नक्षत्रे पंचमं कल्याणकं अभवत् ॥ २०४ ॥ तद्यथा—उत्तराषाढायां च्युतः, च्युत्वा गर्भे उत्पन्नः, यावत् अभिजिन्नक्षत्रे निर्वाणं प्राप्तः ॥

तस्मिन् काले तस्मिन् समये ऋषभः अर्हन् कौशलिकः, योऽसौ उष्णकालस्य चतुर्थो मासः, सप्तमः पक्षः, आषाढस्य कृष्णपक्षः, तस्य आषाढबहुलस्य चतुर्थीदिवसे सर्वार्थसिद्धनामात् महाविमानात् त्रयस्त्रिंशत् सागराणि स्थितिर्यत्र, एवंविधात् अंतररहितं च्यवनं कृत्वा अस्मिन्नेव जंबूद्वीपे द्वीपे भरतक्षेत्रे तदा ग्रामादीनामभावात् इक्ष्वाकुभूमिकयां, नाभिनामकुलकरस्य मरुदेवाया भार्यायाः

कुक्षौ पूर्वापररात्रि कालसमये मध्यरात्रौ दिव्याहारत्यागेन यावत् गर्भतया उत्पन्नः ॥ २०६ ॥

ऋषभ॰ अर्हन् कौशलिक॰ त्रिज्ञानोपगतोऽभवत्, तद्यथा चोष्ये इति जानाति, यावत् स्वप्नान् पश्यति, तद्यथा-गयवसह इत्यादि गाथात्र वाच्या, सर्वं तथैव पूर्वोक्तवत्, अथ विशेष॰, मरुदेवा प्रथमं वृषभं मुखे विशन्तं पश्यति, शेषास्तु जिनजनन्यः प्रथमं गजं पश्यति, वीरमाता सिंहमद्राक्षीत्, नाभिकुलकराय च कथयति, तदा स्वप्नपाठका न सन्ति, अतो नाभिकुलकरः स्वयमेव स्वप्नफलं कथयति ॥ २०७ ॥

तस्मिन् काले तस्मिन् समये ऋषभः अर्हन् कौशलिकः, योऽसौ उष्णकालस्य प्रथमो मासः, प्रथम॰ पक्षः, चैत्रस्य कृष्णपक्ष॰, तस्य चैत्रबहुलस्य अष्टमीदिवसे नवसु मासेषु बहुप्रतिपूर्णेषु सत्सु, यावत् उत्तराषाढाया नक्षत्रे चन्द्रयोग उपागते सति अरोगा माता अरोग दारकं प्रजाता ॥ २०८ ॥

तदेव सर्वं यावत् देवा देव्यश्च वसुधारावर्षणं, शेषं तथैव पूर्वोक्तप्रकारेण बदिमोचनमानोन्मानव-र्द्धनशुल्कमोचनप्रमुखस्थितिपतितावर्जं सर्वं भणितव्य ॥२०९॥ अथ देवलोकच्युतोऽद्भुतरूपोऽनेकदे-वदेवीपरिवृतः सकलगुणैस्तेभ्यो युगलमनुष्येभ्यः परमोत्कृष्टः क्रमेण प्रवर्द्धमानः सन्नाहाराभिलाषे

सुरसंचारितामृतरससरसां अंगुलिं मुखे प्रक्षिपति, एवं अन्येऽपि तीर्थंकरा बाल्ये अवगंतव्याः, बाल्यातिक्रमे पुनरग्निपक्काहारभोजिनः, ऋषभस्तु प्रव्रज्यां यावत् सुरानीतोत्तरकुरुकल्पद्रुमफलान्यास्वादितवान्, अथ संजाते किंचिदूनवर्षे च भगवति प्रथमजिनवंशस्थापनं शक्रजीतमिति विचिंत्य कथं रिक्तपाणिः स्वामिसमीपं यामीति महतीं इक्षुयष्टिं आदाय नाभिकुलकरांकस्थस्य प्रभोरग्रे तस्थौ, दृष्ट्वा चेक्षुयष्टिं हृष्टवदनेन स्वामिना करे प्रसारिते इक्षुं भक्षयसीति भणित्वा तां दत्वा इक्षुभिलाषात् स्वामिनो वंश इक्ष्वाकुनामा भवतु, गोत्रं अपि अस्य एतत्पूर्वजानां इक्षुभिलाषात्काश्यपनामेति शक्रो वंशस्थापनां कृतवान्। अथ किंचिद्युगलंमातृपितृभ्यां तालवृक्षाधो मुक्तं, तस्मात्पतत्तालफलेन पुरुषो व्यापादितः, प्रथमोऽयं अकालमृत्युः, अथ सा कन्या मातापित्रोः स्वर्गतयोः एकाकिन्येव वने चचार, दृष्ट्वा च तां सुंदरीं युगलिकनरा नाभिकुलकराय न्यवेदयन्, नाभिरपि शिष्टेयं सुनंदा नाम्नी ऋषभपत्नी भविष्यतीति लोकज्ञापनपुरस्सरं तां जग्राह. ततः सुनंदासुमंगलाभ्यां सह प्रवर्द्धमानो भगवान् यौवनमनुप्राप्तः, इंद्रोऽपि प्रथमजिनविवाहकृत्यमस्माकं जीतमिति अनेकदेवदेवीकोटिपरिवृतः

समागत्य स्वामिनो वरकृत्यं स्वयमेव कृतवान्, वधूकृत्य च द्वयोरपि कन्ययोर्देव्य इति, ततस्ताभ्यां विषयोपभोगिनो भगवतः षट्लक्षपूर्वेषु गतेषु भरतब्राह्मीरूप युगलं सुमंगला, बाहुबलिसुंदरीरूपं युगलं च सुनंदा प्रसुषुवे, तदनु चैकोनपचाशद्युगलानि क्रमात् सुमंगला प्रसूतवती ॥

ऋषभः अर्हन् कोशलिकः काश्यपगोत्रीयः, तस्य प्रभोः पंच नामधेयानि एवं आख्यायते, तद्यथा ऋषभ इति वा। १। प्रथमराजा इति वा। २। प्रथमभिक्षाचर इति वा। ३। प्रथमजिन इति वा। ४। प्रथमतीर्थंकर इति वा। ५। तत्र इकारः सर्वत्र वाक्यालंकारे, प्रथमराजा सचैवं—कालानुभावात् क्रमेण प्रचुरकषायोदयात् परस्परं विवदमानानां युगलिकानां दंडनीतिस्तावत् विमलवाहनचक्षुष्मत्कुलकरकालेऽल्पापराधित्वेन हक्काररूपैवाभूत्, यशस्विनोऽभिचंद्रस्य च काले अल्पेऽपराधे हक्काररूपा, महति च अपराधे मक्काररूपा, अथ प्रसेनजिन्मरुदेवनाभिकुलकरकाले च जघन्यमध्यमोत्कृष्टापराधेषु क्रमेण हक्कारमक्कारधिक्काररूपा दंडनीतयोऽभूवन्, एवमपि नीत्यतिक्रमेण ज्ञानादिगुणाधिकं भगवंतं विज्ञाय युगलिभिर्भगवन्निवेदने कृते स्वाम्याह नीतिमतिक्रमतां दंडं सर्वं राजा करोति, सचाभिषिक्तोऽमा-

त्यादिपरिवृतो भवति, एवं उक्ते तैरूचे, अस्माकं अपि ईदृशो राजा भवतु, स्वाम्याह–याचध्वं नाभिकुलकरं राजानं, तैर्याचितो नाभिर्नो भवतां ऋषभ एव राजा इत्युक्तवान्, ततस्ते राज्याभिषेकनिमित्तमुदकानयनाय सरःप्रति गतवंतस्तदा च प्रकंपितासनः शक्रो जीतमिति समागत्य मुकुटकुंडलाभरणादिपरिस्क्रियापुरस्सरं भगवंतं राज्येऽभिषिंचतिस्म, युगलिकनरास्तु नलिनपत्रस्थितजलहस्ता अलंकृतं भगवंतं निरीक्ष्य विस्मिताः, क्षणं विचार्य भगवतः पादयोर्जलं प्रक्षिप्तवंतस्तच्च दृष्ट्वा तुष्टः शक्रोऽचिंतयत्, अहो विनीता एते पुरुषा इति वैश्रमणं आज्ञापितवान्, यदिह द्वादशयोजनविस्तीर्णां नवयोजनविष्कंभां विनीतां नाम्नीं नगरीं निष्पादयेत्याज्ञासमनंतरमेव रत्नसुवर्णमयभवनपंक्तिप्राकारेणोपशोभितां नगरीमवासयत्, ततो भगवान् राज्ये हस्त्यश्वगवादिसंग्रहपुरस्सरं उग्रभोगराजन्यक्षत्रियलक्षणानि चत्वारि कुलानि व्यवस्थापितवान्, तत्रोग्रदंडकारित्वादुग्रा आरक्षकस्थानीयाः १, भोगार्हत्वाद् भोगा गुरुस्थानीयाः २, समानवयस इति कृत्वा राजन्या वयस्यस्थानीयाः ३, शेषाः प्रधानप्रकृतितया क्षत्रियाश्च ४, तदा च कालपरिहाण्या ऋषभकुलकरकाले कल्पद्रुमफललाभाऽभावेन

ये इक्ष्वाकास्ते ईक्षुभोजिनः, शेषास्तु प्रायः पत्रपुष्पफलभोजिनोऽग्नेरभावाच्चाऽपक्वशाल्याद्योषधीभो-
जिनश्चाभूवन्, कालानुभावात्तदजीर्णं च स्वल्पं स्वल्पतरं च भुक्तवंतस्तस्याप्यजीर्णे भगवद्वचसा ह-
स्ताभ्यां घृष्ट्वा त्वचं अपनीय भुक्तवंतस्तथाप्यजीर्णे प्रभूपदेशात् पत्रपुटे जलेन क्लेदयित्वा तंदुलादीन्
भुक्तवंतः ॥ एवमप्यजीर्णे कियतीमपि वेलां हस्ततलपुटे क्लेदयित्वा हस्ततलपुटे संस्थाप्ये-
त्यादि बहुप्रकारैरन्नभोजिनो बभूवांसः, एवं सत्येकदा द्रुमघर्षणाज्ज्वलितं प्रवृद्धज्वलज्ज्वालं
तृणकलाप कवलयंतं अग्निमुपलभ्याऽभिनवरत्नबुद्ध्या प्रसारितकरा दह्यमाना भयभीताः
संतो भगवंतं विज्ञपयामासुः, भगवता चाग्नेरुत्पत्तिं विज्ञाय भो युगलिका उत्पन्नोऽग्निरत्र च शाल्या-
द्योषधीर्निधाय भुंग्ध्वं, यतस्ताः सुखेन जीर्यंतीत्युपाये कथितेऽप्यनभ्यासात् सम्यगुपायं अजानाना
ओषधीरग्नौ प्रक्षिप्य कल्पद्रोः फलानीव याचंते, अग्निना च ताः सर्वतो दह्यमाना दृष्ट्वा अयं
पापात्मा वेताल इवाऽतृप्तः स्वयमेव सर्वं भक्षयति, नास्माकं किंचित् प्रतियच्छतीत्यनोऽस्यापराध भग-
वते विज्ञप्य शिक्षां दापयिष्याम इति बुद्ध्या गच्छंतः पथि भगवंतं हस्तिस्कंधारूढं अभिमुखमाग-

भंतं दृष्ट्वा यथास्थितं व्यतिकरं भगवते न्यवेदयन्, भगवांश्चाह-अत्र कंठरादिव्यवधानेन भवद्भिः धान्यादिप्रक्षेपः कार्यः, इत्युक्त्वा तैरेव सार्द्धं मृत्पिंडं आनाय्य निधाय च हस्तिकुंभे मिंठेन कुंभकारशिल्पं प्रथममदर्शयत् उक्तवांश्च, एवंविधानि भांडानि विधाय तेषु पाकं कुरुध्वमिति भगवदुक्तं सम्यगुपलभ्य ते तथैव कृतवंतः, अतः प्रथमं कुंभकारशिल्पं प्रवर्त्तितं ततो लोहकार १ चित्रकार २ तंतुवाय ३ नापितशिल्प ४ लक्षणानि चत्वारि शिल्पानि; एतेषां च पंचानां मूलशिल्पानां प्रत्येकं विंशत्या भेदैः शिल्पशतं, तच्चाचार्योपदेशजमिति ॥ २१० ॥

ऋषभः अर्हन् कौशलिकः दक्षः, दक्षाप्रतिज्ञा यस्य स तथा, सुंदररूपवान् सर्वगुणैरालिंगितः सरलपरिणामो विनयवान् विंशतिलक्षपूर्वाणि यावत् कुमारावस्थायां उषित्वा, त्रिषष्टिलक्षपूर्वाणि यावत् राज्यावस्थायां च वसन् सन्, लिखनं आदौ यासां तास्तथा गणनं प्रधानं श्रेष्ठं यासां तास्तथा, तथा पक्षिणां शब्दः सपर्यवसाने प्रांते यासां तास्तथा, एवंविधा द्वासप्ततिपुरुषकलाः, लेखादिका द्वासप्ततिकलास्ताश्चेमाः-लिखितं १ गणितं २ गीतं ३ । नृत्यं च ४ वाद्यं च ५ पठन ६ शिक्षे च

७ ॥ ज्योति ८ शब्दो ९ संकृति १० । व्याकरण ११ निरुक्ति १२ काव्यानि १३ ॥ १ ॥ कात्यायनं १४ निघंटु १५ । गजतुरगारोहणं १६–१७ च तयो शिक्षा १८ ॥ शस्त्राभ्यासो १९ रस २० मंत्र २१ यंत्र २२ । विष २३ खन्य २४ गधवादाश्च २५ ॥ २ ॥ प्राकृत २६ संस्कृत २७ पैशाचिका २८ । पभ्रंशा २९ स्मृति ३० पुराण ३१ विधी ३२ ॥ सिद्धांत ३३ तर्क ३४ वैद्यक ३५ । वेदा ३६ ·गम ३७ संहिते ३८ तिहासाश्च ३९ ॥ ३ ॥ सामुद्रिक ४० विज्ञाना ४१ । चार्यकविद्या ४२ रसायनं ४३ कपटं ४४ ॥ विद्यानु· वाददर्शन ४५ । संस्कारो ४६ धूर्त्तसंबलकं ४७ ॥ ४ ॥ मणिकर्म ४८ तरुचिकित्सा ४९ । खेचर्य ५० मरी ५१ फलेंद्रजालं च ५२ ॥ पातालसिद्धि ५३ यंत्रक ५४ । रसवत्यः ५५ सर्वकरणि च ५६ ॥ ५ ॥ प्रासाद लक्षण ५७ पण ५८ । चित्रोपल ५९ लेप ६० चर्मकर्माणि ६१ ॥ पत्रछेद ६२ नखछेद ६३ । पत्रपरीक्षा ६४ वशीकरण ६५ ॥ ६ ॥ काष्ठघटन ६६ देशभाषा ६७ । गारुड ६८ योगांग ६९ धातु· कर्माणि ७० ॥ केवलिविधि ७१ शकुनरुते ७२ । इति पुरुषकला द्विसप्ततिर्ज्ञेया ॥ ७ ॥ अत्र लिखितं हंसलिप्याद्यष्टादशलिपिविधानं, तच्च भगवता दक्षिणकरेण ब्राह्म्या उपदिष्टं, गणितं तु एकं, दशं, शतं

सहस्रं, अयुतं, लक्षं, प्रयुतं, कोटिः, अर्बुदं, अब्जं, खर्वं, निखर्वं, महापद्मं; शंकुः, जलधिः, अंत्यं, मध्यं, परार्ध्यं चेति यथाक्रमं दशगुणं इत्यादिसंख्यानं;सुंदर्या वामकरेण, काष्टकर्मादिरूपकर्म नरतस्य, पुरुषादिलक्षणं च बाहुबलिनं उपदिष्टमिति ॥

चतुःषष्टिः स्त्रीकलाश्च, ताश्चेमा ज्ञेयाः, कृत्यौ १ चित्ये २ चित्रं ३ । वादित्र ४ मंत्र ५ तंत्राश्च ६ ॥ घनवृष्टि ७ फलाकृष्टी ८ । संस्कृतजल्पः ९ क्रियाकल्पः १० ॥ १ ॥ ज्ञान ११ विज्ञान १२ दंभा १३–बुस्तंभा १४ गीत १५ तालयो १६ मर्नि ॥ आकारगोपना १७ राम–रोपणे १८ काव्यशक्ति १९ वक्रोक्ती २० ॥ २ ॥ नरलक्षणं २१ गज २२ हयवर–परीक्षणे २३ वास्तुशुद्धि लघुबुद्धि २४ ॥ शकुनविचारो २५ धर्मा–चारो २६ जन २७ चूर्णयोगाः २८ ॥ ३ ॥ गृहिधर्मे २९ सुप्रसादन–कर्म ३० कनकसिद्धि ३१ वर्णिकावृद्धी ३२ ॥ वाक्पाटव ६३ करलाघव ३४ । ललितचरण ३५ तैलसुरभिताकरणे ३६ ॥ ४ ॥ नृत्योपचार ३७ गेहा–चारो ३८ व्याकरण ३९ परनिराकरणे ४० ॥ वीणानाद ४१ वितंडा–वादां ४२ कस्थितिः ४३ जनाचाराः ४४ ॥ ५ ॥ कुंभभ्रम ४५ सारिश्रम ४६ । रत्नमणिभेद ४७

लिपिपरिच्छेदा. ४८ ॥ वैद्यक्रिया च ४९ कामा–विष्करणं ५० रंधनं ५१ चिकुरबंधः ५२ ॥ ६ ॥ शा
लिखंडन ५३ मुखमंडने ५४। कथाकथन ५५ कुसुमग्रथने ५६ ॥ वरवेषः ५७ सर्व जाषा–विशेषो
५८ वाणिज्य ५९ जोज्ये च ६० ॥ ७ ॥ अभिधानपरिज्ञाना ६१–जरणयथास्थानविविधपरिधाने ६२
॥ अत्याक्षरिका ६३ प्रश्न–प्रहेलिका ६४ स्त्रीकला. चतुःषष्टिः ॥ ८ ॥

कर्मणां कृषिवाणिज्यादीनां मध्ये कुंजकारशिल्पादिकं प्रागुक्त शिल्पशतमेव भगवतोपदिष्टं, अत एवाऽनाचार्योपदेशजं कर्म, आचार्योपदेशज शिल्पमिति कर्मशिल्पयोर्विशेषमामनंति, कर्माणि च क्रमेण स्वयमेव समुत्पन्नानि, श्रीण्यप्येतानि द्वासप्ततिपुरुषकलाचतुःषष्टिमहिलागुणशिल्पशताख्यानि वस्तूनि प्रजाहिताय जगवानुपदिशतिस्म, उपदिश्य पुत्राणां शतं राज्यशते स्थापयति, तत्र भरतस्य विनीतायां मुख्यराज्यं, बाहुबलेश्च बहलीदेशे तक्षशिलायां राज्य दत्वा शेषाणां अष्टनवतिनंदनानां पृथक् पृथक् देशान् विजज्य दत्तवान्, नंदननामानि चेमानि—

जरत. १ बाहुबलिः २ शंखः ३ विश्वकर्मा ४ विमल. ५ सुलक्षणः ६ अमलः ७ चित्रांगः ८

 ॥ ३२४ ॥

ख्यातकीर्त्तिः ९ वरदत्तः १० सागरः ११ यशोधरः १२ अमरः १३ रथवरः १४ कामदेवः १५ ध्रुवः १६
वत्सो १७ नंदः १८ सूरः १९ सुनंदः २० कुरुः २१ अंगः २२ वंगः २३ कोशलः २४ वीरः २५ कलिंगः २६
मागधः २७ विदेहः २८ संगमः २९ दशार्णः ३० गम्भीरः ३१ वसुवर्मा ३२ सुवर्मा ३३ राष्ट्रः ३४ सुरा-
ष्ट्रः ३५ बुद्धिकरः ३६ विविधकरः ३७ सुयशाः ३८ यशःकीर्ति ३९, यशस्करः ४०, कीर्तिकरः ४१ सूरणः
४२ ब्रह्मसेनः ४३ विक्रांतः ४४ नरोत्तमः ४५ पुरुषोत्तमः ४६ चंद्रसेनः ४७ महासेनः ४८ नभःसेनः ४९
भानुः ५० सुकांतः ५१ पुष्पयुत ५२ श्रीधरः ५३ दुर्द्धर्षः ५४ सुसुमारः ५५ दुर्जयः ५६ अजेयमानः ५७
सुधर्मा ५८ धर्मसेनः ५९ आनंदनः ६० आनंदः ६१ नंदः ६२ अपराजितः ६३ विश्वसेनः ६४ हरि-
षेणः ६५ जयः ६६ विजयः ६७ विजयवंतः ६८ प्रभाकरः ६९ अरिदमनः ७० मानः ७१ महाबाहुः
७२ दीर्घबाहुः ७३ मेघः ७४ सुघोषः ७५ विश्वः ७६ वराहः ७७ सुसेनः ७८ सेनापतिः ७९ कपिलः ८०
शैलविचारी ८१ अरिंजयः ८२ कुंजरबलः ८३ जयदेवः ८४ नागदः ८५ काश्यपः ८६ बलः ८७
वीरः ८८ शुभमतिः ८९ सुमतिः ९० पद्मनाभः ९१ सिंहः ९२ सुजातिः ९३ संजयः ९४ सुनाभः

एए नरदेवः एद चित्तहरः एउ सुरवर एट दृढरथः एए प्रजंजन १०० इति ॥ राज्यदेशनामानि तु अग १ वंग २ कलिंग ३ गोरू ४ चोरू ५ कर्णाट ६ लाट ७ सौराष्ट्र ८ काश्मीर ए सौवीर १० आजीर ११ चीण १२ महाचीण १३ गूर्जर १४ बंगाल १५ श्रीमाल १६ नेपाल १७ जहाल १८ कौशल १९ मालव २० सिंहल २१ मरुस्थलादीनि २२ ॥ २० ॥

स्थापयित्वा पुनरपि लोकांतिकैर्जीतकल्पिकैर्देवैः ताजिः इष्टाजिः यावद् वाग्जिः उक्तः सन्, शेषं तदेव पूर्वोक्तं सर्वं जणितव्य, यावत् धनं गोत्रिणां विजज्य दत्वा, योऽसौ उष्णकालस्य प्रथमो मासः, प्रथम· पक्ष·, चैत्रबहुलः, तस्य चैत्रबहुलस्य अष्टमीदिवसे, दिवसस्य पश्चिमे जागे सुदर्शनायां नाम शिबिकायां देवमनुजाऽसुरसहितया पर्षदा जनश्रेण्या समनुगम्यमानः, यावत् विनीताया नगर्या मध्यभागेन निर्गच्छति, निर्गत्य यत्रैव सिद्धार्थवनं उद्यानं, यत्रैव अशोकनामा प्रधानवृक्षः, तत्रैव उपागच्छति, उपागत्य अशोकवरवृक्षस्य अधः यावत् आत्मनैव चतुर्मौष्टिकं लोच करोति, चतसृजिर्मुष्टिजिर्लोचे कृते सति, अवशिष्टां एकां मुष्टिं सुवर्णवर्णयोः स्कन्धयोरुपरि लुठंतीं कनककलशोपरि विराजमानां नीलकमल-

मालामिव विलोक्य हृष्टचित्तस्य शक्रस्य आग्रहेण रक्षितवान्, लोचं कृत्वा षष्ठेन भक्तेन अपानकेन जलरहितेन उत्तराषाढायां नक्षत्रे चंद्रयोगं उपागते सति, उग्राणां, भोगानां, राजन्यानां, क्षत्रियाणां च कच्छमहाकच्छादिभिश्चतुर्भिः सह, यथा स्वामी करिष्यति तथा वयमपि करिष्याम इति कृतनिर्णयैः सार्द्धं, एकं देवदूष्यमादाय मुंडो भूत्वा गृहान्निष्क्रम्य अनगारितां प्रतिपन्नः, दीक्षां गृहीतवान्। २११।

ऋषभः अर्हन् कौशलिक एकं वर्षसहस्रं यावत् नित्यं व्युत्सृष्टकायत्यक्तदेहः सन् विचरति ॥ अथ प्रव्रज्यां प्रतिपद्य गृहीतघोराभिग्रहो भगवान् ग्रामानुग्रामं विहरति, तदानीं लोकस्यातिसमृद्धत्वात् का भिक्षा? कीदृशा वा भिक्षाचराः? इति कोऽपि वार्त्तां न जानाति, ततस्ते सह प्रव्रजिताः क्षुधादिपीडिता भववंतं आहारोपायं पृच्छंति, भगवांस्तु मौनी न किमपि प्रतिवक्ति, ततस्ते कच्छमहाकच्छौप्रति विज्ञप्तिं चक्रुः, तौ अपि ऊचतुर्यत् वयमपि आहारविधिं न जानीमः, पूर्वं तु भगवान् न पृष्टः, इदानीं आहारं विना तु स्थातुं न शक्यते, भरतलज्जया गृहेऽपि गंतुं अयुक्तं, ततो विचार्यमाणो वनवास एव श्रेयान्, इति विचार्य भगवंतं एव ध्यायंतो गंगातटे परिशटितपत्राद्युपभोगिनो-

ऽसंस्कृतकेशकूर्चाजटिलास्तापसा जज्ञिरे, इतश्च कच्छमहाकच्छसुतौ भगवता पुत्रत्वेन प्रतिपन्नौ नमि-
विनमिनामानौ देशांतरादागतौ भरतेन दीयमानं राज्यभागं अवगणय्य पितृवचसा भगवत्समीप-
मागत्य प्रतिमास्थिते भगवति नलिनीपत्रैर्जलमानीय सर्वतो भूमिसिंचनं जानुप्रमाणं कुसुमोच्चयं च
कृत्वा पंचांगप्रणामपूर्वकराज्यभागप्रदो भवेति प्रत्यहं विज्ञपयतो जिनं सिषेवतुः, तौ चान्यदा वीरस्य
वंदनार्थमागतो धरणेंद्रो भगवद्भक्त्या संतुष्टोऽवादीत् भो भगवान्निःसंगो मा भगवंतं याचेथां, भग-
वद्भक्त्याऽहमेव युवाभ्यां दास्यामीति भणित्वा अष्टचत्वारिंशत्सहस्रसंख्याका विद्यास्तत्र गौरी गांधारी
रोहिणी प्रज्ञप्तिलक्षणाश्चतस्रो महाविद्याश्च पाठसिद्धा एव दत्तवान्, यथोक्तं किरणावलीकारेण अ-
ष्टचत्वारिंशत्संख्याका इति, तदयुक्तं, आवश्यकवृत्तौ अष्टचत्वारिंशत्सहस्राणां उक्तत्वात्, अथ विद्यां
दत्वा उक्तवांश्चेमाभिर्विद्याधरर्द्धिप्राप्तौ संतौ स्वजनं जनपदं च गृहीत्वा यात युवां वैताढ्ये नगे, दक्षि-
णविद्याधरश्रेण्यां, गौरेयगंधारप्रमुखानष्टौ निकायान् रथनूपुरचक्रवालप्रमुखाणि पंचाशन्नगराणि,
उत्तरश्रेण्यां च पंन्नकवंशालयप्रमुखानष्टौ निकायान् गगनवल्लभप्रमुखाणि च षष्टिनगराणि च निवास्य

विहरतमिति, ततस्तौ कृतकृत्यौ स्वपित्रोर्भरतस्य च स्वं व्यतिकरं निवेद्य दक्षिणश्रेण्यां नमी, उत्तरश्रेण्यां विनमी च तस्थतुः ॥

भगवांश्चान्नपानादिदानाऽकुशलैः समृद्धिमद्भिर्जनैर्वस्त्राभरणकन्यादिभिर्निमंत्र्यमाणोऽपि योग्यां भिक्षां अलभमानोऽदीनमनाः कुरुदेशे हस्तिनागपुरे प्रविष्टस्तत्र च आवश्यकवृत्त्यनुसारेण बाहुबलिसुतसोमप्रभसुतः श्रेयांसो युवराजः, स च श्रेयांसो मया श्यामवर्णो मेरुरमृतकलशेनाभिषिक्तोऽतीवशोभितवानिति स्वप्नं दृष्टवान्, सुबुद्धिनामा नगरश्रेष्ठी सूर्यमंडलात् स्रस्तं किरणसहस्रं पुनः श्रेयांसेन तत्र योजितं, ततस्तदतीवाशोभत इतिस्वप्नमैक्षत, राजापि स्वप्ने महापुरुष एको रिपुबलेन युध्यमानः श्रेयांससहायाज्जयी जात इति ददर्श, त्रयोऽपि प्रातः सभायां संभूय स्वप्नाः परस्परं न्यवेदयन्, ततो राज्ञा कोऽपि श्रेयांसस्य महान् लाभो भावीति निर्णीय विसर्जितायां पर्षदि श्रेयांसोऽपि स्वभवने गत्वा गवाक्षस्थः स्वामी न किंचिल्लातीति जनकोलाहलं श्रुत्वा स्वामिनं वीक्ष्य च मया क्वापीदृशं नेपथ्यं दृष्टपूर्वं, इतीहापोहं कुर्वन् जातिस्मरणं प्राप, अहो अहं पूर्वभवे भगवतः सारथिर्भगवता

सह दीक्षां गृहीतवान्, तदा च वज्रसेनजिनेन कथितमासीद्यद्य वज्रनाभो भरतक्षेत्रे प्रथमो जिनो भावीति, स एष भगवान्, तदानीमेव तस्यौको मनुष्य प्रधानेक्षुरसकुम्भसमूहप्राभृतमादाय आगतस्ततोऽसौ तत्कुंभमादाय भगवान् गृहाणेमां योग्यां भिक्षामिति जगाद, भगवतापि पाणी प्रसारितौ, निसृष्टश्च तेन सर्वोऽपि रसः, न चात्र बिंदुरप्यधः पतति, किंतूपरि शिखा वर्द्धते, यतः—माइज्ज घडसहस्सा। अहवा माइज्ज सागरा सबे ॥ जस्सेयारिस लद्धी। सो पाणिपडिग्गही होइ ॥ १ ॥ अत्र कवि —स्वाम्याह दक्षिणं हस्तं। कथं भिक्षां न लासि भोः ॥ स प्राह दातृहस्तस्याऽधो भवामि कथं प्रभो ॥ २ ॥ पूजाभोजनदानशांतिककलापाणिग्रहस्थापना—चोक्षप्रेक्षणहस्तकार्पणमुखव्यापारबद्धस्त्वहं ॥—इत्यभिधाय दक्षिणहस्ते स्थिते—वामोऽहं रणसंमुखांकगणनावामांगशय्यादिकृत्। द्यूतादिव्यसनी त्वसौ स तु जगौ चोक्षोऽसि न त्वं शुचिः ॥ २ ॥ ततः—राज्यश्रीभरतार्जितार्थिनिवहत्यागैः कृतार्थीकृतः। सतुष्टोऽपि गृहाण दानमधुना तन्वन् दयां दानिषु ॥ इत्यब्दं प्रतिबोध्य हस्तयुगलं श्रेयांसतः कारयन्। प्रत्यमेक्षुरसेन पूर्णमृषभः पायात् स वः श्रीजिनः ॥ ३ ॥ श्रेयांसस्य दाना-

वसरे—नेत्रांबुधारा वाग्दुग्ध—धारा धाराधरस्य च ॥ स्पर्धया वर्द्धयामासुः । श्रीधर्माद्भुत दाशये ॥ ४ ॥

ततस्तेन रसेन भगवता सांवत्सरिकतपःपारणा कृता, पंच दिव्यानि जातानि, वसुधावृष्टिः १ चेलोत्क्षेपः २ व्योम्नि देवदुंदुभिः ३ गंधोदकपुष्पवृष्टिः ४ आकाशे अहो दानमिति घोषणं च ५. ततः सर्वेऽपि लोकास्तत्र मिलिताः, अथ श्रेयांसस्तान् प्रज्ञापयति, भो जनाः सद्गतिलिप्सया एवं साधुभ्य एषणीयाहारभिक्षा दीयते, इत्यस्यां अवसर्पिण्यां श्रेयांसोपज्ञं दानं, त्वया एतत् कथं ज्ञातं ? इति लोकैः पृष्टश्च स्वामिना सह स्वकीयं अष्टभवसंबंधं आचष्ट, यदा स्वामीशाने ललितांगस्तदाहं पूर्वभवे निर्नामिका नाम्नी स्वयंप्रभा देवी १, ततः पूर्वविदेहे पुष्कलावतीविजये लोहार्गले नगरे भगवान् वज्रजंघस्तदानीमहं श्रीमती भार्या २, तत उत्तरकुरौ भगवान् युगलिकोऽहं युगलिनी ३, ततः सौधर्मे द्वावपि मित्रदेवौ ४, ततो भगवान् परविदेहे वैद्यपुत्रस्तदाहं जीर्णश्रेष्ठिपुत्रः केशवनामा मित्रं ५, ततोऽच्युतकल्पे देवौ ६, ततः पुंडरीकिण्यां भगवान् वज्रनाभस्तदाहं सारथिः ७, ततः सर्वार्थसिद्धिविमाने देवौ ८, इह भगवतः प्रपौत्र इति, एवं श्रुत्वा सर्वोऽपि जनः—रिसहेससमं पत्तं । नि-

रवज्जं इक्खुरससम दाणं ॥ सेअंससमो भावो। हविज्ज जइ मग्गिअं हुज्जा ॥ १ ॥ इत्यादि स्तुवन् स्वस्थानं गतः, एवं दीक्षादिनादारभ्य प्रभोर्वर्षसहस्रं छद्मस्थत्वकालस्तत्र सर्वसंकलितोऽपि प्रमादकाल अहोरात्र, एवं च—

यावत् आत्मानं भावयत एकं वर्षसहस्रं व्यतिक्रांतं, ततश्च योऽसौ शीतकालस्य चतुर्थो मासः, सप्तम पक्षः, फाल्गुनस्य कृष्णपक्षः, तस्य फाल्गुनबहुलस्य एकादशीदिवसे पूर्वाह्णकालसमये पुरिमतालनामकस्य विनीताशाखापुरस्य बहिस्तात् शकटमुखनामके उद्याने न्यग्रोधनामकवृक्षस्य अधः, अष्टमेन भक्तेन अपानकेन जलरहितेन उत्तराषाढायां नक्षत्रे चन्द्रयोगे उपागते सति ध्यानस्य मध्यभागे वर्त्तमानस्य अनंतं केवलमुत्पन्नं, यावत् जानन् पश्यंश्च विहरति ॥ २१२ ॥

एवं च वर्षसहस्रेऽतिक्रांते पुरिमतालनाम्नि विनीताशाखापुरे प्रभोः केवलज्ञानं उत्पन्नं, तदैव भरतस्य चक्रमपि, तदा च विषयतृष्णाया विषमत्वेन प्रथमं तातं पूजयामि उत चक्रमिति क्षणं विमृश्य, इहलोकपरलोकसुखदायिनि ताते पूजिते, केवलमिहलोकफलदायि चक्रं पूजितमेवेति सम्यग्

विचार्य भरतः प्रत्यहं उपालंभान् ददतीं मरुदेवां हस्तिस्कंधे पुरतः कृत्वा सर्वर्द्ध्या वंदितुं ययौ, प्रत्यासन्ने च समवसरणे मातः पश्य स्वपुत्रर्द्धिं, इति भरतेन भणिता मरुदेवा हर्षपुलकितांगी प्रमोदाश्रुपूरैर्निर्मलनेत्रा प्रभोश्छत्रचामरादिकां प्रातिहार्यलक्ष्मीं निरीक्ष्य चिंतयामास, धिग् मोहविह्वलान् सर्वानपि प्राणिनः, स्वार्थैः स्निह्यंति, यन्मम ऋषभदुःखेन रुदंत्या नेत्रे अपि हीनतेजसी जाते, ऋषभस्तु एवं सुराऽसुरसेव्यमान ईदृशीं समृद्धिं भुंजानोऽपि मम सुखवार्त्तासंदेशमपि न प्रेषयति, ततो धिगिमं स्नेहं, इत्यादि भावयंत्यास्तस्याः केवलमुत्पन्नं, तत्क्षणाच्च आयुषः क्षयान्मुक्तिं जगाम. ॥ अत्र कविः—पुत्रो युगादीशसमो न विश्वे । भ्रांत्वा क्षितौ येन शरत्सहस्रं ॥ यदर्जितं केवलरत्नमग्र्यं । स्नेहात्तदेवार्पत मातुराशु ॥ १ ॥ मरुदेवा समा नांबा । याऽगात् पूर्वं किलेक्षितुं ॥ मुक्तिकन्यां तनूजार्थे । शिवमार्गमपि स्फुटं ॥ २ ॥ भगवानपि समवसरणे धर्मं अकथयत्, तत्र ऋषभसेनाद्याः पंच शतानि भरतस्य पुत्राः सप्त शतानि पौत्राश्च प्रवजितास्तेषां मध्ये ऋषभसेनादयश्चतुरशीतिर्गणधराः स्थापिताः, ब्राह्म्यपि प्रवव्राज, भरतः पुनः श्रावकः संजातः, स्त्रीरत्नं भविष्यतीति

तदा भरतेन निरुद्धा सुंदर्यपि श्राविका संजातेति, चतुर्विधसंघस्थापना ॥ ते च कच्छमहाकच्छवर्जाः सर्वेऽपि तापसाः भगवतः पार्श्वे दीक्षां जगृहु, भरतस्तु शक्रनिवारितमरुदेवीशोकः स्वस्थानं जगाम।

अथ भरतश्चक्रपूजां कृत्वा शुभे दिने प्रयाणं कृत्वा षष्टिसहस्रवर्षैः भरतस्य षट् खंडानि साधयित्वा स्वगृहमागतः, चक्रं तु बहिरेव तस्थौ, तदा भरतेन तत्कारणं पृष्टा नियोगिनो जगुः, नवनवतिस्तव भ्रातरो वशे नागता इति, तदा भरतेनाष्टनव भ्रातृणां मदाज्ञा मान्येति दूतमुखेनावाचि, ते संभूय किमाज्ञां मन्यामहे उत युद्ध कुर्म इति पृष्टु प्रभुपार्श्वे गताः, प्रभुणापि वैतालीयाध्ययनप्ररूपणया प्रतिबोध्य दीक्षिता इति, तदनु बाहुबलिन उपरि दूतः प्रेषि, सोऽपि क्रोधांधदर्पोद्धुरः सन् स्वसैन्ययुत सन्मुखमागत्य भरतेन सह द्वादशवर्षं यावद्युद्धमकरोत्, परं न च हारितः, तदा शक्रेणागत्य भूयस्तरजनसंहारं भवंतं ज्ञात्वा दृष्टिवाग्मुष्टिदंडलक्षणाश्चत्वारो युद्धाः प्रतिष्ठिताः, तेष्वपि भरतस्य पराजयो जज्ञे, तदा भरतेन क्रोधांधेन बाहुबलिन उपरि चक्रं मुक्तं, परमेकगोत्रीयत्वात्तत्तं न पराभवत्, तदामर्षवशाद्भरतं हंतुमना मुष्टिमुत्पाट्य धावन् बाहुबलिरहो पितृतुल्यज्ये-

छभ्रातृहननं तु ममानुचितमेव, उत्पाटिता मुष्टिरपि कथं मोघा भवेदिति विचार्य स्वशिरसि तां मुक्त्वा लोचं कृत्वा सर्वं च त्यक्त्वा कायोत्सर्गं चक्रे, तदा भरतस्तं नत्वा स्वापराधं क्षमयित्वा स्वस्थानं गतः, बाहुबलिस्तु पर्यायज्येष्ठान् लघुभ्रातॄन् कथं नमामीति, ततो यदा केवलमुत्पत्स्यते तदैव भगवत्पार्श्वे यास्यामीति विचार्य वर्षं यावत् कायोत्सर्गेणैवास्थात्, वर्षान्ते च भगवत्प्रेषिताभ्यां स्वभगिनीभ्यां हे भ्रातर्गजादुत्तरेत्युक्त्वा प्रतिबोधितः स यावत् चरणौ उदक्षिपत् तावत्तस्य केवलमुत्पेदे, ततो भगवत्पार्श्वे गत्वा चिरं विहृत्य भगवता सहैव स मोक्षं ययाविति, भरतोऽपि चिरं चक्रवर्त्तिश्रियमनुभूय एकदादर्शभवने मुद्रिकाशून्यां स्वांगुलीं दृष्ट्वाऽनित्यत्वं भावयन् केवलज्ञानमुत्पाद्य दशसहस्रनृपसार्द्धं देवतादत्तं लिंगमुपादाय चिरं विहृत्य शिवं ययाविति ॥

ऋषभस्य अर्हतः कौशलिकस्य चतुरशीतिर्गणाः, चतुरशीतिर्गणधराश्चाभवन् ॥

ऋषभस्य अर्हतः कौशलिकस्य ऋषभसेनप्रमुखाणां चतुरशीतिश्रमणसहस्राणि उत्कृष्टा एतावती श्रमणसंपदा अभवत् ॥ २१५

॥ ३३४ ॥

ऋषभस्य अर्हत कौशलिकस्य ब्राह्मीसुंदरीप्रमुखाणां आर्यिकाणां त्रयो लक्षा., उत्कृष्टा एतावती आर्यिकासंपत् अजयत् ॥ २१५ ॥

ऋषभस्य अर्हतः कौशलिकस्य श्रेयांसप्रमुखाणां श्रमणोपासकानां त्रयो लक्षाः पच सहस्राणि उत्कृष्टा एतावती श्रावकाणां संपत् अजवत् ॥ २१६ ॥

ऋषभस्य अर्हत. कौशलिकस्य सुभद्राप्रमुखाणां श्राविकाणां पंच लक्षाश्चतु पंचाशत् सहस्रा; उत्कृष्टा श्राविकाणां संपत् अजवत् ॥ २१७ ॥

ऋषभस्य अर्हत. कौशलिकस्य चत्वारि सहस्राणि, सप्त शतानि, पंचाशदधिकानि चतुर्दशपूर्विणां अकेवलिनामपि केवलितुल्याना यावत् उत्कृष्टा एतावती चतुर्दशपूर्विणां संपत् अभवत् ॥ २१८ ॥

ऋषभस्य अर्हतः कौशलिकस्य नव सहस्राणि अवधिज्ञानिनां उत्कृष्टा एतावती अवधिज्ञानिनां संपत् अभवत् ॥ २१९ ॥

ऋषभस्य अर्हत. कौशलिकस्य विंशतिसहस्रा. केवलज्ञानिनां उत्कृष्टा एतावती केवलज्ञानिसंपत्

अभवत् ॥ २२० ॥

ऋषभस्य अर्हतः कौशलिकस्य विंशतिसहस्राणि षट् शतानि च वैक्रियलब्धिमतां उत्कृष्टा एतावती वैक्रियलब्धिमत्संपत् अभवत् ॥ २२१ ॥

ऋषभस्य अर्हतः कौशलिकस्य द्वादश सहस्राणि, षट् शतानि, पंचाशच्च विपुलमतीनां सार्धद्वयद्वीपेषु द्वयोश्च समुद्रयोः संज्ञिनां पंचेंद्रियाणां पर्याप्तकानां मनोगतान् भावान् जानतां उत्कृष्टा एतावती विपुलमतिसंपत् अभवत् ॥ २२२ ॥

ऋषभस्य अर्हतः कौशलिकस्य द्वादश सहस्राणि, षट् शतानि पंचाशच्च वादिनां उत्कृष्टा एतावती वादिसंपत् अभवत् ॥ २२३ ॥

ऋषभस्य अर्हतः कौशलिकस्य विंशतिशिष्यसहस्राणि सिद्धानि, चत्वारिंशत् आर्यिकासहस्राणि सिद्धानि ॥ २२४ ॥

ऋषभस्य अर्हतः कौशलिकस्य द्वाविंशतिसहस्राणि नव शतानि च अनुत्तरोपपातिनां, गतौ

कल्याणं येषां ते तथा तेषां, यावत् उत्कृष्टा एतावती अनुत्तरोपपातिनां संपत् अभवत् ॥ २२५ ॥

ऋषभस्य अर्हतः कौशलिकस्य द्विविधा अंतकृद्भूमिः अभवत्, तद्यथा–युगांतकृद्भूमिः पर्यायां-
॥ २२७ ॥ तकृद्भूमिश्च, यावत् युगांतकृद्भूमिरसंख्येयानि पुरुषयुगानि, भगवतोऽन्वयक्रमेण सिद्धानि, पर्यायां-
तकृद्भूमिस्तु भगवतः केवले समुत्पन्नेऽन्तर्मुहूर्त्तेन मरुदेवास्वामिनी अंतकृत्केवलितां प्राप्ता ॥ २२६ ॥

तस्मिन् काले तस्मिन् समये ऋषभः अर्हन् कौशलिकः विंशतिपूर्वलक्षान् कुमारावस्थायां उषित्वा
स्थित्वा, त्रिषष्टिः पूर्वलक्षान् राज्यावस्थायां उषित्वा, त्र्यशीतिपूर्वलक्षान् गृहस्थावस्थायां उषित्वा,
एकं वर्षसहस्रं छद्मस्थपर्यायं पालयित्वा, एकं पूर्वलक्षं वर्षसहस्रेणोनं केवलिपर्यायं पालयित्वा, प्र-
तिपूर्णं पूर्वलक्षं चारित्रपर्यायं पालयित्वा, चतुरशीतिः पूर्वलक्षान् यावत् सर्वायुः पालयित्वा, क्षीणेषु
वेदनीयायुर्नामगोत्रेषु सत्सु, अस्यां अवसर्पिण्यां सुखमदुःखमानामके तृतीयारके बहु व्यतिक्रांते सति,
त्रिषु वर्षेषु सार्द्धेषु अष्टसु मासेषु शेषेषु सत्सु, तृतीयारके एकोननवतिपक्षावशेषे, योऽसौ शीतकालस्य ॥ २२७ ॥
तृतीयो मासः, पंचमः पक्षः, माघस्य कृष्णपक्षः, तस्य माघबहुलस्य त्रयोदशीदिवसे उपरि अष्टापदशै-

त्तशिखरस्य दशन्निः अनगारसहस्त्रैः सार्द्धं चतुर्दशन्नक्तपरित्यागादुपवासषट्केन अपानकेन जलरहितेन, अन्निजिनामके नक्षत्रे चंद्रयोगं उपागते सति पूर्वाह्णकालसमये पल्यंकासनेन निषणः कालगतः, यावत् सर्वदुःखानि प्रक्षीणानि ॥

यस्मिन् समये न्नगवान् सिद्धः तस्मिन् समये चलितासनः शक्रोऽवधिना न्नगवन्निर्वाणं विज्ञायाग्रमहिषीलोकपालादिसर्वपरिवारपरिवृतो यत्र न्नगवच्छरीरं तत्रागत्य त्रिःप्रदक्षिणीकृत्य निरानंदोऽश्रुपूर्णनयनो नात्यासन्ने नातिदूरे कृतांजलिः पर्युपास्ते, एवं इशानेंद्रादयः सर्वेऽपि सुरेंद्राः कंपितासना ज्ञातन्नगवन्निर्वाणाः स्वस्वपरिवारपरिवृता अष्टापदपर्वते यत्र न्नगवच्छरीरं तत्रागत्य विधिवत् पर्युपासमानास्तिष्ठंति, ततः शक्रो न्नवनपतिव्यंतरज्योतिष्कवैमानिकदेवैर्नंदनवनात् गोशीर्षचंदनकाष्ठानि आनाय्य तिस्रश्चिताः कारयति, एका तीर्थंकरशरीरस्य, एका गणधरशरीराणां, एका शेषमुनिशरीराणां, तत आन्नियोगिकदेवैः क्षीरोदसमुद्राज्जलं आनाययति, ततः शक्रः क्षीरोदजलैस्तीर्थकृच्छरीरं स्नपयति; सरसगोशीर्षचंदनेनानुलिंपति, हंसलक्षणं पटशाटकं परिधापयति, सर्वालंकारविन्नूषितं करोति, एवं

अन्ये देवा गणधरमुनिशरीराणि स्नपितानि चंदनानुलिप्तानि सर्वालंकारविभूषितानि कुर्वंति, ततः शक्रो विचित्रचित्रविराजितास्तिस्रः शिबिकाः कारयति, निरानंदो दीनमना अश्रुमिश्रनेत्रस्तीर्थंकृच्छरीरं शिबिकायां आरोपयति, अन्ये देवा गणधरमुनिशरीराणि स्थापयति, ततः शक्राज्ञया अग्निकुमारा देवा निरानंदा निरुत्साहा अग्निं ज्वालयति, वायुकुमारा वायुं विकुर्वंति, शेषाश्च देवास्तासु चितासु कालागुरुचंदनादिसारदारूणि निक्षिपति, कुंभशो मधुघृतैस्ताः सिंचंति, अस्थिशेषेषु च तेषु शरीरेषु ततः शक्रादेशेन मेघकुमारा देवास्तिस्रश्चिता निर्वापयति, ततः शक्रः प्रभोरुपरितनीं दक्षिणां दाढां गृह्णाति, ईशानेंद्र उपरितनीं वामां, चमरेंद्रोऽधस्तनीं दक्षिणां, बलींद्रोऽधस्तनीं वामां, अन्येऽपि देवाः केऽपि जिनभक्त्या केऽपि जीतमिति, केऽपि धर्म इति कृत्वा अवशिष्टानि अंगोपांगास्थीनि गृह्णंति, ततः शक्रो रत्नमयानि त्रीणि स्तूपानि कारयति, एकं भगवतो जिनस्य, एकं गणधराणां, एकं शेषमुनीनां, तथा कृत्वा च शक्रादयो देवा नंदीश्वरादिषु द्वीपेषु कृताष्टाह्निकमहोत्सवाः स्वस्वविमानेषु गत्वा स्वस्वासु सभासु वज्रमयसमुद्गकेषु जिनदाढाः प्रक्षिप्य गंधमाल्यादिभिः पूजयंति ॥

ऋषभस्य अर्हतः कौशलिकस्य यावत् सर्वदुःखप्रक्षीणस्य त्रीणि वर्षाणि सार्द्धाश्चाष्टौ मासा व्यतिक्रांताः, ततः परं एका सागरोपमकोटाकोटी, कीदृशी? त्रिवर्षसार्द्धाष्टमासाधिकैर्द्विचत्वारिंशद्वर्षाणां सहस्रैः ऊनां व्यतिक्रांता, एतस्मिन् समये श्रमणो भगवान् महावीरो निर्वृत्तः, ततोऽपि परं नववर्षशतानि व्यतिक्रांतानि, दशमस्य वर्षशतस्य अयं अशीतितमः संवत्सरः कालो गच्छति ।२२७।

॥ इति श्रीऋषभदेवचरित्रं समाप्तम् ॥

॥ इति जगद्गुरुश्रीहीरविजयसूरीश्वरशिष्यरत्नमहोपाध्यायश्रीकीर्त्तिविजयगणि-
शिष्योपाध्यायश्रीविनयविजयगणिविरचितायां कल्पसुबोधिकायां सप्तमः
क्षणः समाप्तः ॥ समाप्तं च जिनचरितरूपप्रथमवाच्यव्याख्यानं,
इति. ग्रंथाग्रंथ ( १०२५ ) सप्तानामपि व्याख्यानानां
ग्रंथाग्रंथ ( ५२५३ )
॥ श्रीरस्तु ॥

## ॥ अथ अष्टमं व्याख्यानं प्रारभ्यते ॥

अथ गणधरादि स्थविरावलीलक्षणे द्वितीये वाच्ये स्थविरावलीमाह–तस्मिन् काले तस्मिन् समये श्रमणस्य भगवतो महावीरस्य नव गणाः, एकादश गणधराश्च अभवन्, अथ शिष्यः पृच्छति, तत् केन अर्थेन हेतुना हे भदंत ! एवं उच्यते ? श्रमणस्य भगवतो महावीरस्य नव गणाः, एकादश गणधराश्च अभूवन्, अन्येषां गणानां गणधराणां च तुल्यत्वात् ' जावइआ जस्स गणा तावइआ गणहरा तस्स ' इति प्रसिद्धत्वात्, इति शिष्येण प्रश्ने कृते आचार्य आह–श्रमणस्य भगवतो महावीरस्य ज्येष्ठ इंद्रभूतिनामा अनगारो गौतमगोत्रः पंच श्रमणशतानि वाचयति, मध्यमः अग्निभूतिनामा अनगारः गौतमगोत्रः पंच श्रमणशतानि वाचयति, लघुः वायुभूतिर्नामा अनगारः गौतमगोत्रः पंच श्रमणशतानि वाचयति, स्थविरः आर्यव्यक्तनामा भारद्वाजगोत्रः पंच श्रमणशतानि वाचयति, स्थविर आर्यसुधर्मानामा अग्निवेश्यायनगोत्रः पंच श्रमणशतानि वाचयति ॥

स्थविरः मंडितपुत्रो वासिष्ठगोत्रः सार्द्धान् त्रीणि श्रमणशतानि वाचयति, स्थविरो मौर्यपुत्रः काश्यपगोत्रः सार्द्धानि त्रीणि श्रमणशतानि वाचयति ॥ स्थविरः अकंपितः गौतमगोत्रः, स्थविरः अचलभ्राता च हारीतगोत्रः, तौ द्वावपि स्थविरौ त्रीणि त्रीणि श्रमणशतानि वाचयतः, स्थविरः मेतार्यः, स्थविरः प्रभासः, द्वावपि स्थविरौ कौडिन्यौ गोत्रेण त्रीणि त्रीणि श्रमणशतानि वाचयतः. तत् तेन हेतुना हे आर्य ! एवं उच्यते ॥ श्रमणस्य भगवतो महावीरस्य नव गणाः, एकादश गणधराश्च अभूवन्, तत्र अकंपिताचलभ्रात्रोरेकैव वाचना, एवं मेतार्यप्रभासयोरपीति युक्तमुक्तं नव गणा एकादश गणधराः, यस्मात् एकवाचनिको यतिसमुदायो गण इति, अत्र मंडितमौर्यपुत्रयोरेकमातृकत्वेन भ्रात्रोरपि भिन्नगोत्राभिधानं पृथक्जनकापेक्षया, तत्र मंडितस्य पिता धनदेवो मौर्यपुत्रस्य तु मौर्य इति, अनिषिद्धं च तत्र देशे एकस्मिन् पत्यौ मृते द्वितीयपतिवरणमिति वृद्धाः ॥

सर्वे एते इंद्रभूत्यादयः श्रमणस्य भगवतो महावीरस्य एकादशापि गणधराः, कीदृशाः ? द्वादशांगीप्रणेतारः, आचारांगादिदृष्टिवादांतश्रुतवंतः स्वयं तत्प्रणयनात्. चतुर्दशपूर्ववेत्तारः, द्वादशांगि-

त्वे इत्येतेनैव चतुर्दशपूर्वित्वे लब्धे यत्पुनरेतदुपादानं तदंगेषु चतुर्दशपूर्वाणां प्राधान्यख्यापनार्थं, प्राधान्यं च पूर्वप्रणयनात् अनेकविद्यामन्त्रार्थमयत्वात् महाप्रमाणत्वाच्च, द्वादशांगित्वं चतुर्दशपूर्वित्वं च सूत्रमात्रग्रहणेऽपि स्यादिति तदपोहार्थमाह समस्तगणिपिटकधारकाः, गणोऽस्यास्तीति गणी भावाचार्यस्तस्य पिटकमिव रत्नादिकरंडकमिव गणिपिटकं द्वादशांगी, तदपि न देशतः स्थूलिभद्रस्येव, किं तु समस्तं सर्वाक्षरसन्निपातित्वात्तद्धारयति सूत्रतोऽर्थतश्च ये ते, तथा राजगृहे नगरे अपानकेन मासिकेन भक्तेन भक्तप्रत्याख्यानेन, पादपोपगमनानशनेन मोक्षं गताः, यावत् सर्वदुःखप्रक्षीणाः, स्थविर इन्द्रभूतिः स्थविर आर्यसुधर्मा च सिद्धिं गते महावीरे सति पश्चाद् द्वावपि स्थविरौ निर्वाणं प्राप्तौ, तत्र नव गणधरा भगवति जीवत्येव सिद्धाः, इंद्रभूतिसुधर्माणौ तु भगवति निर्वृत्ते निर्वृत्तौ ॥

ये इमे अद्यतनकाले श्रमणा निर्ग्रंथा विहरंति एते सर्वेऽपि आर्यसुधर्मणः अणगारस्य अपत्यानि शिष्यसंतानजा इत्यर्थः अवशेषा गणधरा निरपत्याः शिष्यसंतानरहिताः, स्वस्वमरणकाले स्वस्वगणान् सुधर्मस्वामिनि निसृज्य शिवं गताः, यदाहुः—' मासं पाओवगया । सव्वेवि य सव्वलद्धि-

संपन्ना ॥ वज्जरिसहसंघयणा । समचतुरंसा य संठाणा ॥ १ ॥

॥ गणधराणां गृहवासादिवर्षमानयंत्रकमिदं ॥

| | गणधरनाम. | गृहवास. | छद्मस्थावस्था. | केवलपर्याय. | सर्वायुः |
|---|---|---|---|---|---|
| १ | इंद्रभूति | वर्ष ५० | वर्ष ३० | वर्ष १२ | वर्ष ९२ |
| २ | अग्निभूति | ,, ४६ | ,, १२ | ,, १६ | ,, ७४ |
| ३ | वायुभूति | ,, ४२ | ,, १० | ,, १० | ,, ७० |
| ४ | व्यक्त | ,, ५० | ,, १२ | ,, १८ | ,, ८० |
| ५ | सुधर्मा | ,, ५० | ,, ४२ | ,, ८ | ,, १०० |
| ६ | मंडित | ,, ५३ | ,, १४ | ,, १६ | ,, ९५ |
| ७ | मौर्यपुत्र | ,, ६५ | ,, १४ | ,, १६ | ,, ९५ |
| ८ | अकंपित | ,, ४८ | ,, ९ | ,, २१ | ,, ७८ |

| | | | | | |
|---|---|---|---|---|---|
| ९ | अचलभ्राता | वर्षे ४६ | वर्षे १२ | वर्षे १४ | वर्षे ७२ |
| १० | मेतार्य | ,, ३६ | ,, १० | ,, १६ | ,, ६२ |
| ११ | प्रभास | ,, १६ | ,, ८ | ,, १६ | ,, ४० |

श्रमणो जगवान् महावीरः काश्यपगोत्रः, श्रमणस्य जगवतो महावीरस्य काश्यपगोत्रस्य आर्यसुधर्मा स्थविरः शिष्यः, अग्निवैश्यायनगोत्रः, श्रीवीरपट्टे श्रीसुधर्मस्वामी पंचमो गणधरस्तत्स्वरूपं चेदं—कुल्लागसन्निवेशे धम्मिलविप्रस्य जार्या भद्दिला, तयोः सुतश्चतुर्दशविद्यापात्रं पंचाशद्वर्षांते प्रव्रजितस्त्रिंशद्वर्षाणि वीरसेवा, वीरनिर्वाणाद् द्वादशवर्षांते जन्मतो द्विनवतिवर्षांते च केवलं, ततोऽष्टौ वर्षाणि केवलित्वं परिपाल्य शतवर्षायुर्जंबूस्वामिनं स्वपदे संस्थाप्य शिवं गतः ॥१॥ स्थविरस्य आर्यसुधर्मणः अग्निवैश्यायनगोत्रस्य आर्यजंबूनामा स्थविरः शिष्य. काश्यपगोत्रः, श्रीजंबूस्वामिस्वरूपं चेदं—राजगृहे ऋषभधारिण्योः पुत्र. पंचमस्वर्गाच्च्युतो जंबूनामा श्रीसुधर्मस्वामिसमीपे धर्मश्रवणपुरस्सरं प्रतिपन्नशीलसम्यक्त्वोऽपि पित्रोर्दृढाग्रहवशादष्टौ कन्या. परिणीतः, परं तासां सस्नेहाभिर्वाग्भिर्न

ऽव्यामोहितः, यतः—सम्यक्त्वशीलतुंबाभ्यां । नवाब्धिस्तीर्यते सुखं ॥ ते दधानो मुनिर्जंबूः । स्त्रीन-दीषु कथं ब्रुडेत् ॥ १ ॥ ततो रात्रौ ताः प्रतिबोधयंश्चौर्यार्थमागतं चतुःशतनवनवतिचौरपरिकरितं प्रभवमपि प्राबोधयत्ततः प्रातः पंचशतचौरप्रियाष्टकतज्जनकजननीस्वजनकजननीभिः सह स्वयं पंच-शतसप्तविंशतितमो नवनवतिकनककोटीः परित्यज्य प्रव्रजितः, क्रमात् केवली भूत्वा षोडशवर्षाणि गृहस्थत्वे, विंशतिः छाद्मस्थ्ये, चतुश्चत्वारिंशत् केवलित्वे, अशीतिवर्षाणि सर्वायुः परिपाल्य श्रीप्रभवं स्वपदे संस्थाप्य सिद्धिं गतः, अत्र कविः—

जंबूसमस्तलारक्षो । न भूतो न भविष्यति ॥ शिवाध्ववाहकान् साधून् । चौरानपि चकार यः ॥ १ ॥ प्रभवोऽपि प्रभुर्जीयात्—चौर्येण हरता धनं ॥ लेभेऽनर्घ्यांचौर्यहरं । रत्नत्रितयमद्भुतं ॥ २ ॥ तत्र—बार वरिसेहिं गोअम । सिद्धो वीराउ वीसहिं सुहुमो ॥ चउसट्ठिए जंबू । वुच्छिन्ना तत्थ दस ठाणा ॥ ३ ॥ मण १ परमोहि २ पुलाए ३ । आहार ४ खवग ५ उवसमे ६ कप्पे ७ ॥ संजमतिअ ८ केवल ९ सिज्झ—णाया १० जंबूमि दस वुच्छिन्ना ॥ ४ ॥ 'मणत्ति' मनःपर्यायज्ञानं, 'परमोहित्ति' परमा-

वधिर्यस्मिन्नुत्पन्नेंतर्मुहूर्त्ततः केवलोत्पत्तिः, 'पुलाएत्ति' पुलाकलब्धिर्यया चक्रवर्त्तिसैन्यमपि चूर्णीकर्त्तुं प्रभुः स्यात्, 'आहारगत्ति' आहारकशरीरलब्धिः, 'खवगत्ति' क्षपकश्रेणिः, 'उवसमत्ति' उपशमश्रेणिः, 'कप्पत्ति' जिनकल्पः, 'संजमतिअत्ति' संयमत्रिकं, परिहारविशुद्धिक १ सूक्ष्मसंपराय २ यथाख्यातचारित्रलक्षण ३. अत्रापि कविः--लोकोत्तरं हि सौभाग्यं । जम्बूस्वामिमहामुनेः ॥ अद्यापि य पतिं प्राप्य । शिवश्रीर्नान्यमिच्छति ॥ १ ॥ स्थविरस्य आर्यजंबूनामकस्य काश्यपगोत्रस्य आर्यप्रभवः स्थविरः शिष्योऽभूत्, कात्यायनगोत्रः, स्थविरस्य आर्यप्रभवस्य कात्यायनगोत्रस्य आर्यशय्यंभवः स्थविरः शिष्यः, कीदृशः ?, मनकस्य पिता वत्सगोत्रः, अन्यदा स प्रभवप्रभुणा स्वपदे स्थापनार्थं गणे, संघे, च उपयोगे दत्ते, तथाविधयोग्याऽदर्शने च परतीर्थेषु तदुपयोगे दत्ते राजगृहे यज्ञ यजन्, शय्यंभवभट्टो ददृशे, ततस्तत्र गत्वा साधुभ्यां 'अहो कष्टमहो कष्टं तत्वं न ज्ञायते परं' इति वचः श्रावित, खड्गत्रासितस्वगुरुब्राह्मणदर्शिताया यज्ञस्तंभाधस्थश्रीशान्तिनाथप्रतिमाया दर्शनेन प्रतिबुद्धः प्रव्रजित., तदनु श्रीशय्यंभवं स्वपदे न्यस्य स्वर्गमगादिति प्रभवप्रभुस्वरूप, तदनु श्रीशय्यं-

भवोऽपि साधानमुक्तनिजभार्याप्रसूतमनकाख्यपुत्रहिताय श्रीदशवैकालिकं कृतवान्, क्रमेण च श्री-यशोभद्रं स्वपदे संस्थाप्य श्रीवीरादष्टनवतिवर्षैः स्वर्जगाम इति ॥ ४ ॥

श्रीयशोभद्रसूरिरपि श्रीभद्रबाहुसंभूतिविजयाख्यौ शिष्यौ स्वपदे न्यस्य स्वर्लोकमलंचक्रे ॥५॥ स्थविरस्य आर्यशय्यंभवस्य मनकस्य पितुः वच्छगोत्रस्य आर्ययशोभद्रः स्थविरः शिष्यः तुंगिकायन-गोत्रोऽभूत् ॥ ५ ॥ अतः परं प्रथमं संक्षिप्तवाचनया स्थविरावलीमाह—संक्षिप्तवाचनया आर्यय-शोभद्रात् अग्रतः एवं स्थविरावली कथिता, तद्यथा—स्थविरस्य आर्ययशोभद्रस्य तुंगिकायनगोत्र-स्य शिष्यौ द्वौ स्थविरौ, स्थविरः संभूतिविजयः माढरगोत्रः १, स्थविरः आर्यभद्रबाहुश्च प्राचीन-गोत्रः २, श्रीयशोभद्रपट्टे श्रीसंभूतिविजयश्रीभद्रबाहुनामकौ द्वौ पट्टधरौ जातौ, तत्र भद्रबाहुसंबंध-श्चैवं—प्रतिष्ठानपुरे वराहमिहिरभद्रबाहुद्विजौ प्रव्रजितौ, भद्रबाहोराचार्यपदप्रदाने रुष्टः सन् वराहो द्विजवेषमादृत्य वाराहीसंहितां कृत्वा निमित्तैर्जीवति, वक्ति च लोके काप्यरण्ये शिलायां अहं सिं-हलग्नममंस्थं, शयनावसरे तद्भंजनस्मृत्या लग्नभक्त्या तत्र गमने सिंहं दृष्ट्वापि तस्याधो हस्तक्षेपेण

लग्नजंगे कृते संतुष्टः सिंहलग्नाधिपः सूर्यः प्रत्यक्षीभूय स्वमंडले नीत्वा सर्वं ग्रहचारं ममादर्शयदिति, अन्यदा वराहेण राज्ञः पुरो लिखितकुंडालकमध्ये द्विपंचाशत्पलमानमत्स्यमाने कथिते श्रीभद्रबाहुभिस्तस्य मार्गेऽर्धपलशोषात् सार्धैकपंचाशत्पलमानता कुंडालकप्रांते पातश्च उक्तो मिलितश्च, तथान्यदा तेन नृपनंदनस्य शतवर्षायुर्वचते, एते न व्यवहारज्ञा नृपपुत्रस्य विलोकनार्थमपि नागता इति जैननिंदायां च क्रियमाणायां गुरुभिः सप्तभिर्दिनैर्बिडालिकातो मृतिरूचे; अत्र किरणावलीकारेण सप्तदिनैरिति समस्तः प्रयोगो लिखितः, स तु वैयाकरणोऽशुद्धः, सख्यया समाहारद्विगुत्वनात्, तदनु राज्ञा पुरात्सर्वबिडालिकाकर्षणेऽपि सप्तमदिने स्तन्यं पिबतो बालस्योपरि बिडालिकाकारत्वगर्गलापातेन मरणे गुरूणां प्रशंसा, तस्य निंदा च सर्वत्र प्रससार, ततः कोपान्मृत्वा व्यंतरीभूयाऽशिवोत्पादादिना संघ उपसर्गयन् उपसर्गहरं स्तोत्रं कृत्वा श्रीगुरुभिर्निवारितः, उक्तं च–उवसग्गहरं थुत्तं । काऊण जेण संघकल्लाणं ॥ करुणापरेण विहिअं । स भद्दबाहुगुरु जयउ ॥ १ ॥

स्थविरस्य आर्यसंभूतिविजयस्य माढरगोत्रस्य शिष्य-स्थविर- आर्यस्थूलभद्रः गौतमगोत्रोऽभूत्

॥ स्थूलजद्रसंबंधश्चैवं-पाटलिपुरे शकटालमंत्रिपुत्रः श्रीस्थूलजद्रो द्वादश वर्षाणि कोशागृहे स्थितो वररुचिद्विजप्रयोगात् पितरि मृते नंदराजेनाकार्य मंत्रिमुद्रादानायाभ्यर्थितः सन् पितृमृत्युं स्वचित्ते विचिंत्य दीक्षामादत्त, पश्चाच्च संजूतिविजयांतिके व्रतानि प्रतिपद्य तदादेशपूर्वकं कोशागृहे चतुर्मासीमस्थात्, तदंते च बहुहावजावविधायिनीमपि तां प्रतिबोध्य गुरुसमीपमागतः सन् तैर्दुष्करदुष्करकारक इति संघसमक्षं प्रोचे, तद्वचसा पूर्वायाताः सिंहगुहासर्पबिलकूपकाष्ठस्थायिनस्त्रयो मुनयो दूनाः, तेषु सिंहगुहास्थायी मुनिर्गुरुणा निवार्यमाणोऽपि द्वितीयचतुर्मास्यां कोशागृहे गतः, दृष्ट्वा च तां दिव्यरूपां चलचित्तोऽजनि, तदनु तया नेपालदेशानायितरत्नकंबलं खाले क्षिप्त्वा प्रतिबोधितः सन्नागत्योवाच
-स्थूलजद्रः स्थूलजद्रः । स एकोऽखिलसाधुषु ॥ युक्तं दुष्करदुष्कर-कारको गुरुणा जगे ॥ १॥ पुप्फफलाणं च रसं । सुराणमंसाणमहिलिआणं च ॥ जाणंता जे विरया । ते दुक्करकारए वंदे ॥ २ ॥
कोशापि तत्प्रतिबोधिता सती स्वकामिनं पुंखार्पितबाणैर्दूरस्थाम्रलुंब्यानयनगर्वितं रथकारं सर्षपराशिस्थसूच्यग्रस्थपुष्पोपरि नृत्यंती प्राह-न दुक्करं अंबयलुंबितोडणं । न दुक्करं सरिसवनच्चिआइं ॥

तं दुक्करं तं च महाणुभावं । ज सो मुणी पमयवणमि वुच्छो ॥ ३ ॥ कश्चयोऽपि—

गिरौ गुहायां विजने वनांतरे । वासं श्रयते वशिनः सहस्रशः ॥ हर्म्येऽतिरम्ये युवतीजनांतिके । वशी स एकः शकटालनंदनः ॥ ४ ॥ योऽग्नौ प्रविष्टोऽपि हि नैव दग्ध—श्छिन्नो न खड्गाग्रकृतप्रचारः ॥ कृष्णाहिरंध्रेऽप्युषितो न दष्टो । नाक्तोंजनागारनिवास्यदिग्धो य ॥ ५ ॥ वेश्या रागवती सदा तदनुगा षड्भी॰ रसैर्भोजनं । शुभ्रं धाम मनोहरं वपुरहो नव्यो वयः संगम ॥ कालोऽय जलदाविलस्तदपि य. कामं जिगायादरात् । तं वंदे युवतीप्रबोधकुशलं श्रीस्थूलभद्रं मुनिं ॥ ६ ॥ रे कामवामनयना तव मुख्य॰ मस्त्रं । वीरा वसंतपिकपंचमचंद्रमुख्या ॥ त्वत्सेवका हरिविरंचिमहेश्वराद्या । हाहा हताश मुनिनापि कथ हतस्त्वं ॥ ७ ॥ श्रीनंदिषेणरथनेमिमुनीश्वरादि—बुद्ध्या त्वया मदन रे मुनिरेष दृष्टः ॥ ज्ञातं न नेमिमुनिजंबुसुदर्शनानां । तुर्यो भविष्यति निहत्य रणांगणे मां ॥ ८ ॥ श्रीनेमितोऽपि शकटालसुतं विचार्य । मन्यामहे वयममुं भटमेकमेव ॥ देवोऽद्रिदुर्गमधिरुह्य जिगाय मोहं । यन्मोहनालयमयं तु वशी प्रविश्य ॥ ९ ॥ अन्यदा द्वादशवर्षदुर्भिक्षप्रांते संघाग्रहेण श्रीभद्रबाहुभिः साधुपंचशत्याः प्र-

स्यहं वाचनासप्तकेन दृष्टिवादे पाठ्यमाने सप्तभिर्वाचनाभिरन्येषु उद्विग्नेषु श्रीस्थूलभद्रो वस्तुद्वयोनां दशपूर्वीं पपाठ; अथैकदा यक्षासाध्वीप्रभृतीनां वंदनार्थमागतानां स्वभगिनीनां सिंहरूपदर्शनेन श्रुत्वा श्रीभद्रबाहवो वाचनायां अयोग्यस्त्वं इति स्थूलभद्र ऊचिवांसः, पुनः संघाग्रहात्, अथान्यस्मै वाचना न देयेत्युक्त्वा सूत्रतो वाचनां ददुः, तथा चाहुः—केवली चरमो जंबू—स्वाम्यथ प्रभवप्रभुः ॥ शय्यंभवो यशोभद्रः । संभूतिविजयस्तथा ॥ १ ॥ भद्रबाहुः स्थूलभद्रः । श्रुतकेवलिनो हि षट् ॥

स्थविरस्य आर्यस्थूलभद्रस्य गौतमगोत्रस्य शिष्यौ द्वौ स्थविरौ अभूतां, स्थविर आर्यमहागिरिः एलापत्यगोत्रः, स्थविरः आर्यसुहस्तिश्च वासिष्ठगोत्रः, तयोः संबंधश्चैवं—आर्यमहागिरिर्जिनकल्पविच्छेदेऽपि जिनकल्पतुलनामकार्षीत्—' वुच्छिन्ने जिणकप्पे । काही जिणकप्पतुलणमिह धीरो ॥ तं वंदे मुणिवसहं । महागिरिं परमचरणधरं ॥ १ ॥ जिणकप्पपरीकम्मं । जो कासी जस्स संथवमकासी ॥ सिट्ठिघरंमि सुहत्थी । तं अज्जमहागिरिं वंदे ॥ २ ॥ ' ' वंदे अज्जसुहत्थिं । मुणिपवरं जेण संपइराया ॥ रिद्धिं सव्वपसिद्धं । चारित्तापाविओ परमं ॥ १ ॥ ' यैरार्यसुहस्तिभिर्दुर्भिक्षे साधुभ्यो भिक्षां

याचमानो द्रमको दीक्षितः, श्रेणिकसुतकोणिकसुतोदायिपट्टोदितनवनंदपट्टोद्भूतचन्द्रगुप्तसुतश्अशोकश्रीसुतकुणालपुत्रः संप्रतिनामाभूत्, स च जातमात्र एव पितामहदत्तराज्ये रथयात्राप्रवृत्तश्रीआर्यसुहस्तिदर्शनाज्जातजातिस्मृतिः सपादलक्षजिनालयसपादकोटिनवीनबिंबषट्त्रिंशत्सहस्रजीर्णोद्धारपंचनवतिसहस्रपित्तलमयप्रतिमानेकशतसहस्रसत्रशालादिभिर्विभूषितां त्रिखण्डामपि महीमकरोत्, यत्तु किरणावलीकृता सपादकोटिजिनभवनेत्युक्तं तच्चिंत्यं, अंतर्वाच्यादौ सपादलक्षेति दर्शनात्, अनार्यदेशानपि करं मुक्त्वा पूर्वं साधुवेषभृत्प्रेषणादिना साधुविहारयोग्यान् स्वसेवकनृपान् जैनधर्मरतांश्च चकार, तथा, वस्त्रपात्रान्नदध्यादि-प्रासुकद्रव्यविक्रय ॥ ये कुर्वंत्यथ तानुर्वी-पतिः संप्रतिरूचिवान् ॥ १ ॥ साधुभ्यः संचरद्भ्योऽग्रे । ढौकनीयं स्ववस्तु भोः ॥ ते यदा ददते पूज्या-स्तेभ्यो दातव्यमेव तत् ॥ २ ॥ अमात्यकोशाधिकारी च । तन्नं दास्यति याचितं ॥ मूल्यमभ्युल्लसल्लाभं । समस्तं तस्य वस्तुनः ॥ ३ ॥ अथ ते पृथिवीभर्तु-राज्ञया तद् व्यधुर्मुदा ॥ अशुद्धमपि तच्छुद्ध-बुद्ध्या लाद्यायि साधुभिः ॥ ४ ॥

स्थविरस्य आर्यसुहस्तिनः वाशिष्ठगोत्रस्य शिष्यौ द्वौ स्थविरौ अभूतां, सुस्थितः सुप्रतिबुद्धश्च, कौटिककाकंदिकौ व्याघ्रापत्यगोत्रौ, सुस्थितौ सुविहितक्रियानिष्ठौ सुप्रतिबुद्धौ सुज्ञाततत्त्वौ, इदं विशेषणं, कौटिककाकंदिकाविति तु नामनी, अन्ये तु सुस्थितसुप्रतिबद्धौ इति नामनी, कोटिशः सूरिमंत्रजापात् काकंद्यां नगर्यां जातत्वाच्च कौटिककाकंदिकाविति विशेषणं, स्थविरयोः सुस्थितसुप्रतिबुद्धयोः कौटिककाकंदिकयोः व्याघ्राप्रत्यगोत्रयोः शिष्यः स्थविरः आर्य इंद्रदिन्नोऽभूत् कौशिकगोत्रः, स्थविरस्य आर्यइंद्रदिन्नस्य कौशिकगोत्रस्य शिष्यः स्थविरः आर्यदिन्नोऽभूत् गौतमगोत्रः, स्थविरस्य आर्यदिन्नस्य गौतमगोत्रस्य शिष्यः स्थविरः आर्यसिंहगिरिरभूत्, जातिस्मरणवान् कौशिकगोत्रः, स्थविरस्य आर्यसिंहगिरेः जातिस्मरणवतः कौशिकगोत्रस्य शिष्यः स्थविरआर्यः वज्रोऽभूत् गौतमगोत्रः, स्थविरस्य आर्यवज्रस्य गौतमगोत्रस्य शिष्यः स्थविरः आर्यवज्रसेनोऽभूत् उत्कौशिकगोत्रः, स्थविरस्य आर्यवज्रसेनस्य उत्कौशिकगोत्रस्य शिष्याः चत्वारि स्थविरा अभूवन्, स्थविरः आर्यनागिलः, स्थविरः आर्यपौमिलः, स्थविरः आर्यजयंतः, स्थविरः आर्यतापसः, स्थविरात् आर्या-

नागिला शाखा निर्गता, स्थविरात् आर्यपौमिला आर्यपौमिला शाखा निर्गता, स्थविरात् आर्यजयंतात् आर्यजयंती शाखा निर्गता, स्थविरात् आर्यतापसात् आर्यतापसी शाखा निर्गता, इति ।

अथ विस्तरवाचनया स्थविरावलीमाह–विस्तरवाचनया पुनः आर्ययशोजद्रात् अग्रतः स्थविरावली एवं प्रलोकयति, तत्रास्यां किल वाचनायां भूरिशो भेदा लेखकदोषहेतुका ज्ञेयाः, ततः स्थविराणां शाखाः कुलानि च प्रायः संप्रति न ज्ञायते, नामांतरेण तिरोहितानि भविष्यतीति, तत्र तद्विदः प्रमाणं, तत्र कुलं एकाचार्यसंततिर्गणस्त्वेकवाचनाचारमुनिसमुदायः, यदुक्तं–तत्थ कुलं विन्नेयं । एगायरिअस्स संततिजाउ ॥ दुन्हकुलाणमिहो पुण । साविक्खाणं गणो होइ ॥१॥ शाखास्तु एकाचार्यसंततावेव पुरुषविशेषाणां पृथक् पृथगन्वयाः, अथवा विवक्षिताद्यपुरुषसंततिः शाखा, यथाऽस्मदीया वैरनाम्ना वैरी शाखा, कुलानि तु तच्छिष्याणां पृथक् पृथगन्वयाः, यथा चांद्रकुलं नागेंद्रकुलमित्यादि, तद्यथा–

स्थविरस्य आर्ययशोजद्रस्य तुंगिकायनगोत्रस्य इमौ द्वौ स्थविरौ अंतेवासिनौ, 'अहावच्चा'

न पतंति यस्मिन्नुत्पन्ने दुर्गतौ अयशःपंके वा पूर्वजास्तदपत्यं पुत्रादिस्तत्सदृशा यथापत्याः, अत एव अभिज्ञाता अभिज्ञाताः प्रसिद्धाः अभवन्, तद्यथा–स्थविर आर्यभद्रबाहुः प्राचीनगोत्रः, स्थविरः आर्यसंभूतिविजयः माढरगोत्रः, स्थविरस्य आर्यभद्रबाहोः प्राचीनगोत्रस्य एते चत्वारि स्थविराः अंतेवासिनो यथापत्याः प्रसिद्धा अभवन्, तद्यथा–स्थविरः गोदासः १, स्थविरः अग्निदत्तः २, स्थविरः यज्ञदत्तः ३, स्थविरः सोमदत्तः ४ काश्यपगोत्रः, स्थविरात् गोदासात् काश्यपगोत्रात् यत्र गोदासनामको गणो निर्गतः, तस्य एताश्चत्वारि शाखा एवं आख्यायंते, तद्यथा–तामलिप्तिका १, कोटिवर्षिका २, पुंड्रवर्द्धनिका ३, दासीखर्बटिका ४. स्थविरस्य आर्यसंभूतिविजयस्य माढरगोत्रस्य एते द्वादश स्थविराः शिष्याः यथापत्याः प्रसिद्धा अभवन्, ॥ तद्यथा— नंदनभद्रः १, उपनंदः २, तीसभद्रः ३, यशोभद्रः ४, सुमनभद्रः ५, मणिभद्रः ६, पूर्णभद्रः ७, स्थविरः स्थूलीभद्रः ८, ऋजुमतिः ९, जंबूनामधारकः १०, स्थविरः दीर्घभद्रः ११, स्थविरः पांडुभद्रः १२.

स्थविरस्य आर्यसंभूतिविजयस्य माढरगोत्रस्य एताः सप्त अंतेवासिन्यः यथापत्याः प्रसिद्धा

अभवन्, तद्यथा—जक्खाय १ जक्खदिन्ना २। भूआ ३ तह चेव भूअदिन्ना य ४॥ सेणा ५ वेणा ६ रेणा ७। भइणीउ थूलभद्दस्स ॥ १॥ थेरस्सणं अज्जथूलभद्दस्स गोयमसगुत्तस्स इमे दो थेरा अतेवासी अहावच्चा अभिन्नाया हुत्था, तं जहा—थेरे अज्जमहागिरी एलावच्चसगुत्ते, थेरे अज्जसुहत्थी वासिट्ठसगुत्ते, थेरस्स अज्जमहागिरिस्स एलावच्चसगुत्तस्स इमे अट्ठ थेरा अंतेवासी अहावच्चा अभिन्नाया हुत्था, तं जहा—थेरे उत्तरे, थेरे बलिस्सहे, थेरे धणड्ढे, थेरे सिरिभद्दे, थेरे कोडिन्ने, थेरे नागे, थेरे नागमित्ते, थेरे छडुलूए रोहगुत्ते कोसियगुत्तेणं, छडुलूए रोहगुत्तेत्ति, द्रव्य १ गुण २ कर्म ३ सामान्य ४ विशेष ५ समवायाख्य ६ षट्पदार्थप्ररूपकत्वात् षट्, उलूकगोत्रोत्पन्नत्वेनोलूकः, ततः कर्मधारये षडुलूक.' प्राकृतत्वात् ' छडुलूएत्ति ' अत एव सूत्रे ' कोसिअगुत्ते ' त्युक्त, उलूककौशिकयोरेकार्थत्वात्. थेरेहिंतोणं छडुलूएहिंतो रोहगुत्तेहिंतो कोसियगुत्तेहिंतो, तत्थणं तेरासिया निग्गया, तेरासियत्ति त्रैराशिका जीवाऽजीवनोजीवाख्यराशित्रयप्ररूपिणस्तच्छिष्यप्रशिष्या. ॥ तदुत्पत्तिस्त्वेवं—

श्रीवीरात् पंचशतचतुश्चत्वारिंशत्तमे वर्षे अंतरंजिकायां पुर्यां भूतगृहव्यतरचैत्यस्थश्रीगुप्ताचा-

र्यवंदनाय ग्रामांतरादागच्छन् रोहगुप्तस्तच्छिष्यः प्रवादिप्रदापितपटहध्वनिमाकर्ण्य तं पटहं स्पृष्ट्वाचार्यस्य तन्निवेद्य वृश्चिक १ सर्प २ मूषक ३ मृगी ४ वराही ५ काकी ६ शकुनिकाभिधपरिव्राजकविद्योपघातिका मयूरी १ नकुली २ बिडाली ३ व्याघ्री ४ सिंही ५ उलूकी ६ श्येनी ७ संज्ञाः सप्त विद्याः अशेषोपद्रवशमकरजोहरणं च गुरुभ्यः प्राप्य बलश्रीनाम्नो राज्ञः सभायामागत्य पोट्टशालाभिधेन परिव्राजकेन सह वादे प्रारब्धे तेन जीवाऽजीवसुखदुःखादिरूपे राशिद्वये स्थापिते ॥ देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरा–स्त्रैलोक्यं त्रिपदी त्रिपुष्करमथ त्रिब्रह्म वर्णास्त्रयः ॥ त्रैगुण्यं पुरुषत्रयी त्रयमथो संध्यादिकालत्रयं । संध्यानां त्रितयं वचस्त्रयमथाप्यर्थास्त्रयः संस्मृताः ॥ १ ॥ इत्यादि वदन् जीवाऽजीवनोजीवेत्यादिराशित्रयं व्यवस्थापितवान्, ततश्च तद्विद्यासु स्वविद्याभिर्विजितासु तत्प्रयुक्तां रासभीविद्यां रजोहरणेन विजित्य महोत्सवपूर्वकं आगत्य सर्वं वृत्तांतं गुरुभ्यो व्यजिज्ञपत्, ततो गुरुभिरूचे वत्स वरं चक्रे, परं जीवाऽजीवनोजीवेति राशित्रयस्थापनमुत्सूत्रमिति तत्र गत्वा ददस्व मिथ्यादुःकृतं, ततः कथं तथाविधपर्षदि स्वयं प्रज्ञाप्य अप्रमाणयामीति जाताहंकारेण

तेन तथा न चक्रे, ततो गुरुभिः षण्मासीं यावद्राजसभायां वादमासूत्र्य कुत्रिकापणान्नोजीवयाचने तस्याऽप्राप्तौ चतुश्चत्वारिंशत्पृच्छाशतेन निर्लोठितः, कथमपि स्वाग्रहमत्यजन् गुरुभिः क्रुधा खेलमात्रप्रक्षेपेण शिरोमुंडनपूर्वकं संघबाह्यश्चक्रे, ततः षष्ठो निह्नवस्त्रैराशिकः क्रमेण वैशेषिकदर्शनं प्रकटितवानिति, यत्तु सूत्रे रोहगुप्त आर्यमहागिरिशिष्यः प्रोक्तः, उत्तराध्ययनवृत्तिस्थानांगवृत्त्यादौ तु श्रीगुप्ताचार्यशिष्यः प्रोक्तस्ततोऽस्माभिरपि तथैव लिखितं, तत्त्वं पुनर्बहुश्रुता विदंति ॥

आर्यरोहणः १ भद्रयशा. २ मेघ. ३ कामर्द्धि. ४ सुस्थितः ५ सुप्रतिबद्धः ६ रक्षितः ७ रोहगुप्त. ८ ऋषिगुप्त. ९ श्रीगुप्त. १० ब्रह्मा ११ सोम. १२ इति द्वादश गणधारिणः सुहस्तिशिष्याः ॥

पिअगथेत्ति, एकदा त्रिशतजिनभवनचतुःशतलौकिकप्रासादाष्टादशशतविप्रगृहषट्त्रिंशच्छतवणिग्गेहनवशतारामसप्तशतवापीद्विशतकूपसप्तशतसत्रागारविराजमाने अजमेरुनिकटवर्त्तिनि सुभटपालराजसंबंधिनि हर्षपुरे श्रीप्रियग्रंथसूरयोऽभ्येयुस्तत्र चान्यदा द्विजैर्यागे छागो हंतुमारेभे, तैः श्राद्धकरार्पितवासक्षेपे तं छागमागत्यांबिकयाधिष्ठितः, ततः स छागो नभसि भूत्वा वक्ति—हनिष्यत नु मां

हुत्यै । बध्नीताधातमाहृण ॥ युष्मद्भन्निर्दयः स्यां चेत् । तदा हन्मि क्षणेन वः ॥ १ ॥ यत्कृतं रक्षसां
ङ्गे । कुपितेन हनूमता ॥ तत्करोम्येव वः स्वस्थ–कृपा चेन्नांतरा नवेत् ॥ २ ॥ यावंति रोमकूपाणि ।
पशुगात्रेषु नारत ॥ तावद्रूपसहस्राणि । पच्यंते पशुघातकाः ॥ ३ ॥ यो दद्यात् कांचनं मेरुं । कृ-
त्स्नां चैव वसुंधरां ॥ एकस्य जीवितं दद्या–न्न च तुल्यं युधिष्ठिर ॥ ४ ॥ महतामपि दानानां ।
कालेन क्षीयते फलं ॥ नीतानयप्रदानस्य । क्षय एव न विद्यते ॥ ५ ॥ इत्यादि, कस्त्वं प्रकाशया-
स्मानं । तेनोक्तः पावकोऽस्म्यहं ॥ ममैनं वाहनं कस्मा–ज्जिघांसथ पशुं वृथा ॥ ६ ॥ इहास्ति श्रीप्रि-
यग्रंथः । सूरींद्रः समुपागतः ॥ तं पृच्छत शुचिं धर्मं । समाचरत शुद्धितः ॥७॥ यथा चक्री नरेंद्राणां ।
धानुष्काणां धनंजयः ॥ तथा धुरि स्थितः साधुः । स एकः सत्यवादिनां ॥ ७ ॥ ततस्ते तथा कृतवंत इति.

थेरे अज्जवइरेत्ति, तुंववनग्रामे सुनंदानिधानां नार्यां साधानां मुक्त्वा धनगिरिणा दीक्षा गृ-
हीता, सुनंदासुतस्तु स्वजन्मसमये एव पितुर्दीक्षां श्रुत्वा जातजातिस्मृतिर्मातुरुद्वेगाय सततं रुद-
न्नेवास्ते. ततो मात्रा षण्मासवया एव धनगिरेरर्पितस्तेन च गुरोः करे दत्तो महानारत्वाद् दत्तव-

जनामा पालनस्थ एवैकादशांगानि अध्यैष्ट, ततस्त्रिवार्षिकः सन् मात्रा राजसमक्ष विवादेऽनेकसुख-
भक्षिकादिभिर्लोभ्यमानोऽपि धनगिरिणार्पितं रजोहरणमेवाऽग्रहीत्, ततो मातापि प्रवव्राज, ततो-
ऽष्टवर्षोऽति एकदा तस्य पूर्वजन्मवयस्यैर्जृम्भकैरुज्जयिनीमार्गे वृष्टिनिवृत्तौ कूष्मांडभिक्षायां दीयमानायां
अनिमिषत्वादेवपिंडोऽयमकल्प्य इत्यग्रहणे तुष्टैर्वैक्रियलब्धिर्दत्ता, तथैव द्वितीयवेलायां घृतपूराग्रहणे
नभोगमनविद्या दत्ता, पश्च पाटलीपुरे धनश्रेष्ठिना दीयमानां धनकोटिसनाथां साध्वीभ्यो गुणानाकर्ण्य
वज्रमेव वृणोमीति कृताभिग्रहां रुक्मिणीनामकन्यां प्रतिबोध्य दीक्षयामास. अत्र कविः—मोहा-
ब्धिश्चुलुकी चक्रे । येन बालेन लीलया ॥ स्त्रीनदीस्नेहपूरस्तं । वज्रर्षिं प्लावयेत्कथं ॥ १ ॥ पश्चै-
कदा दुर्भिक्षे संघं पट्टे संस्थाप्य सुभिक्षां पुरीं नीतवान्, तत्र बौद्धेन राज्ञा जिनचैत्येषु पुष्पनि-
षेधः कृतः, अत्रापि किरणावलीदीपिकयोर्बौद्धराज्ञेति प्रयोगो लिखितस्तत्तर्धिन्त्यः, तदनु पर्युषणायां
श्राद्धैर्विज्ञप्तो व्योमविद्यया माहेश्वरीपुर्यां पितृमित्रमारामिकं पुष्पप्रगुणीकरणार्थमादिश्य स्वयं हि-
मवद्गौ श्रीदेवीगृहे गतस्ततश्च श्रिया दत्तं महापद्मं हुताशनवनाद्विंशतिलक्षपुष्पाणि च लात्वा जृम्भ-

कामरविकुर्वितविमानस्थः समहोत्सवमागत्य जिनशासनं प्रभावयन् राजानमपि श्रावकं चक्रे, अन्यदा स श्रीवज्रस्वामी कफोद्रेके भोजनादनुग्रहणाय कर्णे स्थापितायाः शुंठ्याः प्रतिक्रमणवेलायां पाते प्रमादेन स्वमृत्युं आसन्नं विचिंत्य द्वादशवर्षदुर्भिक्षप्रवेशे स्वशिष्यं श्रीवज्रसेनाभिधं–लक्षमूल्यौदनात् भिक्षां । यत्राह्नि त्वमवाप्नुयाः ॥ सुभिक्षमवबुध्येथा–स्तदुत्तरे दिनोषसि ॥ १ ॥ इत्युक्त्वा अन्यत्र विजहार, स्वयं च स्वसमीपस्थसाधुभिस्सह रथावर्त्ते गिरौ गृहीतानशनो दिवं प्राप, तत्र च संहननचतुष्कं दशमं पूर्वं च व्युच्छिन्नं, यत्तु किरणावलीकारेण तुर्यं संहननं व्युच्छिन्नं कथितमस्ति तच्चिंत्यं, तदनु च श्रीवज्रसेनः सोपारके जिनदत्तश्राद्धगृहे तत्पत्न्या ईश्वरीनाम्न्या लक्षमूल्यमन्नं पक्त्वा प्रक्षिप्यमाणं विषं गुरुवचः प्रोच्य न्यवारयत्, प्रभाते पोतैः प्रचुरधान्यागमनात् संजाते सुभिक्षे जिनदत्तः सभार्यो नागेंद्र १ चंद्र २ निर्वृत्ति ३ विद्याधरा ४ ख्यसुतपरिवृतो दीक्षां जग्राह, ततस्तेभ्यः स्वनाम्ना चतस्रः शाखा प्रवृत्ताः.

' वंभदीविया साहा निग्गयाइत्ति ' आभीरदेशेऽचलपुरासन्ने कन्नावेन्नानद्योर्मध्ये ब्रह्मद्वीपे

पंचशती तापसानां अभूत्, तेष्वेकः पादलेपेन भूमाविव जलोपरि गच्छन् जलाऽस्पृष्टपादो बेन्नामुत्तीर्य पारणार्थं याति, ततोऽहो एतस्य तपःशक्तिर्जैनेषु न कोऽपि प्रभावीति श्रुत्वा श्राद्धैः श्रीवज्रस्वामिमातुलार्यसमितसूरय आहूतास्तैरूचे स्तोकमिदं पादलेपशक्तिरीति, श्राद्धैस्ते स्वगृहे पादपादुकाधावनपुरस्सरं जोजितास्ततस्ते सहैव श्राद्धा नदीमगुः, स च तापसो धार्ष्ट्यमालंब्य नद्यां प्रविशन्नेव ब्रुडितु लग्नस्ततस्तेषां अपभ्राजना, इतश्च तत्रार्यसमितसूरयोऽभ्येत्य लोकबोधनाय योगचूर्णं क्षिप्त्वा बन्नुवेन्ने परं पार यास्याम इत्युक्ते कुले मिलिते, बभूव महाश्चर्यं, ततः सूरयस्तापसाश्रमे गत्वा तान् प्रतिबोध्य प्राव्राजयन्, ततस्तेभ्यो ब्रह्मद्वीपिका शाखा निर्गता, तत्रच–महागिरिः ( १ ) सुहस्ती च २ । सुरिः श्रीगुणसुंदर. ( ३ ) ॥ श्यामार्यः ( ४ ) स्कंदिलाचार्यो ( ५ ) । रेवतीमित्र सूरिराट् ( ६ ) ॥ १ ॥ श्रीधर्मो ( ७ ) भद्रगुप्तश्च ( ८ ) । श्रीगुप्तो ( ९ ) वज्रसूरिराट् ( १०, ॥ युगप्रधानप्रवरा । दशैते दशपूर्विणः ॥ २ ॥

'थेरे अज्जरक्खेत्ति' अहो बत किरणावलीकारस्य बहुश्रुतप्रसिद्धिभाजोऽपि अनाभोगविलसितं,

यतो येऽमी तोसलिपुत्राचार्यशिष्याः श्रीवज्रस्वामिपार्श्वेऽधीतसाधिकनवपूर्वा नाम्ना च श्रीआर्यरक्षितास्ते भिन्ना एते च श्रीवज्रस्वामिभ्यः शिष्यप्रशिष्यादिगणनया नवमस्थानभाविनो नाम्नाचार्यरक्षा इत्येवमनयोः आर्यरक्षितार्यरक्षयोः स्फुटं भेदं विस्मृत्य आर्यरक्षस्थाने आर्यरक्षितव्यतिकरं लिखितवान् ॥

' वंदामि फग्गुमित्त ' मित्यादिगाथाचतुर्दशकं, तत्र गद्योक्तोऽर्थः पुनः पद्यैः संगृहीत इति न पुनरुक्तशंका ॥

' गिम्हाणंति ' ग्रीष्मस्य प्रथममासे चैत्रे ' कालगयंति ' दिवं गतं, ' सुक्कपक्खत्ति ' शुक्लपक्षे ॥ ६ ॥

' वरमुत्तमंति ' वरा श्रेष्ठा मा लक्ष्मीस्तस्या उत्तमं छत्रं वहति यस्य शिरसि धारयति देवः पूर्वसंगतिकः कश्चित् ॥ ७ ॥

' मिउमद्दवसंपन्नंति ' मृदुना मधुरेण मार्दवेन मायात्यागेन संपन्नं ॥ १० ॥

॥ इति स्थविरावलीसूत्रं संपूर्णं ॥

॥ इति जगद्गुरुभट्टारकश्रीहीरविजयसूरीश्वरशिष्यरत्नमहोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्यायश्रीविनयविजयगणिविरचितायां कल्पसुबोधिकायां अष्टमः क्षणः, समाप्तश्चाय स्थाविरावलीनामा द्वितीयोऽधिकारः, ग्रथाग्रंथ ( ४३० ) अष्टानामपि व्याख्यानानां ग्रंथाग्रंथ ( ५६५५ )

॥ श्रीरस्तु ॥

॥ अथ नवमं व्याख्यानं प्रारभ्यते ॥

॥ अथ सामाचारीलक्षणं तृतीयं वाच्यं वस्तु प्रथमं पर्युषणा कदा विधेयेत्याह–तस्मिन् काले तस्मिन् समये श्रमणो भगवान् महावीरः वर्षाकालस्य विंशतिदिनयुक्ते मासे व्यतिक्रांते चतुर्मासके पर्युषणामकरोत्. तत् केन अर्थेन कारणेन हे पूज्य एवं उच्यते ? श्रमणो भगवान् महावीरः वर्षा-

कालस्य विंशतिदिनयुक्ते मासे व्यतिक्रांते सति चतुर्मासके पर्युषणामकरोत्, इति शिष्येण प्रश्ने कृते गुरुः उत्तरं दातुं सूत्रमाह—यतः कारणात् प्रायेण अगारिणां गृहस्थानां अगाराणि गृहाणि कटयुक्तानि, धवलितानि, तृणादिभिराछादितानि, गोमयादिना लिप्तानि, वृत्तिकरणादिना गुप्तानि, विषमभूमिभंगाद् घृष्टानि, पाषाणखंडेन घृष्ट्वा कोमलीकृतानि, सौगंध्यर्थंधूपैर्वासितानि, कृतप्रणाली-रूपजलमार्गाणि, खनितखालानि एवंविधानि, आत्मार्थे आत्मनिमित्तं परिणामितानि अचित्तीकृ-तानि इदृशानि यतो गृहाणि भवंति, तेनार्थेन तेन कारणेन हे शिष्या एवं उच्यते, श्रमणो भगवान् महावीरः वर्षाकालस्य विंशतिदिनयुक्ते मासे व्यतिक्रांते चतुर्मासके पर्युषणामकरोत्. तथा गणधरा अपि वर्षाकालस्य विंशतिदिनयुक्ते मासे व्यतिक्रांते चतुर्मासके पर्युषणां चक्रुः ॥ ३ ॥

यथा गणधराः वर्षाकालस्य यावत् पर्युषणां चक्रुः, तथा गणधरशिष्याः वर्षाकालस्य यावत् पर्युषणां चक्रुः ॥ ४ ॥ यथा गणधरशिष्याः वर्षाकालस्य यावत् पर्युषणां चक्रुः, तथा स्थविरा अपि वर्षाकालस्य यावत् पषर्युणां चक्रुः ॥ ५॥ था यस्थिविराः वर्षाकालस्य यावत् पर्युषणां चक्रुः, तथा

ये इमे अद्यकालीना आर्यतया वा व्रतस्थविरत्वेन वर्त्तमानाः श्रमणा निर्ग्रंथा विहरंति, ते अपिच वर्षाकालस्य यावत् पर्युषणां कुर्वंति ॥ ६ ॥ यथा ये इमे अद्यतनकाले श्रमणा निर्ग्रंथा अपि वर्षाकालस्य विंशतिदिनयुते मासे व्यतिक्रांते चतुर्मासके पर्युषणां कुर्वंति, तथा अस्माकमपि आचार्या उपाध्यायाश्च वर्षाकालस्य यावत् पर्युषणां कुर्वंति ॥ ७ ॥ यथा अस्माकं आचार्या उपाध्यायाश्च यावत् पर्युषणां कुर्वंति, तथा वयमपि वर्षाकालस्य विंशतिदिनैश्च युते मासे व्यतिक्रांते चतुर्मासके पर्युषणां कुर्म. अर्वागपि तत् पर्युषणाकरण कल्पते, परं न कल्पते तां रात्रिं भाद्रशुक्लपंचमीरात्रिं अतिक्रमयितु ॥ ८ ॥

तत्र परि सामस्त्येन उषणं वसनं पर्युषणा, सा द्वेधा गृहस्थज्ञाता, गृहस्थैः अज्ञाता च, तत्र गृहस्थै· अज्ञाता, यस्यां वर्षायोग्यपीठफलकादौ प्राप्ते कल्पोक्तद्रव्यक्षेत्रकालभावस्थापना क्रियते, सा आषाढपूर्णिमायां, योग्यक्षेत्राऽभावे तु पंच पंच दिनवृद्ध्या दशपर्वतिथि क्रमेण यावत् श्रावणकृष्णपंचदश्यां एव । गृहिज्ञाता तु द्वेधा, सांवत्सरिककृत्यविशिष्टा गृहिज्ञातमात्रा च, तत्र सांवत्स·

रिककृत्यानि–संवत्सरप्रतिक्रांति–लुंचनं चाष्टमं तपः ॥ सर्वार्हद्भक्तिपूजा च । संघस्य क्षामणं मिथः ॥ १ ॥ एतत्कृत्यविशिष्टा च भाद्रसितपंचम्यां एव, कालिकाचार्यादेशाच्च चतुर्थ्यामपि, केवलं गृहिज्ञाता तु सा यत् अभिवर्द्धिते वर्षे चतुर्मासकदिनादारभ्य विंशत्या दिनैर्वयमत्र स्थिताः स्मेति पृच्छतां गृहस्थानां पुरो वदंति, तदपि जैनटिप्पनकानुसारेण, यतस्तत्र युगमध्ये पौषो युगांते चाषाढो वर्द्धते, नान्ये मासास्तट्टिपनकं तु अधुना सम्यग् न ज्ञायते, ततः पंचाशतैव दिनैः पर्युषणा युक्तेति वृद्धाः । अत्र कश्चिदाह–ननु श्रावणवृद्धौ श्रावणसितचतुर्थ्यामेव पर्युषणा युक्ता, न तु भाद्रसितचतुर्थ्यां दिनानां अशीत्यापत्तेः, ' वासाणं सवीसइराए मासे विइक्कंते ' इति वचनबाधा स्यादिति चेन्मैवं, अहो देवानुप्रिया एवं आश्विनवृद्धौ चतुर्मासककृत्यं आश्विनसितचतुर्दश्यां कर्त्तव्यं, तस्मात् कार्त्तिकसितचतुर्दश्यां करणे तु दिनानां शतापत्त्याः, ' समणे भगवं महावीरे वासाणं सवीसइराए मासे विइक्कंते सित्तरिराइंदिएहिं सेसेहिं ' इति समवायांगवचनबाधा स्यात्, न च वाच्यं चतुर्मासिकानि हि आषाढादिमासप्रतिबद्धानि; तस्मात् कार्त्तिकचतुर्मासकं कार्त्तिकसितचतुर्दश्यामेव युक्तं, दिनगणनायां

त्वधिक' मास कालचूलेत्यविवक्षणाद्दिनानां सप्ततिरेवेति कुतः समवायांगवचनबाधा इति, यतो यथा चतुर्मासकानि आषाढादिमासप्रतिबद्धानि तथा पर्युषणापि भाद्रपदमासप्रतिबद्धा तत्रैव कर्त्तव्या, दिनगणनायां अधिकमासः कालचूलेत्यविवक्षणाद् दिनानां पंचाशदेव, कुतोऽशीतिवार्त्तापि? न च भाद्रपदप्रतिबद्धत्वं पर्युषणाया अयुक्तं, बहुष्वागमेषु तथा प्रतिपादनात्, तथाहि–

अन्नया पज्जोसवणादिवसे आगए अज्जकालगेण सालिवाहणो भणिओ भद्दवयजुण्हपंचमीए पज्जोसवणा, इत्यादि पर्युषणाकल्पचूर्णौ, तथा तत्थ य सालिवाहणो राया, सो अ सावगो, सो अ कालगज्ज त इतं सोऊण निग्गओ अभिमुहो समणसंघो अ, महाविभूइए पविट्ठो कालगज्जो, पविट्ठेहिं अ भणिअं भद्दवयसुद्धपंचमीए पज्जोसविज्जइ, समणसंघेण पडिवण्णं, ताहे रण्णा भणिअं, तद्दिवसं मम लोगाणुवत्तीए इंदो अणुजाएअव्वो होहित्ति साहुचेइए ण पज्जुवासिस्संतो छट्ठीए पज्जोसवणा किज्जउ, आयरिएहिं भणिअं, न वट्टति अइक्कमिउं, ताहे रण्णा भणिअं, अणागयचउत्थीए पज्जोसविज्जति, आयरिएहिं भणिअं एवं भवउ, ताहे चउत्थीए पज्जोसवितं, एवं जुगप्पहाणेहिं

कारणे चउत्थी पवत्तिआ, सा चेवाणुमया सव्वसाहूणमित्यादिश्रीनिशीथचूर्णिदशमोद्देशके, एवं यत्र कुत्रापि पर्युषणानिरूपणं तत्र भाद्रपदविशेषितमेव, न तु काप्यागमे ' भद्दवयसुद्धपंचमीए पज्जोसविज्जइत्ति ' पाठवत् ' अभिवड्ढिअ वरिसे सावणसुद्धपंचमीए पज्जोसविज्जइत्ति ' पाठ उपलभ्यते, ततः कार्त्तिकमासप्रतिबद्धचतुर्मासककृत्यकरणे यथा नाधिकमासः प्रमाणं, तथा भाद्रमासप्रतिबद्धपर्युषणाकरणेऽपि नाधिकमासः प्रमाणमिति त्यज कदाग्रहं, किं चाधिकमासः किं काकेन भक्षितः, किं वा तस्मिन् मासे पापं न लगति ? उत बुभुक्षा न लगति ? इत्याद्युपहसन् मा स्वकीयं ग्रहिलत्वं प्रकटय ? यतस्त्वमपि अधिकमासे सति त्रयोदशसु मासेषु जातेष्वपि सांवत्सरिकक्षामणे ' बारसण्हं मासाणं ' इत्यादि वदन्नधिकमासं नांगीकरोषि, एवं चतुर्मासिकक्षामणेऽधिकमाससद्भावेऽपि ' चउण्हं मासाणं ' मित्यादि, पाक्षिकक्षामणेऽधिकतिथिसंभवेऽपि ' पन्नरसण्हं दिवसाणं ' मिति ब्रूषे, तथा नवकल्पविहारादिलोकोत्तरकार्येषु ' आसाढे मासे दुपयाइ ' त्यादि, सूर्यचारेऽपि तथैव, लोकेऽपि दीपालिकाक्षततृतीयादिपर्वसु धनकलांतरादिषु च अधिकमासो न गण्यते, तदपि त्वं जाना-

सि, अन्यच्च सर्वाणि शुभकार्याणि अभिवर्द्धिते मासे नपुंसक इति कृत्वा ज्योतिःशास्त्रे निषिद्धानि ॥ अपरं आस्तामन्योऽभिवर्द्धित., भाद्रपदवृद्धौ प्रथमो भाद्रपदोऽपि अप्रमाणमेव, यथा चतुर्दशीवृद्धौ प्रथमां चतुर्दशीमवगणय्य द्वितीयायां चतुर्दश्यां पाक्षिककृत्यं क्रियते, तथात्रापि, एवं तर्हि अप्र मासे मासे देवपूजामुनिदानावश्यकादिकार्यमपि न कार्यं इत्यपि वक्तुं माधरोष्ठ चपलय? यतो यानि हि दिनप्रतिबद्धानि देवपूजामुनिदानादिकृत्यानि तानि तु प्रतिदिनं कर्त्तव्यान्येव, यानि च सन्ध्यादिसमयप्रतिबद्धानि आवश्यकादीनि तान्यपि च कंचन संध्यादिसमय प्राप्य कर्त्तव्यान्येव, यानि तु भाद्रपदादिमासप्रतिबद्धानि तानि तु तद्द्वयसंभवे कस्मिन् क्रियते? इति विचारे प्रथमं अवगणय्य द्वितीये क्रियते इति सम्यग् विचारय? ॥

तथा च पश्य? अचेतना वनस्पतयोऽधिकमासं नांगीकुर्वंते, येनाधिकमासं प्रथमं परित्यज्य द्वितीय एव मासे पुष्पति, यदुक्तं आवश्यकनिर्युक्तौ—जइ फुल्ला कणिआरया। चूअगणा अहिमा- सयंमि घुट्ठंमि ॥ तुह न खमं फुल्लेउं। जइपचंता करिंति डमराइं ॥ १ ॥ तथा च कश्चित् ' अभिव-

ट्टिअंमि वीसइअरेसु सवीसइमासे ' इति वचनबलेन मासाभिवृद्धौ विंशत्या दिनैरेव लोचादिकृत्यविशिष्टां पर्युषणां करोति, तदप्ययुक्तं, येन ' अभिवट्टिअंमि वीसा ' इति वचनं गृहिज्ञातमात्रापेक्षया, अन्यथा ' आसाढमासिए पज्जोसविंति एस उस्सग्गो, सेसं कालं पज्जोसविंताणं अववाउत्ति ' श्रीनिशीथचूर्णिदशमोद्देशकवचनादाषाढपूर्णिमायामेव लोचादिकृत्यविशिष्टा पर्युषणा कर्त्तव्या स्यात्, इत्यलं प्रसंगेन ॥ कल्पोक्ता द्रव्य १ क्षेत्र २ काल ३ भाव ४ स्थापना चैवं–द्रव्यस्थापना तृणडगलछारमल्लकादीनां परिभोगः, सचित्तादीनां च परिहारः, तत्र सचित्तद्रव्यं शैक्षो न प्रव्राज्यते, अतिश्रद्धं राजानं राजामात्यं च विना, अचित्तद्रव्यं वस्त्रादि न गृह्यते, मिश्रद्रव्यं सोपधिकः शिष्यः ॥ क्षेत्रस्थापना–सक्रोशयोजनं ग्लानवैद्यौषधादिकारणेन चत्वारि पंच वा योजनानि ॥ कालस्थापना चत्वारो मासाः ॥ भावस्थापना क्रोधादीनां विवेक ईर्यादिसमितिषु चोपयोगः, इति ॥ ८ ॥

वर्षावासं चतुर्मासकं पर्युषितानां स्थितानां कल्पते निर्ग्रंथानां साधूनां वा निर्ग्रंथीनां साध्वीनां वा सर्वतश्चतसृषु दिक्षु समंतात् विदिक्षु च सक्रोशं योजनं अवग्रहं, अवगृह्य अथेत्यव्ययः, लंदशब्देन काल-

उच्यते, तत्र यावता कालेनार्द्रः करः शुष्यति तावत्कालो जघन्यं लंदं पंच अहोरात्रा उत्कृष्टं लंद, तन्मध्ये मध्यमं लद, लदमपि कालं यावत् स्तोककालमपि अवग्रहे स्थातु कल्पते, न तु अवग्रहाद् बहि., अपिशब्दात् अलंदमपि बहुकालमपि यावत् षण्मासानेकत्रावग्रहे स्थातुं कल्पते; न अवग्रहाद् बहि., गजेंद्रपदादिगिरेर्मेखलाग्रामस्थितानां षट्सु दिक्षु उपाश्रयात् सार्द्धकोशद्वय गमनागमने पंचक्रोशावग्रहः, यत्तु विदिक्षु इत्युक्तं तद्व्यवहारिकविदिगपेक्षया, नैश्चयिकविदिशां एकप्रदेशात्मकत्वेन तत्र गमनाऽसंभवात्, अटवीजलादिना व्याघातेषु त्रिदिक्को द्विदिक् एकदिको वा अवग्रहो ज्ञाव्यः ॥ ९ ॥ वर्षावास चतुर्मासक पर्युषितानां स्थितानां कल्पते, निर्ग्रंथानां निर्ग्रंथीनां वा सर्वतश्चतसृषु दिक्षु समंतात विदिक्षु च सक्रोश योजनं भिक्षाचर्यायां गंतु प्रतिनिवर्तितुं ॥ १० ॥

यत्र नदी नित्योदका नित्य प्रचुरजला, नित्यस्यंदना नित्यस्रवणशीला सततवाहिनीत्यर्थः, नैव तत्र कल्पते सर्वासु दिक्षु विदिक्षु च सक्रोश योजनं भिक्षाचर्य्यायां गतुं प्रतिनिवर्त्तितु ॥ ११ ॥ यथा ऐरावती नाम्नी नदी कुणालायां पुर्यां सदा द्विकोशवाहिनी तादृशीं नदीं लघयितुं कल्प्या,

स्तोकजलत्वात् यतेः, यत्र एवं कर्त्तुं शक्नुयात्, किं तदित्याह—एकं चरणं जले कृत्वा जलांतः प्रक्षिप्य, एकं चरणं स्थले कृत्वा, जलादुपरि आकाशे कृत्वा, अनया रीत्या गंतुं शक्नुयात्, एवं सति कल्पते सर्वतः समंतात् सक्रोशं योजनं गंतुं प्रतिनिवर्त्तितुं ॥ १२ ॥ पूर्वोक्तरीत्या नैव यत्र गंतुं शक्नुयात्, एवं तस्य साधोः नो कल्पते सर्वतः समंतात् गंतुं प्रतिनिवर्त्तितुं, यत्र च एवं कर्त्तुं न शक्नुयाज्जलं विलोड्य गमनं स्यात्, तत्र गंतुं ना कल्पते; यतो जंघार्द्धं यावदुदकं दकसंघट्टो, नाभियावल्लेपो, नाभेरुपरि लेपोपरि, तत्र शेषकाले त्रिभिर्दकसंघट्टे सति क्षेत्रं नोपहन्यते, तत्र गंतुं कल्पते, इति भावः, वर्षाकाले च सप्तभिः क्षेत्रं नोपहन्यते, चतुर्थेऽष्टमे च दगसंघट्टे सति क्षेत्रं उपहन्यते एव, लेपस्तु एकोऽपि क्षेत्रं उपहंति, नाभियावज्जलसद्भावे तु गंतुं न कल्पते एव, किं पुनर्लेपोपरि नाभेरुपरि जलसद्भावे ? ॥ १३ ॥ चतुर्मासकं स्थितानां केषांचित् साधूनां गुरुभिः एवं प्रागुक्तं भवति ग्लानायामुकं वस्तु दापयेः, हे भदंत, हे शिष्य तदा तस्य साधोः कल्पते दापयितुं, परं नो तस्य कल्पते स्वयं प्रग्रहीतुं ॥ १४ ॥

चतुर्मासकं स्थितानां केषांचित् साधूनां, गुरुभिः एवं प्रागुक्तं भवति स्वय प्रतिगृह्णीयाः, हे शिष्य ! तदा तस्य कल्पते परिगृहीतु, पर नो तस्य कल्पते दापयितु, यद्येवमुक्त भवति 'यत् त्वं स्वय प्रतिगृह्णीयाः, ग्लानाय अन्यो दास्यति तदा स्वय प्रतिगृहीतुं कल्पते, न तु दातुं इत्यर्थः ॥१५॥ चतुर्मासिक स्थितानां केषांचित् साधूनां गुरुभिः एवं प्रागुक्तं भवति' दापयेः हे शिष्य ! स्वयं प्रतिगृह्णीयाः हे शिष्य, तदा तस्य कल्पते दापयितुमपि प्रतिगृहीतुमपि, यदि च दद्या प्रतिगृह्णीयाश्चेत्युक्तं भवति,तदा दातुं प्रतिगृहीतु चोभयमपि कल्पते।१६। चतुर्मासकं स्थितानां नो कल्पते साधूनां साध्वीनां, कीदृशानां ? हृष्टानां तारुण्येन समर्थाना, तरुणा अपि केचिद्रोगिणो निर्बलशरीराश्च भवंति, अत उक्त आरोग्याना बलवच्छरीराणां इदृशाना साधूनां इमा वक्ष्यमाणा नवरसप्रधाना विकृतयोऽभीक्ष्ण वारंवारं आहारयितुं न कल्पते, तद्यथा—दुग्धं १ दधि २ म्रक्षणं ३ घृतं ४ तैलं ५ गुडः ६ मधु ७ मद्यं ८ मांस ९ अभीक्ष्णग्रहणात् कारणे कल्पंतेऽपि, नव ग्रहणात् कदाचित् पक्वान्नं गृह्यतेऽपि ॥

तत्र विकृतयो द्वेधा, सांचयिका असांचयिकाश्च, तत्राऽसांचयिका बहुकालं रक्षितुमशक्या

दुग्धदधिपक्वान्नाख्यां ग्लानस्त्वे गुरुबालाद्युपग्रहार्थं श्राद्धनिमंत्रणाद्या ग्राह्याः, सांचयिकास्तु घृततैल-गुडाख्यास्तिस्रस्ताश्च प्रतिलंजयन् गृही वाच्यो महान् कालोऽस्ति,ततो ग्लानानादिनिमित्तं गृहीष्यामः, स वदेत् गृह्णीत चतुर्मासीं यावत् प्रभूताः संति, ततो ग्राह्या, बालादीनां च देया, न तरुणानां, यद्यपि मधु १ मद्य २ मांस ३ नवनीत ४ वर्जनं यावज्जीवं अस्त्येव, तथापि अत्यंतापवाददशायां बाह्यपरिभोगाद्यर्थं कदाचिद्ग्रहणेऽपि चतुर्मास्यां सर्वथा निषेधः ॥ १७ ॥ चतुर्मासकं स्थितेः, अस्ति एतद् एकेषां वैयावृत्त्यकरादीनां एवमुक्तपूर्वं भवति गुरुं प्रतीति शेषः, वैयावृत्त्यकरैर्गुरवे एवं उक्तं भवतीत्यर्थः, हे भदंत भगवन्! अर्थो वर्त्तते ग्लानस्य विकृत्या इति वैयावृत्त्यकरेण प्रश्ने कृते स गुरुर्वदेत् ग्लानस्य अर्थो वर्त्तते, ततः स ग्लानः पृष्टव्यः, कियता विकृतिजातेन क्षीरादिना तवार्थः, तेन च ग्लानेन स्वप्रमाणे उक्ते स वैयावृत्त्यकरो गुरोरग्रे समागत्य ब्रूयात्, एतावतार्थो ग्लानस्य, ततो गुरुराह–यत् स ग्लानः प्रमाणं वदति तत्प्रमाणेन से इति तद्विकृतिजातं ग्राह्यं त्वया, ततः स च वैयावृत्त्यकरो विज्ञापयेत्, कोऽर्थो गृहस्थपार्श्वात् याचेत, विज्ञप्तिधातुरत्र यांचायां, स वैयावृत्त्यकरो

याचमानो लभेत तद्वस्तु क्षीरादि, अथ तद्वस्तु प्रमाणप्राप्तं पर्याप्तं जातं, ततश्च तत्र ' होउत्ति '
भवतु इतिपदं साधुप्रसिद्धइष्टमितिशब्दस्यार्थे, ' अलाहिचि ' सृतं इत्यर्थे, इति पादद्वय गृहस्थं प्रति
वक्तव्य स्यात्, ततो गृही ब्रूते, अथ किमाहुर्भदंता., कुतो भवंतः सृतमिति ब्रूवते इत्यर्थः, तत· साधुराह
ग्लानस्य एतावता एव अर्थोऽस्तीति, तत· स्यात्, कदाचित् णं इति वाक्यालङ्कृतौ, एवं वदंतं साधु
प्रति परो गृहस्थो वदेत्, यत् हे आर्य ! साधो ! प्रतिगृहाण ? पश्चात् ग्लानभोजनानंतरं यदधिकं
तत्वं भोक्ष्यसे भुंजीथाः पक्वान्नादिक, पास्यसि पिबे· क्षीरादिकं, कचित् ' पाहिसित्ति ' स्थाने न च·
' दाहिसित्ति ' दृश्यते, तदा तु स्वय भुंजीथा·, अन्येभ्यो वा दद्याः, एवं तेनोक्ते तत् कल्पते अधिकं प्रति-
गृहीतुं पुनर्ग्लाननिश्रया गार्घ्यात् स्वय गृहीतु, ग्लानार्थं याचितं मंडल्यां नानेयमित्यर्थः ॥ १८ ॥

चतुर्मासकं स्थितानां अस्त्येतत्, णं इति प्राग्वत्, स्थविराणां तथा प्रकाराणि अजुगुप्सितानि
कुलानि गृहाणि, किं विशिष्टानि ? तैरन्यैर्वा श्रावकीकृतानि, प्रीतिकराणि, प्रीतौ दाने वा स्थैर्यवंति,
निश्चितं अत्र लप्स्येऽहमिति विश्वासो येषु तानि वैश्वासिकानि, येषां यतिप्रवेशः सम्मतो भवति



तानि सम्मतानि, बह्वोऽपि साधवः सम्मता येषां, अथवा बहूनां गृहमनुष्याणां साधवः सम्मता येषु तानि बहुमतानि, अनुमतानि दानं अनुज्ञातानि, अथवा अणुरपि क्षुल्लकोऽपि मतो येषु सर्वसाधुसाधारणत्वान्न तु मुखं दृष्ट्वा तिलकं कुर्वंतीति अनुमतानि अणुमतानि वा भवंति, तत्र तेषु गृहेषु से तस्य साधोः याच्यं वस्तु अदृष्ट्वा इति वक्तुं न कल्पते, यथा हे आयुष्मन्! इदं वा वस्तु अस्ति? इत्यदृष्टं वस्तु पृष्टुं न कल्पते इत्यर्थः. तत् कुतो भगवन्, इति शिष्यप्रश्ने गुरुराह—यतस्तथाविधः श्रद्धावान् गृही मूल्येन गृह्णीत, यदि च मूल्येनापि न प्राप्नोति तदा स श्रद्धातिशयेन चौर्यमपि कुर्यात्, कृपणगृहे तु अदृष्ट्वापि याचने न दोषः ॥ १ए ॥

चतुर्मासकं स्थितस्य नित्यमेकाशनकारिणः भिक्षोः कल्पते एकस्मिन् गोचरचर्याकाले गाथापतेर्गृहस्थस्य कुलं गृहं, भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा कल्पते, न तु द्वितीयवारं, परं णकारो वाक्यादौ अलंकारार्थः, अन्यत्र आचार्यादिवैयावृत्यकरेभ्यस्तान् वर्जयित्वेत्यर्थः, ते तु यदि एकवारं भुक्तेन वैयावृत्यं कर्तुं न शक्नुवंति, तदा द्विरपि भुंजते, तपसो हि वैयावृत्यं गयरी

इति, आचार्यवैयावृत्त्यकरान् वा, उपाध्यायवैयावृत्त्यकरान् वा, तपस्विवैयावृत्त्यकरान् वा, ग्लानवैयावृत्त्यकरान् वा, यावत् व्यजनानि बस्तिकूर्चकक्षादिरोमाणि न जातानि तावत् क्षुल्लकक्षुल्लिकयोरपि द्विर्भुंजानयोर्न दोषः, यद्वा वैयावृत्त्यमस्यास्तीति वैयावृत्त्यकर इत्यर्थः, आचार्यश्च वैयावृत्त्यश्च आचार्यवैयावृत्त्यौ, एवं उपाध्यायादिष्वपि, ततश्च आचार्यउपाध्यायतपस्विग्लानक्षुल्लकानां तद्वैयावृत्त्यकराणां च द्विर्भोजनेऽपि न दोष इत्यर्थो जातः ॥ २० ॥

चतुर्मासकं स्थितस्य एकांतरोपवासिन साधोरयमेतावान् विशेषो यत् स प्रातर्निष्क्रम्य गोचरचर्यार्थं प्रथममेव विकटं प्रासुकाहारं भुक्त्वा, तक्रादिक पीत्वा, पात्र संलिख्य निर्लेपीकृत्य, संप्रमृज्य प्रक्षाल्य, स यदि संस्तरेन्निर्वहेत्तर्हि तेनैव भोजनेन तस्मिन् दिने, कल्पते पर्युषितु स्थातुं अथ यदि न संस्तरेत् स्तोकत्वात् तदा तस्य साधोः कल्पते द्वितीयवार, गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितु वा प्रवेष्टुं वा ॥ २१ ॥ चतुर्मासकं स्थितस्य नित्य षष्ठकारिणो भिक्षोः कल्पेते द्वौ गोचरकालौ गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितु वा प्रवेष्टुं वा ॥ २२ ॥ चतुर्मासकं स्थितस्य नित्यं अ-

ष्टमकारिणो भिक्षोः कल्पंते त्रयो गोचरकाला गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा ॥ २३ ॥

चतुर्मासिकं स्थितस्य नित्यं अष्टमाडुपरि तपः कारिणो भिक्षोः सर्वेऽपि गोचरकाला गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा, यदा इच्छा भवति तदा भिक्षते, न तु प्रातर्गृहीतमेव धारयेत्, संचयजीवसंसक्तिसर्पाघ्राणादिदोषसंभवात् ॥ २४॥ एवमाहारविधिमुक्त्वा पानकविधिमाह—

चतुर्मासिकं स्थितस्य नित्यं एकाशनकारिणो भिक्षोः कल्पंते सर्वाणि पानकानि प्रतिग्रहीतुं, सर्वाणि च आचारांगोक्तानि एकविंशतिः, अत्र वक्ष्यमाणानि नव वा, तत्राचारांगोक्तानि इमानि—उस्सेइम १ संसेइम २ तंदुल ३ तुस ४ तिल ५ जवोदगा ६ यामं ७ सोवीरं ८ सुद्धवियडं ९ अंबय १० अंबाडग ११ कविट्ठं १२ मउलिंग १३ दक्खं १४ दाडिम १५ खज्जूरं १६ नालिकेर १७ कयर १८ बोरजलं १९ आमलगं २० चिंचापाणगाइं २१ पढमंगभणिआइं ॥ २ ॥ एषु पूर्वाणि नव तु अत्रोक्तानि; चतुर्मासिकं स्थितस्य एकांतरोपवासकारिणो भिक्षोः कल्पंते त्रीणि पानकानि प्रति-

ग्रहीतु तद्यथा—उत्स्वेदिमं पिष्टादिजृतहस्तादिधावनजलं, संस्वेदिमं यत्पर्णाद्युत्काल्य शीतोदकेन सिंच्यते तज्जलं, तंडुलधावनजल ॥ चतुर्मासक स्थितस्य नित्यं षष्टकारिणो भिक्षो· कल्पंते त्रीणि पानकानि प्रतिग्रहीतुं, तद्यथा—तिलोदकं तिलधावनजलं, तुषोदक व्रीह्यादितुषधावनजलं, यवोदकं यवधावनजलं ॥ चतुर्मासकं स्थितस्य नित्य अष्टमकारिणो भिक्षो· कल्पते त्रीणि पानकानि प्रतिग्रहीतुं, तद्यथा—आयामकोऽवश्रावणं, सौवीरं कांजिक, शुद्धविकट उष्णोदक॥ चतुर्मासक स्थितस्य अष्टमादुपरि तपःकारिणो भिक्षोः कल्पते एकं उष्णोदक प्रतिग्रहीतु, तदपि सिक्थुरहितं, नैव सिक्थुसहित ॥ चतुर्मासक स्थितस्य भक्तप्रत्याख्यानकस्य अनशनकारिणो भिक्षोः कल्पते एकं उष्णोदकं प्रतिग्रहीतु, तदपि सिक्थुरहितं, नैव सिक्थुसहितं, तदपि परिपूतं गलितं, नैव अगलितं, तृणादिलगनात्, तदपि मानोपेतं, नैव अपरिमितं, तदपि किंचिदूनं नैव बहुन्यूनं, तथा तृष्णाऽनुपशमात् ॥ २५ ॥

चतुर्मासकं स्थितस्य दत्तिसंख्याकारिणो भिक्षोः कल्पते पंच दत्तयो भोजनस्य प्रतिग्रहीतु,

पंच पानकस्य, अथवा चतस्रो भोजनस्य, पंच पानकस्य, अथवा पंच भोजनस्य, चतस्रः पानकस्य, तत्र दत्तिशब्देन अल्पं बहु वा यदेकवारेण दीयते तदुच्यते, इत्याह—तत्र एका दत्तिः लवणास्वादनप्रमाणेऽपि भक्तादौ प्रतिगृहीते स्यात्, यत्र लवणं किल स्तोकं दीयते, यदि तावन्मात्रं भक्तपानस्य गृह्णीति सापि दत्तिर्गण्यते, पंचेत्युपलक्षणं, तेन चतस्रस्तिस्रो द्वे एका षट् सप्त वा यथाभिग्रहं वाच्याः, समग्रस्य च सूत्रस्य अयं भावः, यावत्योऽन्नस्य पानकस्य वा दत्तयो रक्षिता भवंति, तावत्य एव तस्य कल्पंते, न तु परस्परं समावेशं कर्तुं कल्पते, न च दत्तिभ्योऽतिरिक्त गृहीतुं कल्पते, कल्पते तस्य तस्मिन् दिने तेनैव भोजनेन अवस्थातुं, न तस्य कल्पते द्वितीयवारं गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा ॥ २६ ॥

चतुर्मासकं स्थितानां नो कल्पते साधूनां साध्वीनां वा, भिक्षार्थं तत्र न गच्छेदित्यर्थः, एतावता शय्यातरगृहं, अन्यानि च षट् गृहाणि वर्जयेदिति, तेषां आसन्नत्वेन साधुगुणानुरागितया उद्गमादिदोषसंभवात्, कीदृशानां साधूनां? सन्निवृत्तचारिणां; ' सन्नियट्टन्ति ' गृहेभ्यः संनिवृत्ताः

सतः चरंतीति, तथा तेषां निषिद्धगृहेभ्योऽन्यत्र भ्रमतामिति भाव., अत्र बहुत्वे एकत्वं भिक्षार्थं गतुं, बहवस्त्वेवं व्याचक्षते सप्तगृहांतरे संखडिं जनसंकुलं जेमनवारादिरूपां गंतुं न कल्पते, अथ- ग्रार्थे सूत्रकृन्मतांतराण्याह—एके पुनः एवं कथयंति नो कल्पते उपाश्रयादारभ्य परतः सप्तगृहमध्ये जेमनवारायां सनिवृत्तचारिणां भिक्षार्थं गतु, एके पुन. एवं कथयति नो कल्पते उपाश्रयादारभ्य परंपरतः सप्तगृहमध्ये जेमनवारायां संनिवृत्तचारिणां भिक्षार्थं गतुं, द्वितीयमते ' परेणंति ' शय्या- तरगृहं अन्यानि च सप्त गृहाणि वर्जयेत्, तृतीयमते परंपरेणेति शय्यातरगृहं तत एकं गृहं, ततः परं सप्त गृहाणि वर्जयेदिति भाव. ॥ २७ ॥ चतुर्मासक स्थितस्य नो कल्पते पाणिपात्रस्य जिनक- ल्पिकादेर्भिक्षोः कणगफुसिया फुसारमात्रं एतावत्यपि वृष्टिकाये निपतति सति गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितु वा प्रवेष्टुं वा ॥ २८ ॥

चतुर्मासकं स्थितस्य करपात्रस्य जिनकल्पिकादेर्भिक्षोः नो कल्पते अनाछादितेऽवकाशे पिंड- पातं भिक्षां प्रतिगृह्य अवस्थातु आहारयितु न कल्पते, यदि अनाछादिते स्थाने भुंजानस्य साधोः

अकस्मात् वृष्टिकायः निपतेत् तदा पिंडपातस्य देशं भुक्त्वा देशं चादाय पाणिं आहारैकदेशसहित हस्तं पाणिना द्वितीयहस्तेन परिपिधायाछाद्य हृदयाग्रे वा गुप्तं कुर्यात्, कक्षायां वा समाहरेत् आछादितं कुर्यात्, एवंच कृत्वा यथाछन्नानि गृहिभिः स्वनिमित्तमाछादितानि गृहाणि उपागछेत्, वृक्षमूलानि वाउपागछेत्, यथा तस्य तत्र पाणौ दकरजांसि महांतो बिंदवः, दगफुसिआ फुसारं अवश्यायलवो बिंदवो वा न विराध्यंते, पतंति वा यद्यपि जिनकल्पिकादेर्देशोनदशपूर्वधरत्वेन प्रागेव वर्षोपयोगो भवति, तथा चाऊभुक्ते गमनं संभवति, तथापि छद्मस्थत्वात् कदाचिदनुपयोगोऽपि भवति ॥२९॥ उक्तमेवार्थं निगमयन्नाह–चतुर्मासकं स्थितस्य पाणिपात्रस्य भिक्षोः यत्किंचित् कणो लेशस्तन्मात्रकं पानीयं कणकं तस्य फुसिआ फुसारमात्रं तस्मिन्नपि निपतति, न तस्य जिनकल्पिकादेः कल्पते गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा ॥ ३० ॥ उक्तः पाणिपात्रविधिः, अथ पात्रधारिणो विधिमाह—

चतुर्मासं स्थितस्य पात्रधारिणः स्थविरकल्पिकादेर्भिक्षोः न कल्पते अविछिन्नधाराभिर्वृष्टि-

काये निपतति, यस्यां वर्षाकल्पोऽतीव वा श्रवति, कल्पं वा भित्वांत कायं आर्द्रयति, तत्र गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा, अपवादमाह—कल्पते तस्य स्थविरकल्पिकादेः अल्पवृष्टिकाये अंतरेण वर्षति सति, अथवा आंतरः सौत्रः कल्प उत्तरः औौर्णिकस्ताभ्यां प्रावृतस्याल्पवृष्टौ गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितु वा प्रवेष्टु वा, अपवादे तु तत्रापि तपस्विनः क्षुदसहाश्च भिक्षार्थं पूर्वपूर्वाभावे औौर्णिकेन औष्ट्रिकेन तार्णेन सौत्रेण वा कल्पेन, तथा तालपत्रेण पलाशछत्रेण वा प्रावृता विहरंत्यपि ॥ ३१ ॥

चतुर्मासिकं स्थितस्य निर्ग्रंथस्य साध्व्याश्च गृहस्थगृहे पिंडपातो भिक्षालाभस्तत्प्रतिज्ञया अत्र लप्स्ये इति धिया अनुप्रविष्टस्य गोचरचर्यायां गतस्य साधोः स्थित्वा स्थित्वा वृष्टिकायो निपतेत्, तदा कल्पते तस्य साधो आरामस्याधो वा सांभोगिकानां इतरेषां वा उपाश्रयस्याधस्तदभावे विकटगृहं मंरूपिका यत्र ग्राम्यपर्षदुपविशति, तस्याधोः, वृक्षमूलं वा निर्गलकरीरादिमूलं तस्य वा अधः, तत्रोपागतु कल्पते ॥ ३२ ॥ तत्र विकटगृहवृक्षमूलादौ स्थितस्य से तस्य साधोः आगमनात् पूर्वकाले पू-

र्वायुक्तः पक्तुमारब्धः तंदुलोदनः, पश्चादायुक्तोऽभिलिंगसूपो मसूरदालिर्भाषदालिः सस्नेहसूपो वा, तदा कल्पते तस्य साधोः तंदुलौदनं प्रतिगृहीतुं, न कल्पते तस्य मसूरादिदालिः प्रतिगृहीतुं, अयमर्थः–तत्र यः पूर्वायुक्तः साध्वागमनात् पूर्वमेव स्वार्थं गृहस्थैः पक्तुमारब्धः स कल्पते दोषाभावात्, साध्वागमनानंतरं च यः पक्तुमारब्धः स पश्चादायुक्तः स न कल्पते उद्गमादिदोषसंभवात्, एवं शेषालापकद्वयमपि भाव्यं ॥ ३३ ॥

तत्र गृहे तस्य आगमनात् प्राक् पूर्वायुक्तः मसूरादिदालिः पश्चादायुक्तः तंदुलोदनः, तदा कल्पते तस्य मसूरादिदालिः प्रतिगृहीतुं, नो तस्य कल्पते तंदुलौदनं प्रतिगृहीतुं ॥ ३४ ॥ तत्र गृहे तस्य आगमनात् प्राक् द्वावपि पश्चादायुक्तौ तदा नो तस्य कल्पते द्वावपि प्रतिगृहीतुं, यत् तस्य तत्र आगमनात् प्राक् पूर्वायुक्तं तत् कल्पते प्रतिगृहीतुं, यत् तस्य तत्र आगमनात् प्राक् पश्चादायुक्तं न तत् कल्पते प्रतिगृहीतुं ॥ ३५ ॥

चतुर्मासकं स्थितस्य साधोः साध्व्याश्च गृहस्थगृहे भिक्षाग्रहणार्थं अनुप्रविष्टस्य स्थित्वा स्थित्वा

वृष्टिकायो निपतेत्, तदा कल्पते तस्य आरामस्याधो वा, यावत् वृक्षमूले वा उपागंतुं, नो तस्य क-ल्पते पूर्वगृहीतेन जक्तपानेन भोजनवेलां अतिक्रमयितु ॥ आरामादिस्थितस्य साधोर्यदि वर्षा नो-परमति तदा किं कार्यमित्याह—कल्पते तस्य साधोः पूर्वमेव विकटं उद्गमादिशुद्धमशनादि जुक्त्वा पीत्वा च पात्रं निर्लेपीकृत्य संप्रक्षाल्य एकस्मिन् पार्श्वे पात्राद्युपकरणं कृत्वा वपुषा सह प्रावृत्य व-र्षत्यपि मेघे सावशेषे अनस्तमिते सूर्ये यत्रैव उपाश्रयस्तत्रैव उपागतु, परं नो तस्य कल्पते तां रात्रिं गृहस्थगृहे एव अतिक्रमयितु, एकाकिनो हि बहिर्वसतः साधोः स्वपरसमुत्था बहवो दोषाः संभ-वेयु., साधवो वा वसतिस्था अधृतिं कुर्युरिति ॥ ३६ ॥

चतुर्मासकं स्थितस्य साधो. साध्व्याश्च गृहस्थगृहे भिक्षाग्रहणार्थं अनुप्रविष्टस्य स्थित्वा स्थि त्वा वृष्टिकायो निपतेत्, तदा कल्पते तस्य आरामस्याधो वा यावत् उपागंतुं ॥ ३७ ॥ अथ स्थित्वा वर्षे पतति यदि आरामादौ साधुस्तिष्ठति तदा केन विधिनेत्याह—तत्र विकटगृहवृक्षमूलादौ स्थि-तस्य साधोः नो कल्पते एकस्य साधोः एकस्याः साध्व्याश्च एकत्र स्थातुं ( १ ) तत्र नो कल्पते

एकस्य साधोः द्वयोः साध्व्योश्च एकत्र स्थातुं (२), तत्र नो कल्पते द्वयोः साध्वोः एकस्याः साध्व्याश्च एकत्र स्थातुं (३), तत्र नो कल्पते द्वयोः साध्वोः द्वयोः साध्व्योश्च एकत्र स्थातुं (४); यदि स्यात् अत्र कोऽपि पंचमः क्षुल्लको वां क्षुल्लिका वा, अन्येषां वा दृष्टिविषयः, बहुद्वारसहितस्थानं वा, तदा कल्पते एकत्र स्थातुं. नावार्थस्त्वयं–एकस्य साधोः एकया साध्व्या सह स्थातुं न कल्पते, एवं एकस्य साधोर्द्वाभ्यां साध्वीभ्यां सह, द्वयोः साध्वोरेकया साध्व्या सह, द्वयोः साध्वोर्द्वाभ्यां साध्वीभ्यां सह स्थातुं न कल्पते, यदि चात्र पंचमः कोऽपि क्षुल्लकः क्षुल्लिका वा साक्षी स्यात् तदा कल्पते, अथवा अन्येषां ध्रुवकार्मिकलोहकारादीनां वर्षेत्यप्यमुक्तस्वकर्मणां संलोके तत्रापि सप्रतिद्वारे सर्वगृहाणां वा द्वारे एवं पंचमं विनापि स्थातुं कल्पते ॥ ३० ॥

चतुर्मासकं स्थितस्य साधोः गृहस्थगृहे भिक्षाग्रहणार्थं, यावत् उपागंतुं तत्र नो कल्पते एकस्य साधोः एकस्याः श्राविकायाः एकत्र स्थातुं, एवं चत्वारो भंगाः, यदि स्यात् अत्र कोऽपि पंचमः स्थविरो वा स्थविरा वा साक्षी भवति तदा स्थातुं कल्पते, अन्येषां वा दृष्टिविषयः, बहुद्वारसहितं

वा स्थाने, एवं कल्पते एकत्र स्थातुं, एवमेव साध्व्याः गृहस्थस्य च चतुर्भंगी वाच्या, तथा एकाकित्वं च साधो सांघाटिके उपोषितेऽसुखिते वा कारणाद्भवति, अन्यथा हि उत्सर्गस्तु साधुरात्मना द्वितीयः, साध्व्यस्तु त्र्यादयो विहरंति ॥ ३९ ॥ चतुर्मासकं स्थितानां नो कल्पते साधूनां साध्वीनां वा मदर्थं त्वमानये. इति अपरिज्ञसेन अज्ञापितेन साधुना स्वयोग्य अहमानयिष्यामीति अपरिज्ञापितस्य साधो. निमित्त अशनादि यावत् प्रतिगृहीतुं ॥ ४० ॥

तत् कुतो भदन्त इति पृष्टे गुरुराह—इछा चेदस्ति तदा परो अपरिज्ञापित , यदर्थं आनीतं स भुंजीत, इछा न चेत्तदा न भुंजीत, प्रत्युतेयं वदति केनोक्तमासीत् यत्त्वया आनीतं, किं च अनिछया दाक्षिण्यतश्चेद् भुक्ते, तदा अजीर्णादिना बाधा स्यात्, परिष्ठापने च वर्षासु स्वंक्लिलदौर्लभ्याद्दोषः स्यात्तस्मात् पृष्ट्वा आनेय ॥४१॥ चतुर्मासक स्थितानां नो कल्पते साधूनां साध्वीनां च उदकेन आर्द्रे क्लिन्ने गलद्बिंदुयुते तथा स्नेहेन ईषदुदकेन सहिते वा एवंविधे देहे सति अशनादिक ४ आहारयितु, ॥ ४२ ॥ तत् कुतः पूज्या इति पृष्टे गुरुराह—सप्तस्नेहायतनानि जलावस्थानस्थानानि प्रज्ञप्तानि जी-

नैर्येषु चिरेण जलं शुष्यति. तद्यथा—पाणी हस्तौ १, पाणिरेखा आयूरेखादयस्तासु हि चिरं जलं तिष्ठति २, नखा अखंडा ३, नखशिखास्तदग्रभागाः ४, भ्रमूहा भ्रूर्नेत्रोर्ध्वरोमाणि ५, अहरुट्ठा दाढिका ६, उत्तरुट्ठा श्मश्रूणि ७, अथ पुनः एवं जानीयात् उदकरहितो मम देहः सर्वथा निर्जलोऽभूत्, तदा तस्य साधोः कल्पते अशनादिकं ४ आहारयितुं ॥ ४३ ॥

चतुर्मासकं स्थितानां अत्र खलु साधूनां साध्वीनां च इमानि अष्टौ सूक्ष्माणि, यानि छद्मस्थेन साधुना साध्व्या च वारंवारं यत्रावस्थानादि करोति तत्र तत्र ज्ञातव्यानि, सूत्रोपदेशेन चक्षुषा द्रष्टव्यानि, ज्ञात्वा दृष्ट्वा च प्रतिलेखितव्यानि परिहर्त्तव्यतया विचारणीयानि संति, तद्यथा—सूक्ष्माः प्राणाः १, सूक्ष्मः पनकः फुल्लिः २, सूक्ष्माणि बीजानि ३, सूक्ष्माणि हरितानि ४, सूक्ष्माणि पुष्पाणि ५, सूक्ष्माणि अंडानि ६, सूक्ष्माणि लयनानि बिलानि ७, सूक्ष्मः स्नेहः अप्कायः ८, तत् के सूक्ष्मप्राणाः? गुरुराह—सूक्ष्मप्राणाः पंचविधाः प्रज्ञप्तास्तीर्थकरगणधरैः, तद्यथा—कृष्णाः, नीलाः, रक्ताः, पीताः, श्वेताः. एकस्मिन् वर्णे सहस्रशो भेदा बहुप्रकाराश्च संयोगास्ते सर्वे पंचसु कृष्णादिवर्णेष्वे-

त्र अवतरंति, अस्ति कुंथु अणुद्धरी नाम, या स्थिता अचलंती सती छद्मस्थानां साधूनां साध्वी-
ना च नो दृष्टिविषय शीघ्र आगच्छति, यावत् छद्मस्थेन साधुना साध्व्या च वारंवारं ज्ञातव्या,
दृष्टव्या., प्रतिलेखितव्याश्च जवंति ते सूक्ष्मा. प्राणा., स हि चलन्नेव विज्ञायते, न हि स्था-
नस्था ॥ ४४ ॥

तत् क सूक्ष्म पनक ? गुरुराह—सूक्ष्मपनक. पचविधः प्रज्ञप्त., तद्यथा—कृष्ण. यावत् शुक्ल.,
अस्ति सूक्ष्मः पनक., यत्रोत्पद्यते तद्द्रव्यसमानवर्ण. प्रसिद्धः प्रज्ञप्त., य छद्मस्थेन साधुना सा-
ध्व्या यावत् प्रतिलेखितव्यो जवति, पनक उल्ली, स च प्राय प्रावृषि भूकाष्ठादिषु जायते, यत्रो-
त्पद्यते तद्द्रव्यसमवर्णश्च, नामं पन्नत्तेत्यत्र नाम प्रसिद्धौ, स सूक्ष्मपनकः ॥ अथ कानि तत् सु
क्ष्मबीजानि ? गुरुराह सूक्ष्मबीजानि पंचविधानि प्रज्ञप्तानि, तद्यथा—कृष्णानि यावत् शुक्लानि सति सू-
क्ष्मबीजानि, कणिका नखिका 'नहीअं' इति लोके तत्समानवर्णानि नाम प्रज्ञप्तानि, यानि छद्मस्थेन
यावत् प्रतिलेखितव्यानि तानि सूक्ष्मबीजानि ॥ अथ कानि तत् सूक्ष्महरितानि ? गुरुराह—सूक्ष्म-

हरितानि पंचविधानि प्रज्ञप्तानि, तद्यथा-कृष्णानि यावत् शुक्लानि, संति सूक्ष्महरितानि पृथिवीसमानवर्णानि प्रसिद्धानि प्रज्ञप्तानि, यानि साधुना साध्व्या वा यावत् प्रतिलेखितव्यानि भवंति, तानि सूक्ष्महरितानि, हरितसूक्ष्मं नवोद्भिन्नं पृथ्वीसमवर्णं हरितं तच्चाल्पसंहननत्वात् स्तोकेनापि विनश्यति.

अथ कानि तत् सूक्ष्मपुष्पाणि? गुरुराह—सूक्ष्मपुष्पाणि पंचविधानि प्रज्ञप्तानि, तद्यथा—कृष्णानि यावत् शुक्लानि; संति सूक्ष्मपुष्पाणि वृक्षसमानवर्णानि प्रसिद्धानि प्रज्ञप्तानि, यानि छद्मस्थेन यावत् प्रतिलेखितव्यानि भवंति तानि सूक्ष्मपुष्पाणि ॥ अथ कानि तत् सूक्ष्मअंडानि? गुरुराह—सूक्ष्मांडानि पंचविधानि प्रज्ञप्तानि, तद्यथा-उद्दंशा मधुमक्षिकामत्कुणादयस्तेषां अंडं उद्दंशांडं १, उत्कलिका लूता ' कुलातरा ' इति लोके, तस्या अंडं उत्कलिकांडं २, पिपीलिकाः कीटिकाः, तासां अंडं पिपीलिकांडं ३, हलिका गृहकोलिका ब्राह्मणी वा, तस्या अंडं हलिकांडं ४, हल्लोहलिआ अहिलोडी सरटी ' काकिंडी ' इति लोके, तस्या अंडं हल्लोहलिकांडं ५, यानि साधुना यावत् प्रतिलेखितव्यानि भवंति तानि सूक्ष्मांडानि ॥ अथ कानि लयनसूक्ष्माणि? लयनं आश्रयः सत्वानां, यत्र कीटिका-

अनेकसूक्ष्मसत्त्वा भवंति, तद्भवनं सूक्ष्मबिलानि, गुरुराह—सूक्ष्मबिलानि पंचविधानि प्रज्ञप्तानि, तद्यथा—उत्तिंगा गर्दभाकारा जीवास्तेषां बिलं भूमौ उत्कीर्णं गृहं उत्तिंगभवनं १, भृगु· शुष्कभूरेखाजलशोषानंतरं जलकेदारादिषु स्फुटिता दालिरित्यर्थं २, सरलं बिलं ३, तालमूलाकारं अध· पृथु उपरि च सूक्ष्मं बिलं तालमूल ४, शंबूकावर्त्तं भ्रमरगृहं नाम पंचमं ५, यानि छद्मस्थेन यावत् प्रतिलेखितव्यानि भवंति तानि सूक्ष्मबिलानि ॥ अथ क· तत् सूक्ष्मस्नेह ? गुरुराह—सूक्ष्मस्नेह पंचविध प्रज्ञप्त·, तद्यथा—अवश्यायो गगनात्पतज्जल १, हिमं प्रसिद्ध २, महिका धूमरी ३, करका· प्रतीता· ४, हरतनुर्भूमि स्नुततृणाग्रबिंदुरूपो यो यवांकुरादौ दृश्यते ५, य· छद्मस्थेन यावत्प्रतिलेखितव्यो भवति स· सूक्ष्म स्नेह· ॥

चतुर्मासकं स्थित· साधु इच्छेत् गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितु वा प्रवेष्टुं वा, तदा नो तस्य साधोः कल्पते अनापृच्छ्य, कं इत्याह—आचार्य सूत्रार्थदाता तं १, सूत्राध्यापक उपाध्यायस्तं २, स्थविरो ज्ञानादिषु सीदतां स्थिरीकर्त्ता, उद्यतानामुपबृंहकश्च तं ३, ज्ञानादिषु प्र-

वर्त्तयिता प्रवर्त्तकस्तं ४, यस्य पार्श्वे आचार्याः सूत्राद्यभ्यसंति स गणी, तं ५, तीर्थंकरशिष्यो गणधरस्तं ६, गणावच्छेदको यः साधून् गृहीत्वा बहिः क्षेत्रे आस्ते, गच्छार्थं क्षेत्रोपधिमार्गणादौ प्रभावनादित्त्री, सूत्रार्थोभयवित् तं ७, यं वान्यं वयःपर्यायाभ्यां लघुमपि पुरतः कृत्वा गुरुत्वेन कृत्वा विहरंति, कल्पते तस्य आपृच्छ्य आचार्यं यावत् यं वा पुरतः कृत्वा विहरति, अथ कथं पृष्टव्यमित्याह–

इच्छाम्यहं हे पूज्य ! भवद्भिः अभ्यनुज्ञातः सन् गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा इति. ते आचार्यादयः से तस्य साधोः वितरेयुरनुज्ञां दद्युस्तदा कल्पते गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा. ते आचार्यादयस्तस्य नो आज्ञां दद्युः, तदा नो कल्पते गृहस्थगृहे भक्तार्थं वा पानार्थं वा निष्क्रमितुं वा प्रवेष्टुं वा. तत् कुतो हेतोः हे पूज्य ! इति पृष्टे गुरुराह–आचार्याः प्रत्यपायं अपायं तत्परिहारं च जानंतीति ॥ ४६ ॥

एवमेव विहारभूमिर्जिनचैत्ये गमनं ' विहारो जिनसद्मनीति ' वचनात्, विचारभूमिः शरीरचिंताद्यर्थं गमनं, अन्यं वा यत्किंचित्प्रयोजनं लेपसीवनलिखनादिकं उच्छ्वासादिवर्ज्जं सर्वमापृच्छ्यैव

कर्त्तव्यमिति तत्त्वं एवं ग्रामानुग्रामं दिंहितुं जिक्षार्थं ग्लानादिकारणे वा, अन्यथा वर्षासु ग्रामानुग्रामदिंहनमनुचितमेव ॥ ४६ ॥

चतुर्मासक स्थितो भिक्षुः इच्छेत् अन्यतरां विकृतिं आहारयितुं, तदा नो तस्य कल्पते अनापृच्छ्य आचार्यं वा यावत् य वा पुरतः कृत्वा विहरति, कल्पते तस्य साधो आपृच्छ्य आचार्यं वा यावत आहारयितुं, कथ पृष्टव्यमित्याह–अह इच्छामि हे पूज्य! युष्माभिः अभ्यनुज्ञात सन् अन्यतरं विकृतिं आहारयितु ता एतावतीं एतावतो वारान्, ते आचार्यादयस्तस्य यदा आज्ञां दद्युः तदा तस्य कल्पते अन्यतरीं विकृतिं आहारयितु, ते आचार्यादयस्तस्य नो यदि आज्ञां दद्युस्तदा तस्य नो कल्पते अन्यतरीं विकृति आहारयितु, तत् कुतो हेतोः हे पूज्य! इति पृष्टे गुरुराह–आचार्या लाभालाभ जानंति ॥ ४७ ॥

चतुर्मासकं स्थितो भिक्षुः इच्छेत् काचित् चिकित्सां वातिक १ पैत्तिक २ श्लेष्मिक ३ सन्निपातिक ४ रोगाणामातुर १ वैद्य २ प्रतिचारक ३ भैषज्य ४ रूपां चतुष्पादां चिकित्सां, तथा

चोक्तं—भिषक् १ द्रव्या २ एयुपस्थाता ३ । रोगी ४ पादचतुष्टयं ॥ चिकित्सितस्य निर्दिष्टं । प्रत्येकं तच्चतुर्गुणं ॥ १ ॥ दक्षो १ विज्ञातशास्त्रार्थो २ । दृष्टकर्मा ३ शुचि ४ भिषक् ॥ बहुकल्पं बहुगुणं २ । संपन्नं ३ योग्यमौषधं ॥ २ ॥ अनुरक्तः १ शुचि २ दक्षो ३ । बुद्धिमान् ४ प्रतिचारकः ॥ आढ्यो १ रोगी २ भिषग्वश्यो ३ । ज्ञापकः सत्त्ववान ॥ पि ॥ ३ ॥ कारयितुं, आङ्वृद्धिधातुः करणार्थे सैद्धांतिकः, तदेव सर्वं भणितव्यं ॥

चतुर्मासकं स्थितो भिक्षुः इच्छेत् किंचित् प्रशस्तं, कल्याणकारि, उपद्रवहरं, धन्यकरणीयं; मंगलकारणं, सश्रीकं, महान् अनुभावो यस्य तथा तत्, एवंविधं तपःकर्म आहृत्य विहर्त्तुं, तदेव सर्वं भणितव्यं ॥ ५० ॥

चतुर्मासकं स्थितो भिक्षुः इच्छेत्, अथ कीदृशो भिक्षुः? अपश्चिमं चरमं मरणं अपश्चिममरणं, न पुनः प्रतिक्षणमायुर्दलिकानुभवलक्षणं आवीचिमरणं, अपश्चिममरणमेवांतस्तत्र भवा अपश्चिममारणांतिकी, संलिख्यते कृशीक्रियते शरीरं कषायाद्यनयेति संलेखना, सा च द्रव्यभावभेदभिन्ना

' चत्तारि विचित्ताइं ' इत्यादिका तस्या ' जूसणंत्ति ' जोषणं सेवा, तया ' झूसियत्ति ' क्षपितशरीरः, अत एव प्रत्याख्यातभक्तपान., अत एव पादपोपगतः कृतपादपोपगमन., अत एव कालं जीवितकाल वाऽनवकाङ्क्षनभिलषन् विहर्त्तुमिछेत्, गृहस्थगृहे निष्कमितु वा प्रवेष्टु वा, अशनादिक ४ वा आहारयितु, उच्चारं पुरीष, प्रश्रवणं मूत्र परिष्ठापयितु वा, स्वाध्याय वा कर्त्तु, धर्मजागरिकां आज्ञा १ ऽपाय २ विपाक ३ संस्थानविचय ४ भेदधर्मध्यानविधानादिना जागरण धर्मजागरिका, ता जागरयितुमनुष्ठातुमिति, नो तस्य कल्पते अनापृछ्य तदेवं सर्वं वाच्य, एतत् सर्वं गुर्वाज्ञया एव कर्त्तु कल्पते ॥ ५१ ॥

चतुर्मासक स्थितो भिक्षुः इछेत्, वस्त्र वा, पतद्ग्रहं वा, कंबलं वा, पादप्रोंछनं वा रजोहरण, अन्यतरं वा उपधिं आतापयितु एकवार आतापे दातुं प्रतापयितुं पुन: पुनरातापे दातुं इच्छति, अनातापने कुत्सापनकादिदोषोत्पत्तेः, तदा नो तस्य कल्पते एक वा साधुं अनेक वा साधु अप्रतिज्ञाप्य अकथयित्वा, गृहस्थगृहे भक्तार्थ वा, पानार्थ वा, निष्कमितुं वा प्रवेष्टुं वा, अशनादिकं ४ वा आहारयितुं,

विहारभूमौ वा विहारभूमिर्जिनचैत्यगमनं, विचारभूमिः शरीरचिंताद्यर्थं गमनं, स्वाध्यायं वा कर्त्तुं, कायोत्सर्गं वा स्थानं स्थातुं, यदि स्यात् अत्र कोऽपि निकटवर्त्ती एकः अनेको वा साधुः, तदा कल्पते तस्य एवं वक्तुं, इमं उपधिं त्वं हे आर्य! मुहूर्त्तमात्रं जानाहि सत्यापयेः तावत्, यावत् अहं गृहस्थगृहे यावत् कायोत्सर्गं वा स्थानं वीरासनादि वा स्थातुं इति, स चेत् प्रतिशृणुयात् अंगीकुर्यात् तद्वस्त्रसत्यापनं, तदा तस्य कल्पते गृहस्थगृहे गोचर्यादौ गंतुं, अशनाद्याहारयितुं, विहारभूमिं विचारभूमिं वा गंतुं, स्वाध्यायं वा कायोत्सर्गं च कर्त्तुं, स्थानं वा वीरासनादिकं स्थातुं, तदेव सर्वं भणितव्यं. स चेत् नो अंगीकुर्यात् तदा तस्य नो कल्पते गृहस्थगृहे यावत् स्थानं स्थातुं ॥ ५२ ॥

चतुर्मासकं स्थितानां नो कल्पते साधूनां साध्वीनां वा न अभिगृहीते शय्यासने येन स अनभिगृहीतशय्यासनः, अनभिगृहीतशय्यासन एव अनभिगृहीतशय्यासनिकः, स्वार्थे इकप्रत्ययस्तथाविधेन साधुना ' हुत्तए त्ति ' भवितुं न कल्पते, वर्षासु मणिकुट्टिमे पीठफलकादिग्रहवतैव भाव्यं, अन्यथा शीतलायां भूमौ शयने उपवेशने च कुंथ्वादिविराधनोत्पत्तेः, कर्मणां दोषाणां वा आदान-

मुपादानकारणं, एतद् अनभिगृहीतशय्यासनिकत्वं, तदेव दृढयति—अनभिगृहीतशय्यासनिक इति प्राग्वत् तस्य उच्चा हस्तादियावत् येन पिपीलिकादेर्वधो न स्यात्, सर्पादेर्वा दशो न स्यात्, अकुचा, कुच परिस्पंदे इति वचनात् परिस्पंदरहिता निश्चलेति यावत्, ततः कर्मधारयः, एवंविधा शय्या कंबिकादिमयी सा न विद्यते यस्य अनुच्चाकुचिका नीचसपरिस्पंदशय्याकस्तस्य अनर्थकसंबंधिनः, पक्षमध्ये अनर्थकं निष्प्रयोजनं एकवारोपरि द्वौ त्रींश्चतुरो वारान् कंबासु बंधान् ददाति, चतुरुपरि बहूनि अट्टकानि वा बध्नाति, तथा न स्वाध्यायविघ्नपलिमंथादयो दोषाः, यदि चैकांगिक चंप फादिपट्टं लभ्यते तदा तदेव ग्राह्यं, बंधनादिपलिमंथपरिहारात्, अमितासनिकस्य अबद्धासनस्य मुहुर्मुहुः स्थानात्स्थानांतरं गच्छतो हि सत्ववधः स्यात्, अनेकानि वा आसनानि सेवमानस्य संस्तारकपात्रादिना आतपे दातुः ईर्यासमितिषु अनुपयुक्तस्य वारंवारं अप्रतिलेखनाशीलस्य, दृष्ट्वा अ- प्रमार्जनाशीलस्य रजोहरणादिना तथा तथारूपाणां इदृशस्य साधोः संयमो दुराराध्यो भवति ॥ ५३ ॥

आदानमुक्त्वाऽनादानमाह—कर्मणां दोषाणां वा अनादानं अकारणमेतत् अभिगृहीतशय्या-

सन्निकरत्वं उच्चाकुचशय्याकरत्वं सप्रयोजनं पक्षमध्ये सकृच्च शय्याबंधकरत्वमिति, तदेव प्रकटयति—अभिगृहीतशय्यासनिकस्य, उच्चाकुचिकस्य, अर्थाय बंधिनः, मितासनिकस्य, आतापिनो वस्त्रादेरातपे दातुः, समितस्य समितिषु दत्तोपयोगस्य, अभीक्ष्णं अभीक्ष्णं प्रतिलेखनाशीलस्य प्रमार्जनाशीलस्य इदृशस्य साधोः, तथा तथा तेन तेन प्रकारेण संयमः सुखाराध्यो भवति ॥ ५४ ॥

चतुर्मासकं स्थितानां कल्पते साधूनां साध्वीनां तिस्रः उच्चारप्रश्रवणभूम्यः, अनधिसहिष्णोस्तिस्रोऽतः अधिकसहिष्णोश्च बहिस्तिस्रो दूरव्याघातेन मध्याभूमिस्तद्व्याघाते चासन्नेति आसन्नमध्यदूरभेदात्त्रिधा भूमिः प्रतिलेखितव्या, न तथा हेमंतग्रीष्मयोर्यथा वर्षासु. तत् कुतो हेतोः हे पूज्य ! इति पृष्टे गुरुराह—वर्षासु उसन्नंति प्रायेण प्राणाः शंखनकेंद्रगोपकृम्यादयस्तृणानि प्रतीतानि, बीजानि तत्तद्वनस्पतीनां नवोद्भिन्नानि किसलयानि, पनका उल्लयः, हरितानि बीजेभ्यो जातानि एतानि वर्षासु बाहुल्येन भवंति ॥ ५५ ॥

चतुर्मासकं स्थितानां कल्पते साधूनां साध्वीनां त्रीणि मात्रकाणि ग्रहीतुं, तद्यथा—उच्चारमा-

त्रक १, प्रश्रवणमात्रक २, खेलमात्रकं ३, मात्रकाजावे वेलातिक्रमणे वेगधारणे आत्मविराधना, वर्षति च बहिर्गमने संयमविराधनेति ॥ ५६ ॥ चतुर्मासक स्थितानां नो कल्पते साधूनां साध्वीना च पर्युषणात.पर आषाढचतुर्मासकादनतरं गोलोमप्रमाणा अपि केशा न स्थापनीया', आस्तां दीर्घा', ' धुवं लोअं च जिणाण, निच्च थेराण वासवासासु ' इति वचनात्. यावत्तां रजनीं जाद्रपद-पचमीरात्रिं सांप्रतं चतुर्थीरात्रिं नातिक्रामयेच्चतुर्थ्यां अर्वागेव लोच कारयेत्, अय जावः—यदि सम-र्थस्तदा वर्षासु नित्य लोच कारयेदसमर्थोऽपि तां रात्रिं नोल्लङ्घयेत्, पर्युषणापर्वणि लोच विना प्र-तिक्रमणस्याऽवश्यमकल्पत्वात्, केशेषु हि अप्कायविराधना तत्संसर्गाच्च यूका समूर्छति, ताश्च क-डूयमानो हन्ति, शिरसि नखक्षतं वा स्यात्, यदि क्षुरेण मुण्डापयति कर्त्तर्या वा, तदाज्ञाजंगाद्याः दोषा , संयमात्मविराधना, यूकाश्छिद्यते, नापितश्च पश्चात्कर्म करोति, शासनापभ्राजना च, ततो लोच एव श्रेयान् यदि वाऽसहिष्णोर्लोचे कृते ज्वरादिर्वा स्यात् कस्यचिद्, बालो वा रुयाद्धर्म वा त्यजेत्ततो न तस्य लोच इत्याह—

आर्येण साधुना उत्सर्गतो लुंचितशिरोजेन, अपवादतो वालग्लानादिना मुंडितशिरोजेन भवितव्यं स्यात्, तत्र केवलं प्रासुकोदकेन शिरः प्रक्षाल्य नापितस्यापि तेन करौ क्षालयति, यस्तु क्षुरेणापि कारयितुमसमर्थो व्रणादिमच्छिरा वा तस्य केशाः कर्त्तर्या कल्पनीयाः. पक्षे पक्षे संस्तारकदवरकाणां बंधा. मोक्तव्याः प्रतिलेखितव्याश्चेत्यर्थः, अथवा आरोपणाप्रायश्चित्तं पक्षे पक्षे ग्राह्यं सर्वकालं, वर्षासु विशेषतः. असहिष्णुना मासि मासि मुंडनं कारणीयं, यदि कर्त्तर्या कारयति तदा पक्षे पक्षे गुप्तं कारणीयं, क्षुरकर्त्तर्योश्च लोचे प्रायश्चित्तं निशीथोक्तं यथासंख्यं लघुगुरुमासलक्षणं ज्ञेयं. षण्मासिको लोचः, स्थविराणां वृद्धानां जराजर्जरत्वेनाऽसामर्थ्याद् दृष्टिरक्षार्थं च ' संवच्छरिए वा थेरकप्पेति ' सांवत्सरिको वा लोचः स्थिवरकल्पे स्थितानामिति, अर्थात्तरुणानां चातुर्मासिक इति ॥ ५७ ॥

चतुर्मासकं स्थितानां नो कल्पते साधूनां साध्वीनां च पर्युषणातः परं अधिकरणं राटिस्तत्करं वचनमपि अधिकरणं तद् वक्तुं न कल्पते, यश्च साधुः साध्वी वा पर्युषणातः परं क्लेशकारि वचनं

वदति स एवं वक्तव्य· स्यात्, हे आर्य! त्वं अकल्पेन अनाचारेण वदसि, यतः पर्युषणादिनतोऽर्वाग् तद्दीने एव वा यदधिकरण उत्पन्न, तत् पर्युषणाया क्षमितं, यच्च त्वं पर्युषणात· पर अपि अधिकरण वदसि, सोऽयमकल्प इति भाव· यथैवं निवारितोऽपि साधुर्वा साध्वी वा पर्युषणात· पर अधिकरणं वदति, स निर्यूहितव्यस्ताम्बूलिकपत्रदृष्टांतेन सघाद् बहि· कर्त्तव्य·, यथा तांबूलिकेन विनष्ट पत्र अन्यपत्रविनाशनभयाद् बहि· क्रियते, तद्वदयमप्यनतानुबंधिक्रोधाविष्टो विनष्ट एवेत्यतो बहि· कर्त्तव्य इति भावस्तथान्योऽपि द्विजदृष्टांतो यथा—

खेटवास्तव्यो रुद्रनाम द्विजो वर्षाकाले केदारान् कृष्टु हल लात्वा क्षेत्रं गतो हलं वाहयतस्तस्य गली बलीवर्द उपविष्टस्तोत्रेण ताड्यमानोऽपि यावन्नोत्तिष्ठति तदा क्रुद्धेन तेन केदारत्रयमृत्खण्डैरेवाहन्यमानो मृतखण्डस्थगितमुख श्वासरोधान्मृत·, पश्चात् स पश्चात्ताप विदधानो महास्थाने गत्वा स्ववृत्तांतं कथयन्नुपशांतो न वेति तै पृष्टो नाद्यापि ममोपशांतिरिति वदन् द्विजैरपाङ्क्तेयश्चक्रे, एवं अनुपशांतकोपतया वार्षिकपर्वणि अकृतक्षामण· साध्वादिरपि उपशांतोपस्थितस्यैव मूल दातव्यं ॥ ५७ ॥

चतुर्मासकं स्थितानां इह निश्चयेन साधूनां साध्वीनां च अद्यैव पर्युषणादिने एव कक्कश उच्चैः शब्दरूपः, कटुको जकारमकारादिरूपो, विग्रहः कलहः समुत्पद्यते, तदा शैक्षो लघुः रात्निकं ज्येष्ठं क्षामयति, यद्यपि ज्येष्ठः सापराधस्तथापि लघुना ज्येष्ठः क्षमणीयो व्यवहारात्, अथाऽपरिणतधर्मत्वा-ल्लघुर्ज्येष्ठं न क्षमयति तदा किं कर्त्तव्यमित्याह—ज्येष्ठोऽपि शिक्षं क्षमयति, ततः क्षंतव्यं स्वयमेव, क्षामयितव्यः परः, उपशमितव्यं स्वयं, उपशमयितव्यः परः, शोभना मतिः सुमती रागद्वेषरहितता तत्पूर्वं या संपृच्छना, सूत्रार्थविषयः समाधिप्रश्नो वा, तद्बहुलेन भवितव्यं, येन सहाधिकरणमुत्पन्नमासीत्तेन सह निर्मलमनसा आलापादि कार्यमिति भावः, अथ द्वयोर्मध्ये यद्येकः क्षमयति, नापरस्तदा का गतिरित्याह—य उपशाम्यति अस्ति तस्याराधना, यो नोपशाम्यति नास्ति तस्याराधना, तस्मात् आत्मना उपशमितव्यं. तत् कुतो हेतोः हे पूज्य ! इति पृष्टे गुरुराह—उपशमप्रधानं श्रामण्यं श्रमणत्वं, अत्र दृष्टांतो यथा—सिंधुसौवीरदेशाधिपतिर्दशमुकुटबद्धभूपसेव्य उदयनराजो विद्युन्मालिसमर्पितश्रीवीरप्रतिमार्चनागतनीरोगीभूतगंधारश्राद्धार्पितगुटिकाभक्षणतो जातादद्भुतरूपायाः सुव-

र्णांगुलिकाया देवाधिदेवप्रतिमायुताया अपहर्तारं मालवदेशभूपं चतुर्दशनृपसेव्यं चंडप्रद्योतराजं देवाधिदेवप्रतिमाप्रत्यानयनोत्पन्नसंग्रामे बद्ध्वा पश्चादागच्छन् दशपुरे वर्षासु तस्थौ, वार्षिकपर्वणि च स्वयमुपवासं चक्रे, नृपादिष्टसूपकारेण भोजनार्थं पृष्टेन चंडप्रद्योतेन विपश्चिता श्राद्धस्य ममाप्यद्योपवास इति प्रोक्ते धूर्त्तसाधर्मिकेऽप्यस्मिन्नक्षमिते मम प्रतिक्रमणं न शुद्ध्यतीति तस्सर्वस्वप्रदानतस्तल्लाले मम दासीपतिरित्यक्षराच्छादनाय समुकुटपट्टदानतश्च श्रीउदयनराजेन चंडप्रद्योतः क्षमितोऽत्र श्रीउदयनराजर्षेराराधकत्वं, तस्यैवोपशांतत्वात् ॥ कचिच्चोभयोश्चाराधकत्वं, तथाहि—अन्यदा कौशाम्ब्यां सूर्यचन्द्रमसौ स्वविमानेन श्रीवीरं वन्दितुं समागच्छतः स्म, चंदना च दक्षत्वादस्तसमयं विज्ञाय स्वस्थानं गता, मृगावती च सूर्यचंद्रगमनात्तमसि विस्तृते सति रात्रिं विज्ञाय भीता उपाश्रयमागतेर्यापथिकीं प्रतिक्रम्य निद्राणां चंदनां प्रवर्तिनीं क्षम्यतां ममापराध इत्युक्तवती, चंदनापि भद्रे कुलीनायास्तवेदृशं न युक्तमित्युवाच, साप्यूचे भूयो नेदृशं करिष्ये इति पादयोः पतिता, तावता प्रवर्त्तिन्या निद्रागात्, तया च तथैव क्षामणेन केवलं प्राप्तं, सर्पसमीपात् करापसारणव्य-

पृच्छंति तस्याः केवलं ज्ञात्वा मृगावतीं क्षमयंती तिकरेण प्रबोधिता प्रवर्त्तिन्यपि कथं सर्पोऽज्ञायीति केवलमाससाद, तेनेदृशं मिथ्यादुःखकृतं देयं, न पुनः कुंभकारक्षुल्लकदृष्टांतेन, तथाहि—कश्चित् क्षुल्लको भांडानि काणीकुर्वन् कुंभकारेण निवारितो मिथ्यादुःकृतं दत्ते, न पुनस्ततो निवर्त्तते, ततः स्म कुंभकारोऽपि कर्करैः क्षुल्लकर्णमोटनं कुर्वन् पुनः पुनः क्षुल्लेन पीड्येऽहमित्युक्तोऽपि मुधा मिथ्यादुःकृतं ददौ ॥ ५९ ॥

चतुर्मासकं स्थितानां कल्पते साधूनां साध्वीनां च त्रीन् उपाश्रयान् गृहीतुं, तद्यथा-जंतुसंसक्त्यादिभयात्तत्र त्रिषु उपाश्रयेषु द्वौ पुनः पुनः प्रतिलेख्यौ दृष्टव्यौ इति भावः. साइज्जिधातुरास्वादने, ततः उपभुज्यमानोऽयमुपाश्रयस्तत्संबंधिनी प्रमार्जना, यतो यस्मिन्नुपाश्रये साधवस्तिष्ठंति तं प्रातः प्रमार्जयंति, पुनर्भिक्षां गतेषु साधुषु, पुनस्तृतीयप्रहरांते चेति वारत्रयं, ऋतुबद्धे वारद्वयं, असंसक्तेऽयं विधिः, संसक्ते च पुनः पुनः प्रमार्जयंति, शेषोपाश्रयद्वयं तु प्रतिदिनं दृशा पश्यंति, कोऽपि तत्र ममत्वं माकार्षीदिति तृतीयदिने च पादप्रोंछनेन प्रमार्जयंतीति, अत उक्तं " वेउव्विया

"किलेइत्ति " ॥ ६० ॥

चतुर्मासकं स्थितानां साधुसाध्वीनां च कल्पते अन्यतरां दिशं पूर्वादिकां, अनुदिश आग्ने-यादिकां विदिशं अवरुध्य उद्दिश्य, अहममुकां दिश अनुदिश वा यामीत्यन्यसाधुभ्यः कथयित्वा भक्तपान गवेषयितु तत् कुतो हेतोः हे पूज्य! इति पृष्टे गुरुराह—वसनंति प्राय' श्रमणा भगवंतो वर्षासु तपःसंप्रयुक्ता· प्रायश्चित्तवहनार्थं संयमार्थं वा षष्ठादितपश्चारिणो भवंति, ते च तपस्विनो दु-र्बलास्तपसैव क्लांशगात्राश्च, अत एव क्लांनाः संतः कदाचिन्मूर्छेयुः प्रपतेयुर्वा, ततः तस्यामेव दिशि अनु-दिशि वा उपाश्रयस्था' श्रमणा भगवतः सारां कुर्वंति गवेषयति, अकथयित्वा गतांस्तु कुत्र गवेषयंति.

चतुर्मासकं स्थितानां कल्पते साधूनां साध्वीनां च वर्षाकल्पौषधवैद्यार्थंग्लानसाराकरणार्थं वा यावच्चत्वारि पंच योजनानि गत्वा प्रतिनिवर्त्तितु कल्पते, न तु तत्र स्थातु कल्पते, स्वस्थानं प्राप्तु-मक्षमश्चेत्तदा तस्यांतरापि वस्तुं कल्पते, न पुनस्तत्रैव, एवं हि वीर्याचाराराधनं स्यादिति, यत्र दिने वर्षाकल्पादि लब्धं तद्दिनरात्रिं तत्रैव तस्य नातिक्रमयित्तुं कल्पते, कार्ये जाते सद्य एव

बहिर्निर्गत्य तिष्ठेदिति जावः ॥ ६२ ॥

इति रूपदर्शने, तं पूर्वोपदर्शितं सांवत्सरिकं वर्षारात्रिकं स्थविरकल्पं यथा सूत्रे जणितं तथा, न तु सूत्रविरुद्धं, यथा अत्रोक्तं तथा करणे कल्पोऽन्यथा त्वकल्प इति यथाकल्पं, एतत्कुर्वतश्च ज्ञानादित्रयलक्षणो मार्ग इति यथामार्गं, अत एव यथातथ्यं सत्यमित्यर्थः, सम्यग् यथावस्थितं उपलक्षणत्वात्कायवाङ्मनसैः स्पृष्ट्वा आसेव्य, पालयित्वा अतिचारेज्यो रक्षयित्वा, शोजयित्वा विधिवत्करणेन, तीरयित्वा यावज्जीवं आराध्य, कीर्त्तयित्वा अन्येज्य उपदिश्य, आराध्य यथोक्तकरणेन, आज्ञया जिनोपदेशेन, यथा पूर्वं पालितं तथा पश्चात् परिपाल्य संत्येके ये अत्युत्तमया तदनुपालनया श्रमणा निर्ग्रंथाः तस्मिन्नेव जवग्रहणे जवे सिद्ध्यंति कृतार्था जवंति, बुद्ध्यंते केवलज्ञानेन, मुच्यंते कर्मपंजरात्, परिनिर्वांति कर्मकृतसर्वतापोपशमनात् शीतीभवंति, सर्वदुःखानां शारीरमानसानां अंतं कुर्वंति. संत्येके ये उत्तमया तु तत्पालनया द्वितीयजवग्रहणे सिद्ध्यंति, यावत् अंतं कुर्वंति. संत्येके ये मध्यमया तत्पालनया तृतीयजवे यावत् अंतं कुर्वंति, जघन्ययापि एतदाराध-

नया सप्ताष्टभवांस्तु पुनः नातिक्रामंतीति भावः ॥ ६३ ॥

तस्मिन् काले चतुर्थारकपर्यंते तस्मिन् समये श्रमणो भगवान् महावीरो राजगृहे नगरे समवसरणावसरे गुणशैलनामचैत्ये बहूनां श्रमणानां, बहूनां श्रमणीनां, बहूनां श्रावकाणां, बहूनां श्राविकाणां, बहूनां देवानां, बहूनां देवीनां, मध्यगत एव, न तु कोणके प्रविश्यप्रच्छन्नतयेति भावः, एवमाख्याति कथयति, एव भाषते वाग्योगेन, एवं प्रज्ञापयति फलकथनेन, एव प्ररूपयति, दर्पणे इव श्रोतृहृदये संक्रामयति पर्युषणाकल्पो नाम अध्ययनं, अर्थेन प्रयोजनेन सहितं, न तु निःप्रयोजनं, सहेतुकं, हेतवो निमित्तानि, यथा गुरूणां पृष्ट्वा सर्वं कर्तव्यं, तत् केन हेतुना? यत आचार्याः प्रत्यपाय जानंतीत्यादयो हेतवस्तैः सहितं, कारण अपवादो यथा ' अंतरावि से कप्पइ ' त्यादिस्तेन सहितं, सूत्रसहितं, अर्थसहितं, उभयसहितं च व्याकरणं पृष्टार्थकथनं तेन सहितं सव्याकरणं, भूयोभूय उपदर्शयति, इत्यहं ब्रवीमीति श्रीभद्रबाहुस्वामी स्वशिष्यान् प्रतीदमुवाचेति ॥ इति ॥ ६४ ॥

॥ इति श्रीपर्युषणाकल्पो नाम दशाश्रुतस्कंधस्याष्टममध्ययनं समर्थितं ॥

॥ इति श्रीजगद्गुरुभट्टारकश्रीहीरविजयसूरीश्वरशिष्यरत्नमहोपाध्यायश्रीकीर्त्तिविजयगणी-शिष्योपाध्यायश्रीविनयविजयगणीविरचितायां कल्पसुबोधिकायां सामाचारीव्याख्यानं संपूर्णं ॥

॥ समाप्तश्चायं सामाचारीव्याख्याननामा तृतीयोऽधिकारः ॥

---

अथ प्रशस्तिः—आसीद्धीरजिनेंद्रपट्टपदवीकल्पद्रुमः कामदः । सौरभ्योपहृतप्रबुद्धमधुपः श्रीहीरसूरीश्वरः ॥ शास्त्रोत्कर्षमनोरमस्फुरद्गुरुच्छायः फलप्रापक—श्चंचन्मूलगुणः सदातिसुमनाः श्रीमान्मरुत्पूजितः ॥ १ ॥ यो जीवाभयदानडिंडिममिषात् स्वीयं यशोडिंडिमं । षण्मासान् प्रतिवर्षमुग्रमखिले भूमंडलेऽवीवदत् ॥ भेजे धार्मिकतामधर्मरसिको म्लेच्छाग्रिमोऽकब्बरः । श्रुत्वा यद्वदनाद-नाविलमतिर्धर्मोपदेशं शुभं ॥ २ ॥ तत्पट्टोन्नतपूर्वपर्वतशिरःस्फूर्त्तिक्रियाहर्मणिः । सूरिः श्रीविजयादिसेनसुगुरुर्भव्येष्टचिंतामणिः ॥ शुभ्रैर्यस्य गुणैरिवानघघनैरावेष्टितः शोभते । भूगोलः किल यस्य

मर्त्यं क. दाम' सद्गमस्य । नो चित्रं यच्चरित्रं जगति जनमनः कस्य चित्रीयते स्म ॥ चक्राणा मूर्खमुख्यानपि विबुधमणीन् हस्तसिद्धिर्यदीया । चिंतारत्नेन नेदं शिथिलयति सदा यस्य पादप्रसाद. ॥ ए ॥ आबाल्यादपि यः प्रसिद्धमहिमा वैरंगिकग्रामणी. । पृष्टः शाब्दिकपङ्क्तिषु प्रतिजनैर्जय्यो न यस्तार्किकै ॥ सिद्धांतोदधिमंदरः कविकलाकौशल्यकीर्त्युद्भवः । शश्वत्सर्वपरोपकाररसिकः संवेगवारानिधि' ॥ १० ॥ विचाररत्नाकरनामधेय–प्रश्नोत्तराद्यद्भुतशास्त्रवेधा. ॥ अनेकशास्त्रार्णवशोधकश्च । यः सर्वदैवाऽजवदप्रमत्त । ११ । तस्य स्फुरदुरुकीर्त्ते–र्वाचककीर्त्तिविजयपूज्यस्य ॥ विनयविजयो विनेयः । सुबोधिकां व्यरचयत्कल्पे ॥ १२ ॥ चतुर्भिः कलापक ॥ समशोधयस्तथैनां । पण्डितसंविग्नसहृदयवतंसा ॥ श्रीविमलहर्षवाचक–वंशे मुक्तामणिसमाना. ॥ १३ ॥ धिषणा निर्जितधिषणाः । सर्वत्र प्रसृतकीर्त्तिकर्पूरा. ॥ श्रीभावविजयवाचक–कोटीरा शास्त्रवसुनिकषा' ॥ १४ ॥ युग्मं ॥ रसशशिरसनिधिवर्षे । ज्येष्ठे मासे समुज्ज्वले पक्षे ॥ गुरुपुष्ये यत्नोऽय । सफलो जज्ञे द्वितीयायां ॥ १५ ॥ श्रीरामविजयपण्डित–शिष्यश्रीविजयविबुधमुख्यानां । अभ्यर्थनापि हेतु–र्विज्ञेयोऽस्या' कृतौ वृत्तेः ॥ १६ ॥ यावत्-

कीर्त्तिसुदृशः क्रीडाकृते कंदुकः ॥ ३ ॥ येनाकब्बरपर्षदि प्रतिभटान्निर्जित्य वाग्वैभवैः । शौर्याश्चर्य-कृता वृता परिवृता लक्ष्म्या जयश्रीकनी ॥ चित्रं मित्र किमत्र चारुमहसस्तेनास्य वृद्धा सती । कीर्त्तिः पत्यपमानशंकितमना याता दिगंतानितः ॥ ४ ॥ विजयतिलकसूरिर्भूरिसूरिप्रशस्यः । मस-जनि मुनिनेता तस्य पट्टेऽब्धचेताः ॥ हरहसितहिमानिहंसहारोज्ज्वलश्री–स्त्रिजगति वरिवर्त्तिस्फुर्त्ति-युक् यस्य कीर्त्तिः ॥ ५ ॥ तत्पट्टे जयति क्षितीश्वरततिस्तुत्यांह्रिपंकेरुहः । सूरिर्दूरितदुःखवृंदविजया-नंदः क्षमाभृद्विभुः ॥ यो गौरैर्गुरुभिर्गुणैर्गणिवरं श्रीगौतमं स्पर्द्धते । लब्धीनामुदधिर्दधीयितयशाः शास्त्राब्धिपारं गतः ॥ ६ ॥ यच्चारित्रमखिन्नकिन्नरगणैर्जेगीयमानं जग–ज्जाग्रज्जन्मजराविपत्तिहरणं श्रुत्वा जयंतीयितुं ॥ वांछापूर्त्तिमियर्त्ति युग्ममित्र तद्वेत्ते सहस्रं स्पृहा–वैयग्र्यं गुणरागिणोऽभिमगु-णग्रामाभिरामात्मनः ॥ ७ ॥

किंच—श्रीहीरसूरिसुगुरोः प्रवरौ विनेयौ । जातौ शुचौ सुरगुरोरिव पुष्पदंतौ ॥ श्रीसोमसो-मविजयाभिधवाकेंद्रः । सत्कीर्त्तिकीर्त्तिविजयाभिधवाचकश्च । ८ । सौभाग्यं यस्य भाग्यं कलयितुम-

ऋारीमृगाक्षी धरणिधरजर श्रीफलैः पूर्णगर्व । चंचत्कृष्णौघदर्भ निपधगिरिमहाकुंकुमामत्र चित्रं ॥ जम्बूद्वीपाभिधानं हिमगिरिरजतं मंगलस्थालमेत—द्यावत् तावत् सुबोधा विबुधपरिचिता नंदतात् कल्पवृत्ति. ॥ १७ ॥ यावद्व्योमतरंगिणीजलमिलत्कल्लोलमालाकुलं । दिग्दन्तावलकीर्णपुष्करकणासेकप्रणष्टश्रमं ॥ ज्योतिश्चक्रमनुक्रमेण नभसि भ्राम्यत्यजस्रं क्षितौ । तावन्नदतु कल्पसूत्रविवृतिर्विद्वज्जनैराश्रिता ॥ १८ ॥ इति श्रीकल्पसुबोधिकावृत्तिः संपूर्णा ॥ ग्रंथाग्रंथ ( ७०५ ) नवानामपि व्याख्यानानां ग्रंथाग्रंथ ( ६५०० ) श्रीरस्तु

॥ इति श्रीसुबोधिकानामकल्पसूत्रटीका समाप्ता गुरुश्रीमच्चारित्रविजयसुप्रसादात् ॥

॥ इति श्रीकल्पसूत्रसुबोधिकाटीका समाप्ता ॥